SRI VENKATESVARA ORIENTAL SERIES—No. 54

[Edit]or:—Prof. P. V. RAMANUJASWAMI, M.A.



SRI RANGARAMANUJA'S

# SVETASVATARADYUPANISHAD PURUSHASUKTA-Bhasya

WITH

INTRODUCTION, TRANSLATION AND NOTES

PART I—TEXT

WITH SANSKRIT INTRODUCTION AND NOTES



EDITED BY

Siromani Uttamur T. VIRARAGHAVACHARYA

PUBLISHED UNDER THE AUTHORITY OF

SRI C. ANNA RAO, B.A.

EXECUTIVE OFFICER

*on behalf of the Board of Trustees, T. T. Devasthanams, Tirupati*




PRINTED AT

TIRUMALAI-TIRUPATI DEVASTHANAMS PRESS

TIRUPATI

1955

श्रीवेङ्कटेश्वरप्राच्यग्रन्थमाला—सं. १

सम्पादकः—परवस्तु वेङ्कटरामानुजस्वामी, एम्. ए.



# श्री वे ङ्क टे श का व्य क ला पः



श्रीवेङ्कटेश्वरप्राच्यविद्याविमर्शालयपुस्तकशालाध्यक्षेण

मीमांसार्णव मीमांसाकेसरि पूर्वोत्तरतन्त्रप्रदीप पण्डितराज

देशिक तिरुमलै ताताचार्य शिरोमणिना M. O. L.

सम्पादितः



१९४३

तिरुपति

तिरुमलैतिरुपतिदेवस्थानमुद्रणालये

मुद्रितः



मूल्यम् रू. ४—०—०



अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥

---

श्रीवेङ्कटेश्वरप्राच्यग्रन्थमालायां प्रथमोऽयं

## श्रीवेङ्कटेशकाव्यकलापः

श्रीवेङ्कटेश्वरप्राच्यविद्याविमर्शालय-
प्रवर्तनकैङ्कर्यधुरन्धरैः

**श्रीवेङ्कटेश्वरदिव्यचरणारविन्दयोः**

सभक्तिप्रकर्षं

**समर्पितः**

# प्र स्ता व:

भगवन्तं वेङ्कटाचलाधीश्वरं श्रीनिवासं विषयीकृत्य प्रवृत्ताः काश्चन कृतयः 'श्रीवेङ्कटेशकाव्यकलाप'नाम्ना इह सङ्कलय्य प्रकाश्यन्ते । एवमेतत्प्रकाशनं कर्तव्य-मिति मतिः प्रथमं, अस्य विमर्शालयस्य द्वितीयनेतृ (डैरेक्टर्) भूतानाम् अद्य कीर्तिशेषाणां सरस्वतीहृदयालङ्कारादिबहुविरुदभाजां एम्. कृष्णमाचार्याणाम् एतत्स्थान-प्राप्तेश्चिरात् पूर्वमेव अभूत् । तदुपक्रमस्तु अत्र आगतानां तेषां सुकर आसीत् । यद्यपि मुद्रितपूर्वा अमुद्रिता वा प्राचीनैः कृता अद्यतनैर्वा सर्वा एव श्रीवेङ्कटेशविषयाः कृतयोऽत्रान्तर्भावनीया इति तेऽमन्यन्त; तथाऽपि स महानुद्देशोऽनन्तरं परित्यक्तव्य आपतत् यस्मात् पत्रदुर्भिक्षं तथा महत् ।

त्रिभागेऽस्मिन् सङ्कलने आद्ये भागे निवेशिताश्चतस्रोऽपि कृतयः पूर्वं बहुधा मुद्रिताः । तथापि तासां प्रत्यहं भगवतः सन्निधौ अनुसन्धीयमानत्वात् तत्र बहूनामादरः स्यादिति, तदनन्तर्भावे अस्य प्रकाशनस्यैव न्यूनता प्रायः सर्वैरुद्भाव्येतेति चाभिप्रेत्य ता इह नोपेक्षिताः ।

द्वितीयभागे दयाशतकं श्रवणानन्दे प्रथमशतकं पद्मावतीगद्यं श्रीनिवासगद्यम् इत्येतच्चतुष्टयवर्जं सर्वमन्यदिदम्प्रथमतया मुद्रितम् । तत्र एकद्वानि विना स्तोत्रान्त-राणि सर्वाणि मद्रराजकीयलिखितकोशागारे रक्ष्यमाणानां मातृकाणां प्रतिरूपं सम्पाद्य मुद्रितानि । एतदर्थं संविधेयं सर्वं श्री एम्. कृष्णमाचार्यैस्तज्जीवितकाल एव संविहितम् । एषु श्रीनिवासगुणाकरस्य नवतिशतमेव श्लोका उपलब्धाः । तेषु चरमान् सप्त वर्जयित्वा इतरेषां सर्वेषां प्रतिश्लोकमधस्तालिखितं व्याख्यानमप्यु-पलब्धम् । तस्योपक्रमे निर्देशात् एतद्व्याख्यानकारस्य वरदाचार्य इति नामधेयमिति ज्ञायते । अनेन 'विस्तरस्तु सिद्धाञ्जने द्रष्टव्यः' इत्यादिरीत्या सिद्धाञ्जननामा कश्चिद् ग्रन्थो निर्दिश्यते ।

"श्रीनिवासगुणाकरव्याख्या" इत्येवमेव कृतनिर्देशं क्वचित्क्वचित् पतित-ग्रन्थं व्याख्यानान्तरमप्युपलभ्यते। तत्रत्यैः

"इति श्रीनैध्रुवकाश्यपान्वयकुलतिलकवादिकण्ठीरवाचार्य-कुलावतंसवेङ्कटाचार्यसूनुना तच्चरणकमलपरायणेन तत्कृपाल-ब्धमायावादिमदगजकण्ठीरवापरनामधेयेन रामानुजसूरिणा विरचितायां श्रीनिवासगुणाकरव्याख्यायां सिद्धाञ्जना-ख्यायां प्रथमः सर्गः"

"इति..................................सिद्धाञ्जनाख्यायां कृष्णलीलाविहारो नाम द्वितीयः सर्गः।" "तृतीयः सर्गः"

"श्रीमन्नैध्रुव.........................विरचिते श्रीनिवास-गुणाकरव्याख्याने चतुर्थः सर्गः"।

इति सर्गसमाप्तिवाक्यैः श्रीनिवासगुणाकरः सर्गात्मना विभक्तो बहुसर्गो महान् ग्रन्थ इति, वरदाचार्येण स्वव्याख्याने सिद्धाञ्जनमिति निर्दिष्टो ग्रन्थः अयमेव व्याख्यानग्रन्थ इति, अस्य कर्ता मायावादिमदगजकण्ठीरवापरनामधेयो रामानुजसूरिरिति च स्फुटमव-गम्यते। अतीव नामेदं शोचनीयं यदेतद्व्याख्यानमातृकायां मूलश्लोका न लिखिताः। लिखितत्वे नैव तेषामेवमात्यन्तिको विनाशोऽभविष्यत्। सिद्धाञ्जनमातृकायामेव उपरि वरदाचार्यकृतस्य रामानुजसूरिविरचितग्रन्थान्तरव्याख्यानस्य एवमुपक्रमो दृश्यते—

"अथ भगवान् अभिनवरामानुजार्याभिधानो मायावादि-मदगजकण्ठीरवाचार्यः सर्वलोकजीवनार्थं वेङ्कटाचलमाहात्म्यं काव्यरूपेण "श्रीभृत्सद्वृषगोत्रे" त्यारभ्य "त्यक्ताऽन्य-सङ्गं पपौ" इत्यन्तं कृत्वा, आदौ श्रीवेङ्कटाचलपतिवर्णनं श्रीनिवासावतारं........धेनुक्षीराभिषेकं........प्रभुकुलाल-समागमं मायावादखण्डनं षोडशदलपद्मबन्धं श्रीकृष्णलीला-

विहारं अचलवर्णनं चन्द्रादिवर्णनम्, वायुनिन्दा कोकिल-
निन्दा चन्द्रनिन्दा मन्मथोपालम्भनं मन्मथस्तुतिः राजानं
प्रति शुकप्रेषणं राजमहिषीसमागमं(मः) भगवदनुग्रहं(हः)
इत्यादिकं, पुनः पुरवर्णनं गिरिवर्णनं च गद्यरूपेण कृत्वा
काव्यं परिसमाप्य पुनरपि..................भगवन्नाम्ना[म]
पर्याप्तामृतत्वात् स्तोतुकामः............ ''

इति । अनेन, न परं श्रीनिवासगुणाकरप्रतिपाद्यविषयविज्ञानं स्थूलमस्माकं भवति अपितु य एव मायावादिमदगजकण्ठीरवो रामानुजसूरिः व्याख्यानस्य सिद्धाञ्जनस्य कर्ता स एव साक्षात् मूलस्य श्रीनिवासगुणाकरकाव्यस्यापि कर्तेत्यपि निश्चयो भवति । सुबोधिनीनामकं श्रीभाष्यार्थसंग्रहरूपं ग्रन्थान्तरमप्यनेन कृतमस्ति यस्यैकदेशः अस्यां पुस्तकशालायां रक्ष्यते । अस्य अभिजनः 'तिरुमळिशै' इति प्रसिद्धं स्थलमिति च ज्ञायते । अस्य रामानुजसूरेः अनुजः कश्चिदासीद् वेङ्कटार्यो नाम । तस्य पुत्रोऽयं वरदाचार्य इत्यपि अस्यैवोक्त्याऽवगम्यते । लालित्यलिप्सया व्याख्यानान्तरकरणेऽस्य प्रवृत्तिरिति भाति । परन्तु उपलब्धेऽस्मिन् व्याख्याने शब्दाशुद्धयो बहुलं दृश्यन्ते । तासां कार्त्स्न्येन शोधनस्याशक्यत्वात् व्याख्यानं विना मूलस्य शैलीकाठिन्येन दुरधिगमार्थत्वात् व्याख्यानान्तरस्य मध्येमध्ये ग्रन्थपातेन दुस्थितत्वाच्च प्रायेण यथास्थितं इदमेव व्याख्यानमिह आदृतम् । अत्रत्यं शैलीकाठिन्यं, पदेपदेऽभिव्यज्यमानं कर्तुर्गाढं तीक्ष्णं विपुलं च पाण्डित्यं, अतिशयितमुत्प्रेक्षाकौशलं च मुहुरस्माकं नैषधीयचरितकारस्य श्रीहर्षस्य स्मृतिं जनयन्ति । एवं नारिकेलपाकित्वेऽपि चमत्कारातिशयस्य जायमानत्वात् काव्यत्वमिह सुस्थितम् । अत्र मुद्रितस्य उज्ज्वलवेङ्कटनाथस्तोत्रव्याख्यानस्य कर्तारः श्री. उ. वे. पुरिशै कृष्णमाचार्या एवमाहुः—

"स्तोत्रं चेदं श्रीमदुज्ज्वलवेङ्कटनाथविषयकरतिभावस्य
प्राधान्येन व्यज्यमानत्वात् ध्वनावन्तर्भवति । रतिभावानु-
गुण्येन ज्ञानशक्त्यादीनां कल्याणगुणानामभिव्यज्यमानत्वात्
तदंशे गुणीभूतव्यङ्ग्यताऽपि । सर्वेष्वपि स्तोत्रेषु इयमेव
रीतिरनुसर्तव्या ।"

इति। एतेन 'श्रीवेङ्कटेशकाव्यकलापः' इति नाम्न औचित्यं प्रख्यापितम्।

श्रीवेङ्कटाध्वरिणः कृतौ श्रवणानन्दे शतकचतुष्टयमुपलभ्यते। तत्र प्रथमं द्वितीयं च श्रीनिवासविषयम्। अनयोराद्यं मैसूर्–श्रीमन्महाराजसंस्कृत-महापाठशालापत्रिकायां खण्डशो मुद्रितपूर्वम्। तथाऽपि मनसालकट्टै. श्री. उ. वे. कवितार्किकसिंहं गोविन्दाचार्यैरुपकृतस्य परिष्कृतस्य मातृकाविशेषस्य, अत्रैवास्मत्पुस्त-कालये स्थितस्य मातृकान्तरस्य च पर्यालोचनेन बहुषु स्थलेषु समीचीनपाठान्त-रनिवेशनादिरूपपरिष्कारकरणस्यावश्यकत्वप्रतिभानात् द्वितीयशतकस्य अत्रत्ये एकस्मिन् लिखितकोशे उपलभ्यमानस्य अवश्यमुद्रणीयत्वे आदित एव मुद्रणस्य औचित्यप्रतीतेश्च तदप्यत्रान्तर्भावितम्। शतकाभिधानस्यापि द्वितीयभागस्य चतुर-शीतिरेव श्लोका उपलभ्यन्ते। 'इति द्वितीयशतकम्' इति समाप्तिवाक्यं तु दृश्यते। किञ्चिन्न्यूनमप्यन्यूनप्रायमिव।

अत्रत्यायां मातृकायां तृतीयमपि शतकं शिथिलमलिनपत्रं अन्ते त्रुटित-कतिपयश्लोकमुपलभ्यते। तत्तु श्रीराघवविषयमिति पृथक् यथासौकर्यं पश्चान्मुद्र-यिष्यते। चरमं चतुर्थं शतकं श्रीवरदराजविषयं आन्ध्रलिप्यां भाषानुवादसहितं श्री. उ. वे. गोविन्दाचार्यैः प्रकाशितम्।

इहान्ते योजिता श्रीनाममौक्तिकमाला अमुद्रितपूर्वा। अस्या मातृका मद्रराजकीयप्राच्यलिखितपुस्तकशालाप्रधानपण्डितेन 'विदुषा' श्री. टि. एन्. वेङ्कटाचार्येण चिरात् स्वस्मिन् रक्षिता अत्र प्रकाशनाय सादरमर्पिता। अस्याः कर्ता साक्षात् यामुनाचार्य इति आरम्भे कृतेन निर्देशेन तद्विषय 'तनियन्' श्लोकपाठेन च प्रतीयते। परन्तु अस्याः कृतेः स्वरूपं पर्यालोचयन्तः श्रीयामुनाचार्यकृतानां प्रबन्धानामष्टत्वेन आचार्यचरणैः कृतं परिगणनं स्मरन्तश्च न वयमत्र संशयमतिवर्तामहे।

अत्र चरमे तृतीये भागे मुद्रितं दशोपनिषद्भाष्यकारश्रीरङ्गरामानुजमुनि-विरचितं श्रीशठकोपगाथाव्याख्यानं ग्रन्थाक्षरैर्मुद्रितपूर्वम्। न तु क्वचिन्नागराक्षरैः।

एतन्मुद्रणोपयोगितया लेखनशोधनादिहेतोरपेक्षितं सर्वं साहाय्यं एतत्पुस्तकशालापण्डिताभ्यां न्यायवेदान्तशिरोमणिना श्री. ना. सु. राजगोपालताताचार्येण न्यायमीमांसाशिरोमणिना श्री. को. शठकोपाचार्येण च सम्पन्नम् ।

20. 8. 1943.
Tirupati.

D. T. TATACHARYA

# अत्र मुद्रिताः कृतयः

## प्रथमो भागः ।

---



## द्वितीयो भागः ।

## तृतीयो भागः





## ॥ श्रीवेंकटेशकाव्यकलापः ॥

### ॥ श्रीवेंकटेशसुप्रभातम् ॥

श्रीवादिभीकरमहागुरुभिरनुगृहीतम्

—⁂—

कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ १ ॥

उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज ।
उत्तिष्ठ कमलाकान्त त्रैलोक्यं मङ्गलं कुरु ॥ २ ॥

मातस्समस्तजगतां मधुकैटभारेः
वक्षोविहारिणि मनोहरदिव्यरूपे ।
श्रीस्वामिनि श्रितजनप्रियदानशीले
श्रीवेंकटेशदयिते तव सुप्रभातम् ॥ ३ ॥

तव सुप्रभातमरविन्दलोचने
भवतु प्रसन्नमुखचन्द्रमण्डले ।
विधिशंकरेन्द्रवनिताभिरर्चिते
वृषशैलनाथदयिते दयानिधे ॥ ४ ॥

अत्र्यादिसप्तऋषयस्समुपास्य सन्ध्याम्
आकाशसिन्धुकमलानि मनोहराणि ।
आदाय पादयुगमर्चयितुं प्रपन्नाः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ५ ॥

पञ्चाननाब्जभवषण्मुखवासवाद्याः
त्रैविक्रमादिचरितं विबुधाः स्तुवन्ति ।
भाषापतिः पठति वासरशुद्धिमारात्
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ६ ॥

ईषत्प्रफुल्लसरसीरुहनारिकेल-
पूगद्रुमादिसुमनोहरपालिकानाम् ।
आवाति मन्दमनिलस्सह दिव्यगन्धैः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ७ ॥

उन्मील्य नेत्रयुगमुत्तमपञ्जरस्थाः
पात्रावशिष्टकदलीफलपायसानि ।
भुक्त्वा सलीलमथ केलिशुकाः पठन्ति
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ८ ॥

तन्त्रीप्रकर्षमधुरस्वनया विपञ्च्या
गायत्यनन्तचरितं तव नारदोऽपि ।
भाषासमग्रमसकृत्करचाररम्यं
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ९ ॥

भृङ्गावली च मकरन्दरसानुविद्ध-
झंकारगीतनिनदैस्सह सेवनाय ।
निर्यात्युपान्तसरसीकमलोदरेभ्यः
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ १० ॥

योषागणेन वरदध्नि विमथ्यमाने
घोषालयेषु दधिमन्थनतीव्रघोषाः ।

रोषात्कलिं विदधते ककुभश्च कुम्भाः
    शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ ११ ॥

पद्मेशमित्रशतपत्रगतालिवर्गाः
    हर्तुं श्रियं कुवलयस्य निजाङ्गलक्ष्म्या ।
भेरीनिनादमिव बिभ्रति तीव्रनादं
    शेषाद्रिशेखरविभो तव सुप्रभातम् ॥ १२ ॥

श्रीमन्नभीष्टवरदाखिललोकबन्धो
    श्रीश्रीनिवास जगदेकदयैकसिन्धो ।
श्रीदेवतागृहभुजान्तरदिव्यमूर्ते
    श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १३ ॥

श्रीस्वामिपुष्करिणिकाप्लवनिर्मलाङ्गाः
    श्रेयोर्थिनो हरविरिञ्चिसनन्दनाद्याः ।
द्वारे वसन्ति वरवेत्रहतोत्तमाङ्गाः
    श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १४ ॥

श्रीशेषशैलगरुडाचलवेंकटाद्रि-
    नारायणाद्रिवृषभाद्रिवृषाद्रिमुख्याम् ।
आख्यां त्वदीयवसतेरनिशं वदन्ति
    श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १५ ॥

सेवापराश्शिवसुरेशकृशानुधर्म-
    रक्षोम्बुनाथपवमानधनाधिनाथाः ।
बद्धाञ्जलिप्रविलसन्निजशीर्षदेशाः
    श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १६ ॥

धाटीषु ते विहगराजमृगाधिराज-
नागाधिराजगजराजहयाधिराजाः ।
स्वस्वाधिकारमहिमादिकमर्थयन्ते
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १७ ॥

सूर्येन्दुभौमबुधवाक्पतिकाव्यसौरि-
स्वर्भानुकेतुदिविषत्परिषत्प्रधानाः ।
त्वद्दासदासचरमावधिदासदासाः
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १८ ॥

त्वत्पादधूलिभरितस्फुरितोत्तमाङ्गाः
स्वर्गापवर्गनिरपेक्षनिजान्तरङ्गाः ।
कल्पागमाकलनयाऽऽकुलतां लभन्ते
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ १९ ॥

त्वद्गोपुराग्रशिखराणि निरीक्षमाणाः
स्वर्गापवर्गपदवीं परमां श्रयन्तः ।
मर्त्या मनुष्यभुवने मतिमाश्रयन्ते
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २० ॥

श्रीभूमिनायक दयादिगुणामृताब्धे
देवाधिदेव जगदेकशरण्यमूर्ते ।
श्रीमन्ननन्तगरुडादिभिरर्चिताङ्घ्रे
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २१ ॥

श्रीपद्मनाभ पुरुषोत्तम वासुदेव
वैकुण्ठ माधव जनार्दन चक्रपाणे ।

श्रीवत्सचिह्न शरणागतपारिजात
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २२ ॥

कन्दर्पदर्पहरसुन्दरदिव्यमूर्ते
कान्ताकुचाम्बुरुहकुड्मललोलदृष्टे ।
कल्याणनिर्मलगुणाकरदिव्यकीर्ते
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २३ ॥

मीनाकृते कमठ कोल नृसिंह वर्णिन्
स्वामिन् परश्वथतपोधन रामचन्द्र ।
शेषांशराम यदुनन्दन कल्किरूप
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २४ ॥

एलालवङ्गघनसारसुगन्धतीर्थं
दिव्यं वियत्सरिति हेमघटेषु पूर्णम् ।
धृत्वाऽद्य वैदिकशिखामणयः प्रहृष्टाः
तिष्ठन्ति वेंकटपते तव सुप्रभातम् ॥ २५ ॥

भास्वानुदेति विकचानि सरोरुहाणि
संपूरयन्ति निनदैः ककुभो विहङ्गाः ।
श्रीवैष्णवास्सततमर्थितमङ्गलास्ते
धामाश्रयन्ति तव वेंकट सुप्रभातम् ॥ २६ ॥

ब्रह्मादयस्सुरवरास्समहर्षयस्ते
सन्तस्सनन्दनमुखास्तव योगिवर्याः ।
धामान्तिके तव हि मङ्गलवस्तुहस्ताः
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २७ ॥

लक्ष्मीनिवास निरवद्यगुणैकसिन्धो
संसारसागरसमुत्तरणैकसेतो ।
वेदान्तवेद्यनिजवैभव भक्तभोग्य
श्रीवेंकटाचलपते तव सुप्रभातम् ॥ २८ ॥

इत्थं वृषाचलपतेरिह सुप्रभातं
ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः ।
तेषां प्रभातसमये स्मृतिरङ्गभाजां
प्रज्ञां परार्थसुलभां परमां प्रसूते ॥ २९ ॥

॥ इति श्रीवेंकटेशसुप्रभातम् ॥

## ॥ श्रीवेंकटेशस्तोत्रम् ॥

श्रीवादिभीकरमहागुरुभिरनुगृहीतम्

कमलाकुचचूचुंककुङ्कुमतो
नियतारुणितातुलनीलतनो ।
कमलायतलोचन लोकपते
विजयीभव वेंकटशैलपते ॥ १ ॥

सचतुर्मुखषण्मुखपञ्चमुख-
प्रमुखाखिलदैवतमौलिमणे ।
शरणागतवत्सल सारनिधे
परिपालय मां वृषशैलपते ॥ २ ॥

अतिवेलतया तव दुर्विषहै:
अनुवेलकृतैरपराधशतै: ।
भरितं त्वरितं वृषशैलपते
परया कृपया परिपाहि हरे ॥ ३ ॥

अधिवेंकटशैलमुदारमते:
जनताभिमताधिकदानरतात् ।
परदेवतया गदितान्निगमै:
कमलादयितान्न परं कलये ॥ ४ ॥

कलवेणुरवावशगोपवधू-
शतकोटिवृतात्स्मरकोटिसमात् ।
प्रतिवल्लविकाभिमतात्सुखदात्
वसुदेवसुतान्न परं कलये ॥ ५ ॥

अभिरामगुणाकर दाशरथे
जगदेकधनुर्धर धीरमते ।
रघुनायक राम रमेश विभो
वरदो भव देव दयाजलधे ॥ ६ ॥

अवनीतनयाकमनीयकरं
रजनीकरचारुमुखाम्बुरुहम् ।
रजनीचरराजतमोमिहिरं
महनीयमहं रघुराममये ॥ ७ ॥

सुमुखं सुहृदं सुलभं सुखदं
स्वनुजं च सुकायममोघशरम् ।
अपहाय रघूद्वहमन्यमहं
न कथञ्चन कञ्चन जातु भजे ॥ ८ ॥

विना वेंकटेशं न नाथो न नाथः
सदा वेंकटेशं स्मरामि स्मरामि ।
हरे वेंकटेश प्रसीद प्रसीद
प्रियं वेंकटेश प्रयच्छ प्रयच्छ ॥ ९ ॥

अहं दूरतस्ते पदाम्भोजयुग्म-
प्रणामेच्छयाऽऽगत्य सेवां करोमि ।
सकृत्सेवया नित्यसेवाफलं त्वं
प्रयच्छ प्रयच्छ प्रभो वेंकटेश ॥ १० ॥

अज्ञानिना मया दोषानशेषान्विहितान् हरे ।
क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे ॥

॥ इति श्रीवेंकटेशस्तोत्रम् ॥

# ॥ श्रीवेंकटेशप्रपत्तिः ॥

श्रीवादिभीकरमहागुरुभिरनुगृहीता

ईशानां जगतोऽस्य वेंकटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षस्स्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम् ।
पद्मालंकृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥

श्रीमन् कृपाजलनिधे कृतसर्वलोक
सर्वज्ञ शक्त नतवत्सल सर्वशेषिन् ।
स्वामिन् सुशील सुलभाश्रितपारिजात
श्रीवेंकटेश चरणौ शरणं प्रपद्ये ॥ २ ॥

आनूपुरार्पितसुजातसुगन्धिपुष्प-
सौरभ्यसौरभकरौ समसन्निवेशौ ।
सौम्यौ सदानुभवनेऽपि नवानुभाव्यौ
श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥ ३ ॥

सद्योविकासिसमुदित्वरसान्द्रराग-
सौरभ्यनिर्भरसरोरुहसाम्यवार्ताम् ।
सम्यक्षु साहसपदेषु विलेखयन्तौ
श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥ ४ ॥

रेखामयध्वजसुधाकलशातपत्र-
वज्रांकुशाम्बुरुहकल्पकशङ्खचक्रैः ।
भव्यैरलंकृततलौ परतत्त्वचिह्नैः
श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥ ५ ॥

ताम्रोदरद्युतिपराजितपद्मरागौ
　　बाह्यैर्महोभिरभिभूतमहेन्द्रनीलौ ।
उद्यन्नखांशुभिरुदस्तशशांकभासौ
　　श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥ ६ ॥

सप्रेमभीति कमलाकरपल्लवाभ्यां
　　संवाहनेऽपि सपदि क्लममादधानौ ।
कान्ताववाङ्मनसगोचरसौकुमार्यौ
　　श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥ ७ ॥

लक्ष्मीमहीतदनुरूपनिजानुभाव-
　　नीलादिदिव्यमहिषीकरपल्लवानाम् ।
आरुण्यसंक्रमणतः किल सान्द्ररागौ
　　श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥ ८ ॥

नित्यानमद्विधिशिवादिकिरीटकोटि-
　　प्रत्युप्तदीप्तनवरत्नमहःप्ररोहैः ।
नीराजनाविधिमुदारमुपादधानौ
　　श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥ ९ ॥

विष्णोः पदे परम इत्युदितप्रशंसौ
　　यौ मध्व उत्स इति भोग्यतयाऽप्युपात्तौ ।
भूयस्तथेति तव पाणितलप्रदिष्टौ
　　श्रीवेंकटेश चरणौ शरणं प्रपद्ये ॥ १० ॥

पार्थाय तत्सदृशसारथिना त्वयैव
　　यौ दर्शितौ स्वचरणौ शरणं व्रजेति ।

भूयोऽपि मह्यमिह तौ करदर्शितौ ते
श्रीवेंकटेश चरणौ शरणं प्रपद्ये ॥ ११ ॥

मन्मूर्ध्नि कालियफणे विकटाटवीषु
श्रीवेंकटाद्रिशिखरे शिरसि श्रुतीनाम् ।
चित्तेऽप्यनन्यमनसां सममाहितौ ते
श्रीवेंकटेश चरणौ शरणं प्रपद्ये ॥ १२ ॥

अम्लानहृष्यदवनीतलकीर्णपुष्पौ
श्रीवेंकटाद्रिशिखराभरणायमानौ ।
आनन्दिताखिलमनोनयनौ तवैतौ
श्रीवेंकटेश चरणौ शरणं प्रपद्ये ॥ १३ ॥

प्रायः प्रपन्नजनताप्रथमावगाह्यौ
मातुस्स्तनाविव शिशोरमृतायमानौ ।
प्राप्तौ परस्परतुलामतुलान्तरौ ते
श्रीवेंकटेश चरणौ शरणं प्रपद्ये ॥ १४ ॥

सत्त्वोत्तरैस्सततसेव्यपदाम्बुजेन
संसारतारकदयार्द्रदृगञ्चलेन ।
सौम्योपयन्तृमुनिना मम दर्शितौ ते
श्रीवेंकटेश चरणौ शरणं प्रपद्ये ॥ १५ ॥

श्रीश श्रिया घटिकया त्वदुपायभावे
प्राप्ये त्वयि स्वयमुपायतया स्फुरन्त्या ।
नित्याश्रिताय निरवद्यगुणाय तुभ्यं
स्यां किङ्करो वृषगिरीश न जातु मह्यम् ॥ १६ ॥

**इति श्रीवेंकटेशप्रपत्तिः**

---

# ॥ श्रीवेंकटेशमङ्गलाशासनम् ॥

श्रीवादिभीकरमहागुरुभिरनुगृहीतम्



श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेंकटनिवासाय श्रीनिवासाय मङ्गलम् ॥ १ ॥

लक्ष्मीसविभ्रमालोकसुभ्रूविभ्रमचक्षुषे ।
चक्षुषे सर्वलोकानां वेंकटेशाय मङ्गलम् ॥ २ ॥

श्रीवेंकटाद्रिशृङ्गाग्रमङ्गलाभरणाङ्घ्रये ।
मङ्गलानां निवासाय वेंकटेशाय मङ्गलम् ॥ ३ ॥

सर्वावयवसौन्दर्यसंपदा सर्वचेतसाम् ।
सदा संमोहनायास्तु वेंकटेशाय मङ्गलम् ॥ ४ ॥

नित्याय निरवद्याय सत्यानन्दचिदात्मने ।
सर्वान्तरात्मने श्रीमद्वेंकटेशाय मङ्गलम् ॥ ५ ॥

स्वतस्सर्वविदे सर्वशक्तये सर्वशेषिणे ।
सुलभाय सुशीलाय वेंकटेशाय मङ्गलम् ॥ ६ ॥

परस्मै ब्रह्मणे पूर्णकामाय परमात्मने ।
प्रयुञ्जे परतत्त्वाय वेंकटेशाय मङ्गलम् ॥ ७ ॥

आकालतत्त्वमश्रान्तमात्मनामनुपश्यताम् ।
अतृप्त्यमृतरूपाय वेंकटेशाय मङ्गलम् ॥ ८ ॥

प्रायस्स्वचरणौ पुंसां शरण्यत्वेन पाणिना ।
कृपयाऽऽदिशते श्रीमद्वेंकटेशाय मङ्गलम् ॥ ९ ॥

दयामृततरङ्गिण्यास्तरङ्गैरिव शीतलैः ।
अपाङ्गैः सिञ्चते विश्वं वेंकटेशाय मङ्गलम् ॥ १०

स्रग्भूषाम्बरहेतीनां सुषमावहमूर्तये ।
सर्वार्तिशमदायास्तु वेंकटेशाय मङ्गलम् ॥ ११ ॥

श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे ।
रमया रममाणाय वेंकटेशाय मङ्गलम् ॥ १२ ॥

श्रीमत्सुन्दरजामातृमुनिमानसवासिने ।
सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम् ॥ १३ ॥

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गलम् ॥ १४ ॥

इति श्रीवेंकटेशमङ्गलाशासनम्

**इति प्रथमो भागः**

* इमानि सुप्रभात-स्तोत्र-प्रपत्ति-मङ्गलाशासनानि श्रीवेंकटाचले श्रीनिवासस्वामि-सन्निधौ प्रत्यहं प्रातरनुसन्धीयन्ते ।

## ॥ अथ द्वितीयो भागः ॥

### ॥ श्रीवेंकटेशमहिषीमहालक्ष्मीचतुर्विंशतिनामस्तोत्रम् ॥ १ ॥

नमःश्रियै लोकधात्र्यै ब्रह्ममात्रे नमोनमः ।
नमस्ते पद्मनेत्रायै पद्ममुख्यै नमोनमः ॥

प्रसन्नमुखपद्मायै पद्मकान्त्यै नमोनमः ।
नमो बिल्ववनस्थायै विष्णुपत्न्यै नमोनमः ॥

विचित्रक्षौमधारिण्यै पृथुश्रोण्यै नमोनमः ।
पक्वबिल्वफलापीनतुङ्गस्तन्यै नमोनमः ॥

सुरक्तपद्मपत्राभकरपादतले शुभे ।
सरत्नाङ्गदकेयूरकाञ्चीनूपुरशोभिते ॥

यक्षकर्दमसंलिप्तसर्वाङ्गे कटकोज्ज्वले ।
माङ्गल्याभरणैश्चित्रैर्मुक्ताहारैर्विभूषिते ॥

ताटङ्कैरवतंसैश्च शोभमानमुखाम्बुजे ।
पद्महस्ते नमस्तुभ्यं प्रसीद हरिवल्लभे ॥

ऋग्यजुस्सामरूपायै विद्यायै ते नमोनमः ।
प्रसीदास्मान् कृपादृष्टिपातैरालोकयाब्धिजे ॥

*ये स्थानहीनाः स्वस्थानात् श्रुत्वा स्थानमवाप्नुयुः ।

॥ इति श्रीवेंकटेशमहिषीमहालक्ष्मीचतुर्विंशतिनामस्तोत्रम् ॥

*[पा.] दृष्ट्वा नरा ये ब्रह्मत्वशिवत्वेन्द्रत्वमाप्नुयुः ॥

## ॥ श्रीमहालक्ष्मीचतुर्विंशतिनामावलिः ॥ २ ॥

श्रीवेङ्कटेशमहिषीमहालक्ष्मीप्रीत्यर्थं श्रीवेङ्कटेशमहिषीमहालक्ष्मीचतुर्विंशति-नामभिः श्रीवेङ्कटेशमहिषीमहालक्ष्म्यर्चनं करिष्ये ॥

अस्य श्रीमहालक्ष्मीचतुर्विंशतिनाममन्त्रस्य ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । श्रीमहालक्ष्मीर्देवता । श्रीवेंकटेशमहिषीमहालक्ष्मीप्रीत्यर्थे जपे विनियोगः ।

**ध्यानम्**—

ईशानां जगतोऽस्य वेंकटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षस्स्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम् ।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥

१ ओं श्रियै नमः

२ ओं लोकधात्र्यै नमः

३ ओं ब्रह्ममात्रे नमः

४ ओं पद्मनेत्रायै नमः

५ ओं पद्ममुख्यै नमः

६ ओं प्रसन्नमुखपद्मायै नमः

७ ओं पद्मकान्त्यै नमः

८ ओं बिल्ववनस्थायै नमः

९ ओं विष्णुपत्न्यै नमः

१० ओं विचित्रक्षौमधारिण्यै नमः

११ ओं पृथुश्रोण्यै नमः

१२ ओं पक्वबिल्वफलापीनतुङ्गस्तन्यै नमः

१३ ओं सुरक्तपद्मपत्राभकरपादतलायै नमः

१४ ओं शुभायै नमः

१५ ओं सरत्नाङ्गदकेयूरकाञ्चीनूपुरशोभितायै नमः

१६ ओं यक्षकर्दमसंलिप्तसर्वाङ्गायै नमः

१७ ओं कटकोज्ज्वलायै नमः

१८ ओं माङ्गल्याभरणैश्चित्रैर्मुक्ताहारैर्विभूषितायै नमः

१९ ओं ताटङ्कैरवतंसैश्च शोभमानमुखाम्बुजायै नमः

२० ओं पद्महस्तायै नमः

२१ ओं हरिवल्लभायै नमः

२२ ओं ऋग्यजुस्सामरूपायै नमः

२३ ओं विद्यायै नमः

२४ ओं अब्धिजायै नमः

एवं चतुर्विंशतिनामभिः बिल्वपत्रैर्लक्ष्म्यर्चनं कुर्यात् । सर्वाभीष्टसिद्धिर्भवति ॥

॥ इति चतुर्विंशतिनामावलिः ॥

---

श्रीः

## ॥ लक्ष्मीस्तोत्रम् ॥ ३ ॥



श्रियं श्रीवेंकटेशस्य श्रीनिवासस्य वल्लभाम् ।
ईश्वरीं सर्वभूतानामाश्रये विश्वमातरम् ॥ १ ॥

विष्णोर्विचित्रचिदचिन्मिश्रविश्वविधिश्रमः ।
सफलस्सकृदालोकाद्यस्यास्तस्यै नमः श्रियै ॥ २ ॥

यस्या मुग्धकटाक्षदुग्धकणिका न्यूनाधिकोदञ्चिताः
द्वित्राः कुत्रचिदेकतस्त्रिचतुराः किञ्चान्यतः पञ्चषाः ।
ब्रह्मेशेन्द्रमुखामरान्नरपतींश्चोच्चावचश्रीजुषः
कुर्वन्त्याश्रितवत्सलां भगवतीं तामाश्रयामः श्रियम् ॥ ३ ॥

अस्तोकस्तबका स्तनद्वयमिषात् पाणिप्रवालोज्ज्वला
रोमालीललितालिपङ्क्तिमहिता बाहुप्रतानाञ्चिता ।
सामोदा हरिकल्पवृक्षविपुलोपघ्ना वृषाद्रेस्तटे
लक्ष्मीकल्पलता स्थिरा मयि कृपावीक्षाप्रसूनं क्षिपेत् ॥ ४ ॥

स्वैरोद्वेलकृपाकटाक्षसुधया संप्लावयन्त्या जगत्
लक्ष्म्यास्तौ चरणौ प्रपन्नसुलभौ स्तोतुं प्रयस्याम्यहम् ।
यल्लाक्षारसलक्ष्म वक्षसि हरेर्वीक्ष्यैव साक्षात्परं
ब्रह्मेदं जगदेककारणमिति त्रय्यन्तवर्गा जगुः ॥ ५ ॥

वेदान्ता विबुधाश्चतुर्मुखमुखास्सन्तस्सनन्दादयः
व्यासाद्या मुनयश्च सूरिनिवहा लक्ष्मीपतिर्वा स्वयम् ।

सर्वे यन्महिमामृताब्धिकणिकेयत्तां न वेत्तुं क्षमाः
तां लक्ष्मीमनपत्रपः कथयितुं वाञ्छामि धिङ्मां कविम् ॥ ६ ॥

मातङ्गस्सुमहानणुश्च मशकः पातुं प्रवृत्तौ तृषा
दुग्धाब्धिं पिबतस्स्वशक्त्यनुगुणं कृत्स्नं न पातुं क्षमौ ।
मातर्लक्ष्मि तव प्रभावजलधौ ब्रह्माऽप्यहं चेदृशौ
यज्ज्ञानादिषु तारतम्यमुभयोर्नौ तेन किं साधितम् ॥ ७ ॥

मुग्धस्तनन्धयमुखात् प्रथमोदिता वाक्
अव्यक्तवर्णमधुरा स्वदते हि मात्रे ।
श्रीरम्ब तद्वदतिमौग्ध्यकृता स्तुतिर्मे
त्वत्कर्णवर्त्मनि वमेदमृतस्य धाराम् ॥ ८ ॥

सुधाधारासेकादिव सुखितकर्णाः सुकवयः
स्तुवीरन् याः श्रुत्वा सपदि सशिरःकम्पमवशाः ।
तथाभूता मातस्स्तुतिवचनभङ्गीस्त्वदुचिताः
विधातुं मे शक्तिं वितर वृषशैलेशदयिते ॥ ९ ॥

महितमहसः पङ्के मग्नान्मणीनिव चेतनान्
प्रलयतमसा गाढं गूढानसत्समतां गतान् ।
न यदि भवती मातः पश्येद्दयार्द्रदृगञ्चला
कथमिव भवेत्सत्ता तेषां पुमर्थकथा कुतः ॥ १० ॥

अस्येशाना जगत इति या विश्रुता विश्वगोप्त्री
सत्यं सा त्वं भवसि कमले विष्णुपत्नीत्यनूक्तेः ।
तस्या मातस्तव परिजनेष्वात्मसु प्रेमबन्धः
तद्वात्सल्यं निरवधिकृपा सर्वमेतन्न चित्रम् ॥ ११ ॥

श्रुतिशिरोवरकोशगृहाहितान् स्मृतिपुराणसुदीपविदीपितान् ।
स्फुरिततावकदिव्यगुणान् मणीन् स्वहृदये सुधियो दधतीन्दिरे ॥ १२ ॥

रस्यं गवामपि पयो रसनोपघातात्
पैत्त्येन तिक्तमिति वक्ति यथा तथाऽपि (हि) ।
तत्त्वं परं त्वदुपगूढमपोढहेयं
हेयास्पदं वदति कश्चन गाढपापः ॥ १३ ॥

नित्योदञ्चितचञ्चरीकनिनदां नीरन्ध्रपुष्पद्रुमां
निर्यन्निर्झरशीतलां वृषगिरेरुत्तुङ्गशृङ्गस्थलीम् ।
कृत्वा केलिगृहं रमे रमयसे सर्वेश्वरं त्वत्प्रियं
भोगोपक्रमविभ्रमभ्रमिमुखे मग्नं मुहुः कुर्वती ॥ १४ ॥

मधुकरमौलिदघ्नमकरन्दरसप्रसर-
प्रकलितमूलसेकपरिबृंहितपुष्पवने ।
विरचितपादचारमिह वेंकटशैलतटे
विहरसि देवि लक्ष्मि करलम्बितकान्तकरा ॥ १५ ॥

कमलपलाशदेश्यपरिपेशलचिह्नपद-
द्वितयनिवेशनाङ्कपरिकर्मपवित्रशिलाः ।
तव च तव प्रियस्य विनमन्ति वृषाद्रितटे
विकचकुशेशयोदरविहारिणि सर्वसुराः ॥ १६ ॥

उपनिषदां सहस्रमुपबृंहणमप्यखिलं
वदति परोक्षमम्ब दयितेन समं भवतीम् ।
अथ पुनरञ्जनाद्रिरपरोक्षमवेक्षयते
शरणमयासिषं तमधिकाद्भुतभूमिमहम् ॥ १७ ॥

त्वयि वृषशैलसीम्नि कुसुमापचयावसरे
दयितविलोभनाय धृतदिव्यलतावपुषि ।
पतिरपि ते प्रगल्भमतिरेत्य मधुव्रतताम्
अतिपतितान्यवल्लि भवतीमभिकामयते ॥ १८ ॥

सुतनु लुनाव पुष्पमधिकापचयेऽस्तु जयः
तव मम वेत्युदीर्य कुसुमानि लुनन् कमले ।
त्वदुदितनर्मसूक्तिरसनिघ्नमनाः प्रहसन्
प्रसवपराङ्मुखश्च विजितो वृषशैलपतिः ॥ १९ ॥

सहचरवेंकटेशकरनम्रितकल्पतरोः
अभिनवपुष्पजातमपचेतुमुदग्रमुखी ।
प्रियतममुग्धहासमुखचन्द्रविलोपितधीः
त्वमपचिनोषि तस्य मणिदाममहःप्रसवान् ॥ २० ॥

जननि सखीसमक्षमुपगूहनलोलमतेः
तव पतिमिङ्गितज्ञमनिपुष्पितवृक्षतनुम् ।
सपुलककम्पघर्मसलिलादिविकारभृतः
कुचयुगतो निपीड्य कुसुमानि लुनासि शनैः ॥ २१ ॥

अन्तर्वसन्तमवलम्बितहेमशृङ्गां
आलिप्तकुङ्कुमकुचामरुणोत्तरीयाम् ।
आनीलवेणिमनुरूपसखीवृतां त्वां
आलोक्य विस्मयभरस्तिमितः पतिस्ते ॥ २२ ॥

प्राप्ता स्वामिसरः प्रसन्नसलिलं स्नातुं सह प्रेयसा
दृष्ट्वा स्वप्रतिबिम्बमम्ब सुभगं स्तब्धा प्रतिश्रीधिया ।

आस्फाल्या(म्बुनि) कम्पितेऽत्र विमतादृष्ट्या प्रसन्ना पुनः
पत्या निर्विशसि त्वमञ्जनगिरौ कीलालल्लीलारसम् ॥ २३ ॥

कान्तेन शृङ्गसलिलैस्सकृदुक्षितां त्वां
वीक्ष्यासहिष्णुभिरुपेत्य सखीजनैस्ते ।
पर्युक्षितः पतिरनारतमम्बुवृष्ट्या
निर्णिक्तनीलमणिशैलरुचिं दधाति ॥ २४ ॥

सिञ्चन्त्यां करवारिणा प्रियमुखं त्वय्येकया हेलया
सिञ्चन्तीष्वभितः सखीष्वपि निरुच्छ्वासो निमज्ज्यान्यतः ।
उन्मज्ज्य स्मितफुल्लगण्डफलकां त्वां पुण्डरीकेक्षणः
पश्यन् साञ्जलि वारयत्यभियतीं भूयश्च सेकोत्सुकाम् ॥ २५ ॥

(यस्ते) श्रीः पुष्पमेकं चरणकमलयोरर्पयेद्भूतिकामो
वज्रालङ्कारहस्तस्स खलु सुरपुरीवीथिकाभ्यन्तरेषु ।
दिव्यस्त्रीभिस्स्वहस्तैरचिरमुपचितैः पारिजातप्रसूनैः
आरादाकीर्यमाणश्चरति सुरपतिस्स्वैरमैरावतेन ॥ २६ ॥

संपत्कामस्सकृत्त्वां प्रणमति क(मले) या (यो) यदृच्छाप्रवृत्तिः
सोयं हंसाधिरूढः प्रतिदिशवदनो भारतीप्राणनाथः ।
ब्रह्माण्डैकाधिपत्यस्मयकृतविकृतिः सेव्यते (साव)रार्यैः (रोधैः)
देवैर्दिक्पालमुख्यैरधिगतविनयैरञ्जलिव्यग्रहस्तैः ॥ २७ ॥




योवा कश्चिज्जातु काम्येष्वकामो
भूयिष्ठां ते नमउक्तिं विध(त्ते) ।
(दत्त्वा तस्मै) देवि भोगापवर्गौ
न त्वं दृ(तृ)प्ता कीदृगौदार्यमेतत् ॥ २८ ॥

कश्चित्त्वाश्चर्यबुद्धिः कबलयति कला याश्चतुष्षष्टिसंख्याः
कश्चि(त्त्वत्यन्तमन्दः पिककरटभिदा)न्नेव(न्नैव) शक्तो विवेक्तुम्
कोऽप्यन्यस्सार्वभौमो भुवमनुभवति क्षुत्कृशः कोऽपि भिक्षुः
वैषम्यस्यास्य हेतुर्भगवति कमले त्व(त्कटाक्षाकटाक्षौ) ॥ २९ ॥

कनकलतेव नीलमणिशैलविशालतटं
कपिशिमदीप्रकम्रकलिकेव तमालतरुम् ।
अभिनवमम्बुवाहमचलेव तटिल्लतिका
मुरजिदुरः पयोधि(दुहि)तः परिभावयसे ॥ ३० ॥

अमृतलहरीमालालीलाविजित्वरविभ्रमैः
शिशिरमधुरैः श्रीरम्ब त्वत्प्रतिक्षणवीक्षणैः ।
उपचितमहावाहाशाखश्शुचि(स्मित) का(को)रकः
फलतु भजतां तत्तत्कामांस्तव प्रियकल्पकः ॥ ३१ ॥

अयि वृषगिरेरुच्चैश्शृङ्गाग्रमङ्गलदीपिके
निजपरिजनस्त्रीनेत्राणां निरन्तरचन्द्रिके ।
भवहुतवहज्वालार्तानां सुधामयदीर्घिके
जय जय जगज्जन्ये धन्ये जनार्दनजीविके ॥ ३२ ॥

नारीणामुत्तमा त्वं पतिरपि पुरुषेषूत्तमस्ते विभूतिः
नित्या भोगाय लीलारसपरिणतये कल्पितैषा विभूतिः ।
भृत्या ब्रह्मादिदेवास्सहजपरिजनास्सूरयो नित्यशुद्धाः
(हे श्री)स्त्वद्भागधेयं निरवधिकमहं भावयेयं कथं वा ॥ ३३ ॥

मातर्महत्त्वमतिवाङ्मनसं वै त्वदीयं
यस्यास्तव प्रणयरोषकषायिताया: ।

नीराज(य)म(त्य)रुणमङ्घ्रियुगं किरीट-
रत्नत्विषा निखिललोकपतिर्मुकुन्दः ॥ ३४ ॥

नानादेवादिदेहप्रकृतिपरिणतौ कर्मपाशेन बद्धान्
पर्यायेणोच्चनीचभ्रमितजलघटी(धारि)यन्त्रस्य नीत्या ।
ऊर्ध्वाधोलोकगत्या गतिजवविवशान् प्राणिनस्त्रातुमेतान्
को वाऽन्यश्शक्यशङ्कः प्रभुरिति कमले त्वत्सखाद्रेंकटेशात् ॥ ३५ ॥

दुर्लङ्घे दुःखसिन्धौ दुरनुभवमहाव्याधिभेदोत्तरङ्गे
संमग्नान्वीक्ष्य जीवान् सहजकरुणया प्रेरिता लोकमातः ।
कूपान्तर्मुग्धपुत्रं पतितमनुपतन्मातृवल्लोकमेतं
प्राप्ता वैकुण्ठधाम्नस्त्वमिह वृषगिरौ वर्तसे त्रातुमेतान् ॥ ३६ ॥

स्मितरुचिकौमुदीकवदनेन्दुरुदारवपुः
त्वरितमवातरद्य(रिष्य)दमृतेन न चेद्भवती ।
चलितचतुर्भुजस्य मथितोद्धतदुग्धनिधेः
ध्रुवमभविष्यदम्ब कमितुस्तव नीरसता ॥ ३७ ॥

प्रवहदमृतपूरात् प्रादुरासीः पयोधेः
अमृतमथनदान्तं मोहयन्ती मुकुन्दम् ।
अथ विपुलमयासीदन्तरं तस्य बाह्वोः
अनिमिषममराणां पश्यतां पद्मवासे ॥ ३८ ॥

सान्द्रार्द्रागसि संहितादनुगतादस्त्रादतित्रासिनि
भ्रान्त्वा सर्वजगत् सु(स्व)गोप्तृविरहात् काके पुरः पेतुषि ।
दृष्ट्वैनं जननि त्वया सदयया विज्ञाप्य वीरव्रतं
पत्युस्ते प्रतिबोधिता रघुकुलोत्तंसस्य पुंसः कृपा ॥ ३९ ॥

पद्मे परिष्कृतिमतीं परिफुल्लदृष्टिं
सीतां समीक्ष्य जनकाङ्कनिषेदुषीं त्वाम् ।
त्वद्भ्रूविभङ्गविधिना विहितोपदेशः
शम्भोर्बभञ्ज धनुराशु रघुप्रवीरः ॥ ४० ॥

रामो रमे तव कृते रघुवीरजाये
भोगीन्द्रभोगसुभगामुपधाय बाहाम् ।
आजानुबाहुरशयिष्ट तटे पयोधेः
प्रस्पर्धयन् प्रतिपयोधिरिव प्रसुप्तः ॥ ४१ ॥

श्रीरम्ब मैथिलि पतिस्तव धर्मपत्न्याः
प्राप्तेस्तिरोधिमुदधिं व्यतिलङ्घ्य वीर(ः) ।
आलूय संकुलमरातिकुलं समूलम्
आसीत्त्वदीयमुखपद्मविकासभास्वान् ॥ ४२ ॥

मातर्मनोनयन(रञ्ज)नदिव्यरूपः
कृष्णस्सतृष्णहृदयस्त्वयि भाववत्याम् ।
वीरो वहन्नुरसि वैरिशरान्महाजौ
त्वां रुक्मिणीमुदवहद्विजितारिलोकः ॥ ४३ ॥

आरभ्य शैशवमनारतमप्रयत्नात्
यत्पूतनादिविपदुत्तरणं मुरारेः ।
कल्याणि रुक्मिणि जगज्जननि त्वदीय-
मङ्गल्यसूत्रमहिमा खलु तत्र हेतुः ॥ ४४ ॥

जामाता पुरुषोत्तमस्सुसदृशो लक्ष्म्यास्सुताया ममे-
त्यानन्दैरुदितैरिवान्तरमितैस्तुङ्गैस्तरङ्गैर्वृतम् ।

दुग्धाब्धिं पितरं तवाम्ब दयितः पश्यन्प्रभूताकृतिः
प्रत्यग्राम्बुजलोचनः फणिपतौ शेते नभश्श्यामलः ॥ ४५ ॥

भव्यं पद्मादिरूपं परिमलमपि चादाय सृष्टेव मृद्वी
पद्मे त्वन्नित्यभोग्यप्रियतमवपुरुत्कर्षजातातिशङ्का ।
विश्लेष्टुं न क्षमाऽहं क्षणमपि दयितत्वादिति व्याहरन्ती
श्लिष्यन्ती कान्तवक्षस्सुदृढमविरतं मोदसे वेंकटाद्रौ ॥ ४६ ॥

श्रीमद्वेंकटशैलनीलजलदव्राताभिजाताकृतेः
शार्ङ्गश्रीजितचारुशक्रधनुषश्शश्वत्कृपावर्षिणः ।
मन्द्रं मन्दसमीरपूरणकृतं शङ्खध्वनिं बिभ्रतः
विष्णोः श्रीरुरसि स्थिता वितनुषे विद्युल्लताविभ्रमम् ॥ ४७ ॥

यथाऽनर्घं रत्नं भवति निजदीप्त्या परिवृतं
यथा पुष्यत्पुष्पं नवपरिमलद्धर्या बहुमतम् ।
तथा नित्याश्लिष्टो भगवति भवत्या महितया
निषेव्यस्सर्वेषां भवति भगवांस्त्वत्सहचरः ॥ ४८ ॥

इयं गाथा काऽपि श्रवणपथवृत्ता तनुभृतां
भवेत्किञ्चिद्वस्तु स्वपरगुणनिर्वाहकमिति ।
मृषा नैषा सूक्तिर्भगवति यतः श्रीर्निरुपमा
त्वमेव श्रीमत्तां तव च तव पत्युः प्रथयसे ॥ ४९ ॥

स्वशेषैरुत्कर्षे सति न खलु शेषित्वविहतिः
यतश्शेषी शेषैरतिशयकरैरेव भवति ।
अतः श्रीः कान्तस्ते त्वदुपहितनिस्सीममहिमा-
ऽप्यहीनस्वातन्त्र्यो भवति न परोपाधिकगुणः ॥ ५० ॥

दुग्धाब्धिं पितरं तवाम्ब दयितः पश्यन्प्रभूताकृतिः
प्रत्यग्राम्बुजलोचनः फणिपतौ शेते नभश्श्यामलः ॥ ४५ ॥

भव्यं पद्मादिरूपं परिमलमपि चादाय सृष्टेव मृद्वी
पद्मे त्वन्नित्यभोग्यप्रियतमवपुरुत्कर्षजातातिशङ्का ।
विश्लेष्टुं न क्षमाऽहं क्षणमपि दयितत्वादिति व्याहरन्ती
श्लिष्यन्ती कान्तवक्षस्सुदृढमविरतं मोदसे वेंकटाद्रौ ॥ ४६ ॥

श्रीमद्वेंकटशैलनीलजलदव्राताभिजाताकृतेः
शार्ङ्गश्रीजितचारुशक्रधनुषश्शश्वत्कृपावर्षिणः ।
मन्द्रं मन्दसमीरपूरणकृतं शङ्खध्वनिं बिभ्रतः
विष्णोः श्रीरुरसि स्थिता वितनुषे विद्युल्लताविभ्रमम् ॥ ४७ ॥

यथाऽनर्घं रत्नं भवति निजदीप्त्या परिवृतं
यथा पुष्यत्पुष्पं नवपरिमलद्धर्या बहुमतम् ।
तथा नित्याश्लिष्टो भगवति भवत्या महितया
निषेव्यस्सर्वेषां भवति भगवांस्त्वत्सहचरः ॥ ४८ ॥

इयं गाथा काऽपि श्रवणपथवृत्ता तनुभृतां
भवेत्किञ्चिद्वस्तु स्वपरगुणनिर्वाहकमिति ।
मृषा नैषा सूक्तिर्भगवति यतः श्रीर्निरुपमा
त्वमेव श्रीमत्तां तव च तव पत्युः प्रथयसे ॥ ४९ ॥

स्वशेषैरुत्कर्षे सति न खलु शेषित्वविहतिः
यतश्शेषी शेषैरतिशयकरैरेव भवति ।
अतः श्रीः कान्तस्ते त्वदुपहितनिस्सीममहिमा-
ऽप्यहीनस्वातन्त्र्यो भवति न परोपाधिकगुणः ॥ ५० ॥

मन्दस्पर्शं मलयमरुतां माधुरीं माक्षिकाणां
वीणानादं क्षणरुचिरुचिं सौरभं वारिजानाम् ।
आदायाङ्गं तव कृतमिति श्रीर्वचो यौक्तिकानां
कालातीतं निगमवचसा तस्य नित्यत्वसिद्धेः ॥ ५१ ॥

आमोदमेदुरमरालमुदारबन्धं
मृद्वायतं चमरवालविलासजैत्रम् ।
आनीलमद्भुतमनातपवार्यमम्ब
केशापदेशतिमिरं बिभृषे किमेतत् ॥ ५२ ॥

किंनु स्विदम्ब तिमिरस्य विपत्ति[क्ति]रेषः
किंवा नवोत्पलजनीलिमसंप्रदायः ।
भिन्नाञ्जनोपलरुचामथवैष राशिः
इत्यादिसंशयपदं तव केशपाशः ॥ ५३ ॥

कर्णावतंसकलिकायितलोचनेन
स्वर्णात्मदर्शसुहृदा सुषमोत्तरेण ।
मन्दस्मितांशुमधुरेण तवाननेन
चन्द्रः कलङ्ककलुषः कथमम्ब तुल्यः ॥ ५४ ॥

अभिनवमरविन्दं किन्नु भृङ्गानुलीनं
सजलदशकलं वा शारदं चन्द्रबिम्बम् ।
कनकमुकुरमाहो नीलरत्नानुविद्धं
जननि मुखमिदं ते स्निग्धनीलालकं वा ॥ ५५ ॥

मातस्तवैतदभिजातसुवर्णपट्ट-
सौभाग्यहारि निटिलं निरपेक्षभूषम् ।

मातः स्वभावसुषमापुनरुक्तभूषः
पत्युस्तवापि विजयावहभव्यरेखः ।
स्वामोदसंपदधिवासितसर्वगन्धः
कण्ठो मृदुः कथय कम्बुसमः कथं स्यात् ॥ ६२ ॥

सौभाग्यसंपदभिभूतसुवर्णकुम्भौ
भूयः परास्तपरिणाहिपयोजकोशौ ।
कूलंकषौ कुचभरौ गुरुभारहारौ
पुत्रस्य देवि कुशलं कुरुतो दृशोर्मे ॥ ६३ ॥

तारुण्यसौरभतरङ्गितहृत्तटाके
जातौ स्तनद्वयमिषेण सरोजकोशौ ।
तन्मूललग्नसितबालमृणालिकैव
मुक्तावलीति मम मातरभूद्वितर्कः ॥ ६४ ॥

बाहाश्शिरीषमृदवस्तनवस्सुवृत्ताः
[शम्]पारुचस्समुचिताभरणाश्चतस्रः ।
मातस्सपल्लवसकोरककल्पवल्ली-
बालप्रतानविततीरनुकुर्वते ते ॥ ६५ ॥

तन्वी तलोदरगता तव रोमराजिः
आभाति देवि कुचतुङ्गकुलाचलाभ्याम् ।
निष्क्रम्य नाभिसरसीमभियान् पिपासुः
आनीलभोग इव कश्चन बालसर्पः ॥ ६६ ॥

पीताम्बरस्थगितमध्यकटीनितम्ब-
कम्रोरुकाण्डवरजानुयुगोपमानम् ।

नास्त्यस्ति चेद्वदतु देवि तवैव कान्तः

सर्वज्ञ इत्यनुविनादितकाहलीकः ॥ ६७ ॥

वृत्ते तवाम्ब लभि[लि]ते विधृतानुपूर्व्ये

पीताम्बराञ्चलपिशङ्गरुचाऽभिषिक्ते ।

सौवर्णकाहलसमे समसन्निवेशे

जङ्घे तु[न] लङ्घयति सेवकलोकदृष्टिः ॥ ६८ ॥

प्रत्यग्रकल्पतरुपल्लवपाटलाभौ

वज्रध्वजाब्जमुखमङ्गलचिह्नगर्भौ ।

इन्द्रादिदेवमणिमौलिमहार्हपीठौ

मातस्त्वदीयचरणौ शरणं प्रपद्ये ॥ ६९ ॥

चन्द्रस्त्वदीयमुखकान्तिजितः कलङ्की

श्रीरम्ब वृत्तविशदांशुनखापदेशात् ।

चारु प्रपद्य चरणद्वितयं भवत्याः

पूर्णोऽकलङ्कदशमूर्तिरजस्रमासीत् ॥ ७० ॥

विद्युद्दामद्युतिभिरुचितैर्दिव्यभूषासहस्रैः

स्थाने देवि स्थगयसि वपुर्दिव्यमापादचूडम् ।

नोचेत् सर्वावयवसुषमास्वस्वदेशानुकर्ष-

श्रान्तस्वान्तस्तिमितनयनो वल्लभस्ते जल[ड]स्यात् ॥ ७१ ॥

स[न]सत्कर्म ज्ञानं न च विमलमध्यात्मविषयं

त्वयि त्वत्कान्ते वा न हि परमभक्तिस्त्वजनि मे ।

ततश्चाकिञ्चित्को दुरितभरितोऽनन्यगतिकः

शरण्ये देवि त्वां शरणमभिपद्ये भगवतीम् ॥ ७२ ॥

अनन्तासह्यागस्कृत[मकृत]सद्वृत्तिमशुचिं
प्रहीणं शब्दादिप्रवणमतिलज्जाभयदयम् ।
प्रसक्तं स्त्रीमात्रे पशुवदशुभैकास्पदमिमं
कथं मातः क्षाम्येदखिलखलशासी तव पतिः ॥ ७३ ॥

कदाचित्कान्तस्ते हितपरपितृत्वेन कलुषः
कृतागस्स्वस्मासु स्वयमुचितशिक्षां तितनिषेत् ।
तदा मातस्त्वं च भ्रुकुटिपरतन्त्रं प्रणयिनं
प्रलोभ्य स्वैरङ्गैश्चरणपरिचर्यां घटय नः ॥ ७४ ॥

अस्पृष्टसंसरणदुःखलवैरनादि-
सिद्धैरसंकुचितनित्यसुखावबोधैः ।
भव्यैः परस्परपरिस्थितशेषभावैः
संवासयाम्ब सहजैस्तव किङ्करैर्माम् ॥ ७५ ॥

आम्ना[अम्ला]नैरमृतद्रवप्रियसखैरौदार्यकर्णेजपैः
अत्यैश्वर्यमदालसैरभिमुखेष्वाभाषितस्वागतैः ।
अम्बाविष्कृतकूलमुद्वहकृपावात्सल्यविस्रम्भणैः
आलोकैरभिषिञ्च मामनुकलं त्वत्पादपद्माश्रयम् ॥ ७६ ॥

त्वद्दासदासकुलराजकुलाश्रयेण
भव्योत्तमस्य मम कर्मजवाग्विमर्दान् ।
स्तोत्रापदेशविहितानपि तानसंख्यान्
मातः क्षमस्व मयि केवलवत्सला त्वम् ॥ ७७ ॥

अस्मद्गुरुं परमकारुणिकं त्वदङ्घ्रि-
निस्सीमभक्तिनिधिमार्यमनर्घशीलम् ।

सौम्योपयन्तृमुनिमात्मविदं समीक्ष्य
मातः प्रसीद मम वृत्तमचिन्तयित्वा ॥ ७८ ॥

देव्या मदीयरसनाध[स]नया श्रियैव
स्वप्रीतये स्तुतिमिमामुदितां गृणन्तः ।
भुक्त्वा समृद्धिमिह सद्भिरनन्यभोगैः
अन्ते च सूरिपरिषत्प्रथमार्हणीयाः ॥ ७९ ॥

श्रीवादिभयङ्करगुरवे नमः ॥ श्रीवेंकटगुरवे नमः ॥

॥ इति श्रीलक्ष्मीस्तोत्रम् ॥

*[N.B.—The letters enclosed in brackets are suggested by the editors for the lacunæ in the text.]*

श्रीः

## ॥ फणीन्द्रक्ष्माभृत्स्तोत्रम् ॥ ४ ॥



अस्ति श्रीमानवनितिलको वेंकटो नाम शैलो
भूयानेको भुवि परिणतः पुण्यराशिः प्रजानाम् ।
सारोद्धारस्सकलजगतां स्थापितः क्वापि धात्रा
यस्मिन् साक्षात्परमपुरुषो दीव्यति श्रीसहायः ॥ १ ॥

सौवर्णात्मा मरतकमयैर्वज्रवैडूर्यरूपैः
नीलोत्की[र्णैः] स्फटिकघटितैः पद्मरागप्रणीतैः ।
नानारत्नाकृतिभिरखिलैस्सानुभिस्संभृतश्रीः
सर्वैस्सोऽयं सुरगिरिरिति प्रत्यभिज्ञायते यः ॥ २ ॥

उर्वी [गुर्वी]मुदधिवसनामुद्वहन् मूललग्नाम्
उत्तुङ्गाग्रैरुपरिशिखरैरुल्लिखन्नूर्ध्वसीमाम् ।
तिर्यग्दिव्याकृतिमहिमतश्छादयन् यो दिगन्तान्
विष्णुस्साक्षाद[यमिति] जनैस्तर्क्यते भूवराहः ॥ ३ ॥

मन्दस्पन्दानिलविवलितातान्नबालप्रवाल-
स्वैरास्वादप्रमदविहरत्कोकिलालापगर्भैः ।
सान्द्रच्छायैस्सरसकुसुमैस्सौरभाकृष्टभृङ्गैः
सर्वैर्वृक्षैस्सततफलितैर्यः सदा संभृतश्रीः ॥ ४ ॥

स्वैः पाद्यार्घ्यप्रभृति ददतः स्यन्दमानैर्मरन्दैः
भव्यामोदैः पवनगलितैरर्चयन्तः प्रसूनैः ।

वृन्तोद्भ्रान्तैः परिणतफलैर्नित्यक्लृप्तोपहाराः
धन्या वृक्षा [यदुपरि रमावा]समाराधयन्ति ॥ ५ ॥

पुण्यामोदप्रसवलहरीवासिताशावकाशैः
दूरेदूरे दुरितशमनैः पश्यतां प्राणभाजाम् ।
श्रीमन्नारायणवरशिरोभूषणीभाव[भव्यैः]
स्निग्धैः कृष्णैस्तरुणतुलसीकाननैः पावनो यः ॥ ६ ॥

नित्याशुष्यत्सलिलसरसीस्यन्दसन्धुक्षितानां
श्रावंश्रावं श्रवणसुभगं निस्वनं निर्झराणाम् ।
[धत्ते] धाराधररवधिया नृत्यतो नीलकण्ठान्
केकाकण्ठान्निजसहचरीनित्यनेत्रोत्सवान् यः ॥ ७ ॥

• दंशंदंशं कुशनवदलैर्दर्भदूर्वाप्रवालान्
खादंखादं पृथुमृदुफलं भूरुहां भूविकीर्णम् ।
पायंपायं यदुपरि पयः पावनं दीर्घिकाणां
मादंमादं विहरति मृगीयूथपः कृष्णसारः ॥ ८ ॥

घो[धी]राः सिंहाः कुपितशरभाः कुञ्जरेन्द्रा मदान्धाः
घोरा व्याघ्रा कटुककिटयो भीमभल्लूकसंघाः ।
सर्वे चान्ये सहजरिपवो जन्तवो यत्रवा[साः]
[सं]गाहन्ते प्रशमितरुषः स्वैरमेकोदपाने ॥ ९ ॥

श्रीमद्वादिप्रवरभयकृद्देशिकोक्तं फणीन्द्र-
क्ष्माभृत्स्तोत्रं भुवनमहितं शब्दतोऽर्थाच्च साधु ।
श्रुत्वा प्री[ता भव]तु जनता काव्यनाट्यादिदक्षाः
नैतत्तुल्यं भवति भवति सापि यावद्धरित्र्याम् ॥ १० ॥

इति फणीन्द्रक्ष्माभृत्स्तोत्रम् ॥

श्रीः

## ॥ वेंकटेशसेवाक्रमः ॥ ५ ॥



यश्चक्रे वेंकटेशस्य सेवाक्रममनुत्तमम् ।
तं शठारिगुरुं वन्दे गार्ग्यं श्रीपुरवासिनम् ॥

श्रीवेंकटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥ १ ॥

प्रातरुत्थाय पूतात्मा ध्यायेय स्वगुरोः पदे ।
श्रीवेंकटेशपादाब्जे इयासुर्वेंकटाचलम् ॥ २ ॥

चक्रतीर्थे ततः स्नात्वा कृतपूर्वाह्णिकक्रियः ।
ध्यायन् श्रीवेंकटाधीशं सेवेयाञ्जनभूधरम् ॥ ३ ॥

ततः पश्चिमदिग्भागे गत्वा कश्चिन्महापथम् ।
श्रीवेंकटगिरेर्मूले शेषांशेनोत्थितां भुवः ॥ ४ ॥

चिञ्चामुन्निद्रसुभगां दिव्यां तन्मूलतः शुभे ।
श्रीनिवासपदाम्भोजे स्वसंकल्पात् समुत्थिते ॥ ५ ॥

तन्मूलतः स्वयंव्यक्तान् सरोयोगिमुखानपि ।
लक्ष्मीनृसिंहं शेषाद्रिं प्रणिपत्य कृताञ्जलिः ॥ ६ ॥

दयाशतकमप्युच्चैः स्तोत्रगद्ये समुच्चरन् ।
भक्तैर्भागवतैस्सार्धमारोहेयं वृषाचलम् ॥ ७ ॥

घुष्यद्भिः सङ्घशश्चोच्चैर्गोविन्देति पुनःपुनः ।
गच्छद्भिः स्वामिसेवार्थमागच्छद्भिर्निरन्तरम् ॥ ८ ॥

संपूर्णं लब्धकामैश्च चतुर्वर्गार्थिभिर्नरैः ।
शिखराणि च रम्याणि निर्झरान् परिषत्प्रभुम् ॥ ९ ॥

श्रीवेंकटेशं संसेव्य गच्छेयं तं महापथम् ।
आरुह्य तिष्ठन्नामोदादञ्जनाद्रिशिरोवरम् ॥ १० ॥

श्रीवेंकटाचलप्रान्तभूमिपर्यन्तपर्वतान् ।
वापीकूपतटाकादीन् वनान्युपवनानि च ॥ ११ ॥

सुवर्णमुखरीं चैव शोभमानां महानदीम् ।
धाम गोविन्दराजस्य पश्येयं श्रीपुरीमपि ॥ १२ ॥

ततः कर्पूरसुरभितीर्थं कर्पूरनिर्झरम् ।
गत्वाऽऽचम्य ततश्चान्यच्छृङ्गमारुह्य सुन्दरम् ॥ १३ ॥

पक्षिवृक्षाकृतिधरैर्निबिडं नित्यसूरिभिः ।
शीघ्रं क्वचिच्च गच्छेयं सेवाचपलमानसः ॥ १४ ॥

सुखमत्रैव वर्तेय रम्ये श्रीशैलसानुनि ।
इतीरयन्मन्दमतिर्गच्छेयं कुत्रचित्पुनः ॥ १५ ॥

सुवर्चसां सुरूपाणां पुण्यानां मृगपक्षिणाम् ।
शृणुयामद्भुतं शब्दं कूजतां मधुरं पथि ॥ १६ ॥

अतीत्य कञ्चित्पन्थानमटवीनृहरिं ततः ।
प्रणम्य तदनुज्ञातः प्रविशन्वनमन्तरा ॥ १७ ॥

सालतालतमालाम्लचन्दनामरभूरुहैः ।
नालिकेराम्रपनसकदलीक्रमुकैरपि ॥ १८ ॥

पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोहरैः ।
भूषितं भूरुहैश्चान्यैर्निर्झरैश्चामलोदकैः ॥ १९ ॥

सिंहकुञ्जरगोव्याघ्रतरक्षुहरिणादिभिः ।
निर्वैरैर्मृगसङ्घैश्च रममाणैः समाकुलम् ॥ २० ॥

मयूरकोकिलानां च मधुरैः कूजितैरपि ।
शारिकाशुकसंलापैर्मोदिताखिलचेतनम् ॥ २१ ॥

चन्दनागरुसंवाहिमन्दमारुतसेवितम् ।
श्रीमदप्राकृतं दिव्यं झिल्लिकागणनादितम् ॥ २२ ॥

नयनानन्दजनकं नवीनं पश्यतां सदा ।
सर्वत्र फलपुष्पाढ्यं संपश्येयं वनस्थलम् ॥ २३ ॥

ततोऽन्यच्छृङ्गमारुह्य ततोऽन्यत्रावरुह्य च ।
क्वचिद्गच्छन् क्वचित्तिष्ठन् क्वचिद्ध्यायन् रमापतिम् ॥ २४ ॥

सानुमन्यं समारोहन् श्रीश मामानयान्तिकम् ।
इति ब्रुवन् यतिवरं प्राप्नुयां परया मुदा ॥ २५ ॥

तं प्रणम्याभ्यनुज्ञातः परं पन्थानमास्थितः ।
अर्चिरादिपथे दिव्ये मितचन्द्रेन्द्रवेधसाम् ॥ २६ ॥

लोकपङ्क्तिवदत्यन्तरम्यां मण्डपसन्ततिम् ।
संपश्यंस्तत्र गच्छेयं शौरेर्धामान्तिकस्थलम् ॥ २७ ॥

ततः पणवनिस्साणकाहलीनादमेदुरम् ।
शृणुयां श्रोत्रसुखदं दिव्यदुन्दुभिनिस्स्वनम् ॥ २८ ॥

ततश्चम्पकपुन्नागवकुलामरभूरुहाम् ।
अन्येषां दिव्यगन्धैश्च नानावर्णैर्मनोरमैः ॥ २९ ॥

अभ्रंकषाणां कुसुमैरनिशं चित्रिताम्बरम् ।
मल्लिकामाधवीजातिपुष्पैश्चित्रितभूतलम् ॥ ३० ॥

मध्येमध्ये लसद्दिव्यलीलामण्टपशोभितम् ।
तत्रतत्र स्थितैः क्रीडाशैलैश्चारुभिरुज्ज्वलम् ॥ ३१ ॥

पुण्यपक्षिगणानां च पूरिताशामुखं रवैः ।
पद्मकल्हारकुमुदनीलोत्पलसुगन्धिभिः ॥ ३२ ॥

राजहंसादिशकुनैः कूजद्भिश्च विराजितैः ।
सरोवापीतटाकाद्यैरावृतं परमाद्भुतैः ॥ ३३ ॥

अतिप्रमाणमाश्चर्यावहमप्राकृतं शुभम् ।
उद्यानशतसाहस्रमुद्यत्पल्लवकोरकम् ॥ ३४ ॥

पश्यन् शृङ्गविहीनं तद्गोपुरं प्राप्नुयां परम् ।
ततः श्रीवेंकटेशस्य मन्दिरं लोकवन्दितम् ॥ ३५ ॥

दिव्यं सुवर्णप्राकारगोपुरैरुज्ज्वलं महत् ।
ततश्चोद्यत्सहस्रांशुशतकोटिसमप्रभम् ॥ ३६ ॥

मङ्गलं सर्वजगतां मण्डनं शेषभूभृतः ।
भूमावनुपमं दिव्यं लोकानुग्रहकाम्यया ॥ ३७ ॥

स्वयंव्यक्तं विमानं तदानन्दनिलयाह्वयम् ।
दिव्यं च नगरं पश्यन् श्रीवैकुण्ठमिवापरम् ॥ ३८ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि कृतार्थोऽस्मीति च ब्रुवन् ।
परमानन्दभरितः प्रणमेयं प्रसन्नधीः ॥ ३९ ॥

ततस्सन्निधिवीथ्यग्रभूषणं पवनात्मजम् ।
नमस्कृत्य ततः पश्यन् सहस्रस्तम्भमण्टपम् ॥ ४० ॥

प्रविशेयं प्रसन्नात्मा वैकुण्ठद्वारमद्भुतम् ।
ततः काञ्चनदीप्त्या च रत्नकान्त्या च रूषितम् ॥ ४१ ॥

भूषितं दिव्यमाल्यैश्च मुक्तादामभिरेव च ।
चन्दनागरुधूपैश्च सर्वतस्सुरभीकृतम् ॥ ४२ ॥

आज्ञामुद्राधरर्भीमैरस्थानभयशङ्किभिः ।
चण्डप्रचण्डप्रमुखैर्द्वारपालैः सुरक्षितम् ॥ ४३ ॥

भेरीमृदङ्गपणवतूर्यशङ्खादिभिश्शुभैः ।
अष्टादशविधैर्वाद्यैराघोषितनभस्स्थलम् ॥ ४४ ॥

ब्रह्मरुद्रादिदेवानां महर्षीणां महात्मनाम् ।
योगिनां सनकादीनां दिव्यस्थाननिवासिनाम् ॥ ४५ ॥

दिव्याप्सरोगणानां च नृत्तं गीतं च कुर्वताम् ।
चातुर्वर्ण्यप्रसूतानां सदा भक्तिमतां हरौ ॥ ४६ ॥

आबालवृद्धमाबद्धमस्तकाञ्जलिशोभिनाम् ।
नानादेशागतानां च नराणां भाग्यशालिनाम् ॥ ४७ ॥

सपुत्रमित्रदाराणां बृन्दैः सान्द्रं सुशोभनम् ।
विच्छिन्नाग्रनिवेश[शं]तत्परीतं द्वारमास्थितः ॥ ४८ ॥

प्रणम्य भक्त्या साष्टाङ्गं प्रहर्षं प्राप्नुयां परम् ।
तत्र श्री[वें]कटाधीशं ततस्तत्र कृताञ्जलिः ॥ ४९ ॥

राजवीथीषु रम्यासु प्रदक्षिणपरो भवन् ।
नित्यमुक्तसमानानां तदीयानां महात्मनाम् ॥ ५० ॥

भवनानि विचित्राणि पश्यन् हृष्टः पुनःपुनः ।
स्वामिपुष्करिणीतीरं श्रयेयं श्रमनाशनम् ॥ ५१ ॥

ततस्त्वाचम्य तत्तीर्थे कृतमाध्याह्निकक्रियः ।
वराहरूपिणं देवं वामाङ्कस्थवसुन्धरम् ॥ ५२ ॥

प्रणम्य प्राञ्जलिः कुर्यां प्रदक्षिणमहं ततः ।
तीर्थं प्रदक्षिणं कुर्वन् श्रीशैलस्तुतिरूपिणीः ॥ ५३ ॥

कुलशेखरसूक्तीरप्युच्चार्यानम्य वै रथम् ।
पुनः परीतं विच्छिन्नाभिनिवेशमुपेत्य च ॥ ५४ ॥

नत्वा श्रीमन्महद्द्वारं प्रविश्यान्तः प्रसन्नधीः ।
आस्थानचिञ्चामचलच्छायां शेषांशकां ततः ॥ ५५ ॥

आनम्य मण्टपांश्चैव पश्येयं विपुलोन्नतान् ।
बलिपीठं महादिव्यं ब्रह्मरुद्रादिसेवितम् ॥ ५६ ॥

ध्वजस्तम्भेन सहितं प्रणम्य प्राञ्जलिर्मुदा ।
भावयेयं वृषाद्रीशं प्रणतार्तिहरं प्रभुम् ॥ ५७ ॥

तत्र प्रदक्षिणपरान्नमस्कारपरान् मुहुः ।
वेदपारायणपरान् वेदान्तव्याक्रियापरान् ॥ ५८ ॥

इतिहासपुराणादीन् पठतः शृण्वतोऽपि च ।
स्तोत्रपाठे च निरतान् ब्रह्मविद्यासु निष्ठितान् ॥ ५९ ॥

सङ्कीर्तनपरान् शौरेः गुणश्रवणतत्परान् ।
ध्याननिष्ठान् योगनिष्ठाञ्जपशीलांस्तथा यतीन् ॥ ६० ॥

आबद्धाञ्जलिपद्मां[श्चाप्या]नन्दाश्रुभिराप्लुतान् ।
पुलकाञ्चितगात्रांश्च पूतभावान्महात्मनः ॥ ६१ ॥

सन्तानधनराज्यश्रीसंपदादिवरार्थिनः ।
लब्ध्वा वरं ततस्तूर्णमिष्टालापपरानपि ॥ ६२ ॥

सर्वान्महाभागवतान् संपश्येयं पुनःपुनः ।
ततो वेंकटनायक्याः स्थानं दृष्ट्वा ततःपरम् ॥ ६३ ॥

आनम्य चम्पकतरुं तन्नामाङ्कितवीथिकाम् ।
प्रदक्षिणपरस्सर्वं पश्येयं च कृताञ्जलिः ॥ ६४ ॥

शालिमुद्गतिलादीनां शालास्तत्र सहस्रशः ।
सर्वसंपत्समृद्धाश्च पाकशाला मनोरमाः ॥ ६५ ॥

स्वामिपुष्करिणीतीर्थं दृष्ट्वाऽऽचम्य ततःपरम् ।
यामुनेयाभिधं दिव्यं माल्यागारं मनोहरम् ॥ ६६ ॥

गोपीनां रमणं तत्र वेणुनादविनोदिनम् ।
सुवर्णमण्टपं चैव नारायणगिरिं तथा ॥ ६७ ॥

बलिपीठं पुनर्गत्वा प्रत्यग्द्वारं च चाम्पकम् ।
बद्धाञ्जलिस्ततः पश्यन्प्रासादान्परमाद्भुतान् ॥ ६८ ॥

पायसान्नैर्गुडान्नैश्च शुद्धैरोदनराशिभिः ।
दधिक्षीराज्यसंपन्नैर्मृष्टान्नैर्विविधोदनैः ॥ ६९ ॥

अपूपैः स्वादुभिर्हृद्यैः शालिपिष्टोपपादितैः ।
सुगन्धैर्गोघृतैः पक्वैः प्रभूतगुडसंमितैः ॥ ७० ॥

पृथुकैर्गुडसंमिश्रैस्सजीरकमरीचकैः ।
कन्दमूलफलैश्चैव व्यञ्जनैर्विविधैरपि ॥ ७१ ॥

संपूर्णां पाकशालां च संप्रविश्याथ सन्नतः ।
श्रियं तत्र स्थितां देवीं श्रीनिवासमनःप्रियाम् ॥ ७२ ॥

प्रणमेयं तदाज्ञप्तो भजेयं यागशालिकाम् ।
दिव्यं ततो रत्नमयं श्रीमहामणिमण्टपम् ॥ ७३ ॥

तत्र शय्यागृहं रम्यं तत्रस्थं देवमच्युतम् ।
श्रिया देव्या धरण्या च सेवितं पार्श्वयोस्सदा ॥ ७४ ॥

उत्सवार्हमुदाराङ्गमुज्ज्वलायुधभूषणम् ।
प्रणिपत्य प्रसन्नात्मा परमानन्दमाप्नुयाम् ॥ ७५ ॥

ततः परीत्य तं धन्यो वस्त्रागारं महर्द्धिमत् ।
वाहनानि महार्हाणि विमानं चानतस्ततः ॥ ७६ ॥

छत्रचामरकोशं च श्रयेयं सैन्यनायकम् ।
ततो रामानुजाचार्यं प्रपन्नकुलशेखरम् ॥ ७७ ॥

अप्राकृतं विमानं च आनन्दनिलयाह्वयम् ।
प्रणम्य तदनुज्ञातः प्रणमन्नृहरिं ततः ॥ ७८ ॥

प्रदक्षिणपरो भूत्वा पक्षिराजं त्रयीमयम् ।
परमानन्दजनकं पश्येयं पुष्पमण्टपम् ॥ ७९ ॥

प्रविश्य पक्षिराजं च भजेयं द्वारपालकौ ।
ततस्तत्र विचित्राणि रत्नानि विविधानि च ॥ ८० ॥

वाहनानि महार्हाणि भूषणानि सहस्रशः ।
दिव्याम्बराण्यनेकानि क्षौमपीताम्बराणि च ॥ ८१ ॥

सुवर्णरौप्यखण्डानि धनानि विविधानि च ।
गजांश्च पशुसङ्घांश्च छत्रव्यजनचामरैः ॥ ८२ ॥

समस्तदेशजातानि वस्तून्यन्यान्यनेकशः ।
श्रीवेंकटेशप्रीत्यर्थं सर्वदेशनिवासिभिः ॥ ८३ ॥

सर्वान् समर्पितान् पश्यन्नुपहारांश्च सन्निधौ ।
आत्मस्वरूपानुगुणमपि श्रीशमनःप्रियम् ॥ ८४ ॥

द्रव्यं यत्किञ्चिदतुल्मुपहारं समर्प्य च ।
प्रणमन् परया भक्त्या भजेयं कृतकृत्यताम् ॥ ८५ ॥

ततो रामानुजाचार्यं पुरस्कृत्य यतीश्वरम् ।
श्रीवेंकटाचलाधीशं श्रीनिधिं करुणानिधिम् ॥ ८६ ॥

अस्मद्भाग्यपरीपाकमखिलाभीष्टदायिनम् ।
नाथं समस्तजगतां नाथं नः कुलदैवतम् ॥ ८७ ॥

मातरं पितरं बन्धुं भ्रातरं सुहृदं गुरुम् ।
अस्मत्कुलधनं भोग्यमाचार्यकुलदर्शितम् ॥ ८८ ॥

शेषाचलशिरोरत्नं श्रीनिवासं परात्परम् ।
महनीयं परं ब्रह्म वन्दिषीय पुनःपुनः ॥ ८९ ॥

पश्यन् रमन् समुत्तिष्ठंस्तुवन्नृत्यन् पुनःपुनः ।
पुलकाञ्चितगात्रश्च भवेयं प्राञ्जलिस्ततः ॥ ९० ॥

द्वारपालाभ्यनुज्ञातः कृपया चावलोकितः ।
कथञ्चित्प्रविशन् भीतो महामण्टपमन्तरा ॥ ९१ ॥

पश्यन् हरिं प्रसन्नात्मा प्राप्नुयामर्धमण्टपम् ।
तस्मिन्धनुर्धरं रामं सौमित्रिमपि जानकीम् ॥ ९२ ॥

हनूमन्तं च सुग्रीवमङ्गदं दौत्यलक्षणम् ।
विष्वक्सेनं विहङ्गेशमनन्तं चानतस्ततः ॥ ९३ ॥

उपसृत्य च सोपानं कुलशेखरनाम[य]कम् ।
भयभक्तिसमाक्रान्तः पार्श्वं दक्षिणमास्थितः ॥ ९४ ॥

निभृतः प्रणतः प्रह्वो भवेयं प्राञ्जलिस्ततः ।
शुभाः श्रीभट्टनाथस्य सूक्तीर्मङ्गलरूपिणीः ॥ ९५ ॥

शठारिकलिजित्सूक्तीश्शरणागतिवाचिकाः ।
श्रीवेंकटेशविषयाः श्रीनिवासमनःप्रियाः ॥ ९६ ॥

तदीयप्रवरैः सार्धं गद्यं चाप्यनुसन्दधत् ।
श्रीभूमिनीलादेवीनां दिव्यहस्तोपलालितौ ॥ ९७ ॥

शरण्यौ चाशरण्यानां शङ्खचक्रादिचिह्नितौ ।
विलासविक्रमक्रान्तत्रैलोक्यौ लोकपावनौ ॥ ९८ ॥

वन्दारुजनमन्दारौ मञ्जीरद्युतिरञ्जितौ ।
हंसकालङ्कृतौ दिव्यौ किङ्किणीकविभूषितौ ॥ ९९ ॥

पारिजातादिकुसुमैः सूरिभिश्चार्चितौ सदा ।
श्रीमच्छठारिकलिजिच्छ्रीरामानुजयोगिभिः ॥ १०० ॥

प्राप्यप्रापकभावेन प्रपन्नौ परभक्तितः ।
सेवेय श्रीनिवासस्य चरणौ जलजोपमौ ॥ १०१ ॥

सौवर्णकाहलाकारे जङ्घे सर्वमनोहरे ।
समानसंनिवेशं च चारुजानुयुगं तथा ॥ १०२ ॥

कदलीकाण्डकान्तोरुयुगलं चातिसुन्दरम् ।
दिव्यपीताम्बराश्लिष्टं दीप्रकाञ्चीगुणोज्ज्वलम् ॥ १०३ ॥

कटीतटं च रुचिरं कान्तखड्गविराजितम् ।
वन्दारुभववाराशिकटीदघ्नत्वसूचकम् ॥ १०४ ॥

करं वामं कटिन्यस्तं कनत्कङ्कणभूषणम् ।
वैकुण्ठमेतद्धामेति व्यञ्जकं दक्षिणं करम् ॥ १०५ ॥

लावण्यनिम्नगावर्तनाभिं चापि तनूदरम् ।
इन्दिरामन्दिरं वक्षश्चन्द्रचन्दनचर्चितम् ॥ १०६ ॥

विहरन्तीं श्रियं तत्र वेंकटाचलनाय[यि]काम् ।
ग्रीवां च कम्बुवत्कान्तां ग्रैवेयकविभूषिताम् ॥ १०७ ॥

समस्तशोकशमनं चन्द्रकान्तं तदाननम् ।
शुचिस्मितं सुन्दरोष्ठं शोभनाधरपल्लवम् ॥ १०८ ॥

सुकपोलौ सुनासां च सुन्दरभ्रूलतायुगम् ।
दयाकञ्चुकितापाङ्गैर्दृष्टादृष्टफलप्रदे ॥ १०९ ॥

दिव्याम्बुजदलाकारे दीर्घे दिव्ये च लोचने ।
तथा करयुगा[गो]दञ्चच्छङ्खचक्रे सदोज्ज्वले ॥ ११० ॥

उन्नतांसयुगालम्बिलसन्मकरकुण्डले ।
उदग्रकर्णचापौ चाप्युल्लसत्कर्णपूरके ॥ १११ ॥

रम्ये ललाटे विलसदूर्ध्वपुण्ड्रं ललाटिकाम् ।
लसद्रत्नकिरीटं च जगन्नाथत्वसूचकम् ॥ ११२ ॥

एवं सर्वाङ्गसौन्दर्यमियत्तारहितं प्रभुम् ।
आपादमौलिलावण्यमखिलाभरणादिकम् ॥ ११३ ॥

समस्तार्तिहरं सद्यस्सौख्यदं च पृथक् पृथक् ।
अनुभूयानुभूयाहमाप्नुयां प्रीतिमुत्तमाम् ॥ ११४ ॥

सर्वाङ्गसुन्दरं पुंसां दृष्टिचित्तापहारिणम् ।
महनीयोपवीतेन वैजयन्त्यादिभूषितम् ॥ ११५ ॥

हारकेयूरकटकैरन्यैराभरणोत्तमैः ।
माल्यैश्चन्दन[म्पक]पुन्नागमालतीकुसुमाञ्चितैः ॥ ११६ ॥

अन्यैः कमलकह्लारैरसंख्येयैरलङ्कृतम् ।
सौशील्याश्रितवात्सल्यसौलभ्यादिगुणार्णवम् ॥ ११७ ॥

वेदान्तवेद्यविभवं विधिरुद्रादिसेवितम् ।
चिन्तामणिमशेषाणां शेषाचलशिरोमणिम् ॥ ११८ ॥

श्रीभूनीलाकुचमणिं देवदेवशिखामणिम् ।
वैकुण्ठनाथं मन्नाथं वासुदेवमिवापरम् ॥ ११९ ॥

वेङ्कटाचलशृङ्गाग्रविहाररसिकं हरिम् ।
पश्यन् पश्यन्प्रसन्नात्मा भवेयं नित्यकिङ्करः ॥ १२० ।

इत्थं श्रीवेङ्कटेशस्य सेवाक्रमपरां शुभाम् ।
गार्ग्यश्रीशठजिद्दाससूक्तिं श्रुतिसुखावहाम् ॥ १२१ ॥

प्राप्यां च प्रार्थनारूपामनुसन्दधतोऽन्वहम् ।
लभन्ते श्रीनिवासस्य नित्यसेवामनुत्तमाम् ॥ १२२ ॥

श्रीः ॥ श्रीघनगुरवेनमः ॥

॥ इति वेंकटेशसेवाक्रमः ॥

## ॥ श्लोकत्रयम् ॥ ६ ॥

प्रातः स्मरामि रमया सह वेंकटेशं
मन्दस्मितं मुखसरोरुहकान्तिरम्यम् ।
माणिक्यकान्तिविलसन्मकुटोर्ध्वपुण्ड्रं
पद्माक्षलक्ष्यमणिकुण्डलमण्डिताङ्गम् ॥ १ ॥

प्रातर्भजामि कररम्यसुशङ्खचक्रं
भक्ताभयप्रदकटिस्थलदत्तपाणिम् ।
श्रीवत्सकौस्तुभलसन्मणिभूषणोद्यत्
पीताम्बरं मदनकोटिसुमोहनाङ्गम् ॥ २ ॥

प्रातर्नमामि परमाद्य[त्म]पदारविन्दम्
आनन्दसान्द्रनिलयं मणिनूपुराढ्यम् ।
एतत्समस्तजगतामिति दर्शयन्तं
वैकुण्ठमत्र भजतां करपल्लवेन ॥ ३ ॥

श्लोकत्रयस्य पठनं दिनपूर्वकाले
दुस्स्वप्नदुश्शकुनदुर्भयपापशान्त्यै ।
नित्यं करोति मतिमान्परमात्मरूपं
श्रीवेंकटेशनिलयं व्रजति स्म योऽसौ ॥

श्रीः घनगुरवे नमः

॥ इति श्लोकत्रयम् ॥

## ॥ वेदव्यासध्यानम् ॥ ७ ॥

श्रीवेंकटेशमनुवासरमिन्दिरेशं
दुग्धान्नपूर्णमधुशर्करगोघृताढ्यम् ।
रम्भाफलेन सह षड्रसयुक्तदिव्य-
राजान्नसूपममृतं स्मरतां करस्थम् ॥ १ ॥

संपूर्णवृष्टिमिह वर्षय कालमेघैः
दुर्भिक्षकालरहितं कुरु वेंकटेश ।
कारुण्यजीवननिधिर्जगतां त्वमद्य
त्वामेव नौमि सततं वरद प्रसीद ॥ २ ॥

तिष्ठन् स्वामिसरोवरस्थलवरे श्रीवेंकटेश सयन्
लक्ष्म्याऽलङ्कृतबाहुमध्यविलसत्सर्वाङ्गभूषोज्ज्वलः ।
वैकुण्ठाद्रिरसौ समस्तजगतामित्येव संदर्शयन्
विश्वालिङ्गनभाग्यवान् विजयते ब्रह्मेन्द्ररुद्रेश्वरः ॥ ३ ॥

वेदव्यासकृतं ध्यानं निद्रान्ते स्मरतामिदम् ।
सर्वारोग्यं च भोगश्च नराणां तत्पदं भवेत् ॥

॥ इति वेदव्यासध्यानम् ॥

## [।। श्रीवेङ्कटेशनिध्यानम् ।। ८ ।।]

ईशानां जगतोऽस्य वेंकटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षस्स्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम् ।
पद्मालंकृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ।। १ ।।

श्रीवेंकटेशदयितां श्रियं घटकभावतः ।
समाश्रित्य वृषाद्रीशचरणौ शरणं श्रये ।। २ ।।

श्रीमन् शेषगिरीश ते पदयुगे मञ्जीरसंराजिते
सक्तं मानसमस्तु [मे तव] शुभे जङ्घे सुजान्वञ्चिते ।
रम्भाकान्तिहरोरुकाण्डयुगलीं प्राप्तं कटीं सेवते
काञ्चीनूपुरकिङ्किणीपरिचितां पीताम्बरालंकृताम् ।। ३ ।।

नाभीपङ्कजतुन्दबन्धनलसद्दिव्योदरापाश्रयं
पद्माकौस्तुभहारमाल्यसुभगां वक्षस्स्थलीं गाहते ।
सर्वाभीष्टवरप्रदानकटिबन्धाब्जाग्र्यचक्रोज्ज्वलैः
हस्तैःश्लिष्टमनल्पभूषणयुतैः कण्ठं समालम्बते ।। ४ ।।

मुक्तारत्नविराजिकुण्डललसद्गण्डं सुबिम्बाधरं
नासाशोभि दयार्द्रलोचनयुगं सुभ्रूर्ध्वपुण्ड्रोज्ज्वलम् ।
वक्त्रं रत्नललाटिकापरिलसत्फालं सतृष्णं पिबत्
मौलौ रज्जति माल्यशोभिनि महारत्नाभिषेकोज्ज्वले ।। ५ ।।

भूयो वक्त्रमनुप्रसर्पति ततः कण्ठावसक्तं भुजैः
श्लिष्टं वक्षसि पद्मया परिचिते लग्नं पुनर्मध्यमम् ।
कट्यूरुद्वयजानुषु प्रविततं जङ्घावसक्तं पदोः
प्राप्तं तिष्ठति तत्र गात्रसुषमासक्तं वृषाद्रीश ते ।। ६ ।।

**।। इति श्रीवेंकटेशनिध्यानम् ।।**

## ॥ अञ्जनशैलनाथस्तोत्रम् ॥ ९ ॥



पुलकिनि भुजमध्ये पूजयन्तं पुरन्ध्रीं
भुवननयनपुण्यं पूरिताशेषकामम् ।
पुनरपि वृषशैले फुल्लनीलोत्पलाभं
पुरुषमनुभवेयं पुण्डरीकायताक्षम् ॥ १ ॥

आजानसौहृदमपारकृपामृताब्धिम्
अव्याजवत्सलमवेलसुशीलमाद्यम् ।
आनन्दराशिमनुरागमयावरोधम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ २ ॥

आताम्रपादमवदातसुवर्णचेलम्
आपीनबाहुशिखरोज्ज्वलशङ्खचक्रम् ।
आविस्मिताननममन्ददयाकटाक्षम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ ३ ॥

अप्राकृतावयवसंहितसंनिवेशम्
आरूढयौवनमहीनकुमारभावम् ।
अम्लानकान्तिमतिवाङ्मनसानुभावम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ ४ ॥

आशावकाशसमुदित्वरसर्वगन्धम्
आस्वादयत्सुगमसर्वरसस्वभावम् ।
आश्लेषगम्यसुखसंस्पृशनातिरेकम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ ५ ॥

आदर्शयन्तमतिसंकुचिताक्षिशक्तिम्
आश्रावयन्तमखिलान् बधिरान् प्रकृत्या ।
आभाषयन्तमभितो नतमूकवर्गम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ ६ ॥

आधावयन्तमतिमारुतमेव पङ्गून्
आजानुलम्बिभुजयन्तमहो कुबाहून् ।
अन्यांश्च कृत्तशिरसः प्रतिजीवयन्तम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ ७ ॥

आजन्मनिर्धनजनानलकेशयन्तम्
अज्ञानपि त्रिदशदेशिकदेश्ययन्तम् ।
अह्नाय वन्ध्यमपि मर्त्यमवन्ध्ययन्तम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ ८ ॥

आबद्धकङ्कणमशेषशरण्यतायाम्
आपत्सहायमपराधसहं नतानाम् ।
आसन्नसामगसुखालससूरिवर्गम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ ९ ॥

अध्यासितासनसरोजसनूपुराङ्घ्रिम्
आमुक्तवीरकटकायतवृत्तजङ्घम् ।
आश्चर्यजानुयुगमप्रतिमोरुकाण्डम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ १० ॥

आवर्तिनिम्ननिखिलाण्डनिदाननाभिम्
आयामिदोर्विवरकेलिगृहावरोधम् ।

आबद्धरत्नमयभूषभुजाचतुष्कम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ ११ ॥

अंसावलम्बिमणिकुण्डलकान्तगण्डम्
आविस्स्मितांशुमधुराधरबन्धुजीवम् ।
आस्याब्जसौरभसमुत्सुकदीर्घनासम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ १२ ॥

अर्धेन्दुभास्वदलिकोल्लसदूर्ध्वपुण्ड्रम्
आलोलनीलकुटिलालकचारुवक्त्रम् ।
आविर्मयूखमणिचूडमहाकिरीटम्
आराधयामि हरिमञ्जनशैलनाथम् ॥ १३ ॥

वादिभीतिकरार्येण रचिता भावबन्धु[तः] ।
शोभते वेङ्कटाद्रीशविषया स्तुतिरद्भुता ॥

इति अञ्जनशैलनाथस्तोत्रं संपूर्णम् ॥

---



श्रीः

श्रीघनगुरवे नमः

## ॥ वेंकटेशस्तोत्रम् ॥ १० ॥



कौशिकश्रीनिवासार्यतनयं विनयोज्ज्वलम् ।
वात्सल्यादिगुणावासं वन्दे वरददेशिकम् ॥

पद्मस्थां युवतीं परार्ध्यवृषभाद्रीशायतोरस्स्थली-
मध्यावासमहोत्सवां क्षणसकृद्विश्लेषवाक्यासहाम् ।
मूर्तीभावमुपागतामिव कृपां मुग्धाखिलाङ्गां श्रियं
नित्यानन्दविधायिनीं निजपदे न्यस्तात्मनां संश्रये ॥ १ ॥

श्रीमच्छेषमहीधरेशचरणौ प्राप्यौ च यौ प्रापकौ
अस्मद्देशिकपुङ्गवैः करुणया संदर्शितौ तावकौ ।
प्रोक्तौ वाक्ययुगेन भूरिगुणकावार्यैश्च पूर्वैर्मुहुः
श्रेयोभिः शठवैरिमुख्यमुनिभिस्तौ संश्रितौ संश्रये ॥ २ ॥

यस्यैकं गुणमादृताः कवयितुं नित्याः प्रवृत्ता गिरः
तस्याभूमितया स्ववाङ्मनसयोर्वैक्लव्यमासेदिरे ।
तत्तादृग्बहुसद्गुणं कवयितुं मोहाद्वृषाद्रीश्वरं
काङ्क्षे कार्यविवेचनं न हि भवेन्मूढाशयानां नृणाम् ॥ ३

यत्पादा . . योषितं निजसकृत्स्पर्शेन काञ्चिच्छिला-
मङ्गार . . डिम्भतामनुपमौ शान्तं कमप्यञ्चितौ ।
यत्पादूरखिलां शशास च महीमाश्चर्यसीमास्थलीम्
अद्राक्षं हरिमञ्जनाचलतटे निर्निद्रपद्मेक्षणम् ॥ ४ ॥

अत्रस्यन्मणिराजराजिविलसन्मञ्जीरनिर्यन्महः-
स्तोमप्रास्तसमस्तविस्तृततमश्श्रीमन्दिराभ्यन्तरम् ।
व्याकोचाम्बुजसुन्दरं चरणयोर्द्वन्द्वं वृषाद्रीशितुः
चक्षुर्भ्यामनुभूय सर्वसुलभं प्राप्स्यामि मोदं कदा ॥ ५ ॥

सत्कुल्या समकाललब्धतनुभिर्गोपीभिरत्यादरात्
विन्यस्तौ वदने कुचे च नितरां रोमाञ्चरोहाञ्चिते ।
पद्माभूकरपल्लवैः सचकितं संवाह्यमानौ मृदू
मान्यौ वेङ्कटभूधरेशचरणौ मार्गे दृशोः स्तां मम ॥ ६ ॥

प्रातः फुल्लपयोरुहान्तरदलस्निग्धारुणान्तस्थलौ
निष्पीताखिलनीरनीरधिलसन्नीलाम्बुदाभौ बहिः ।
राकाशीतमरीचिसन्निभनखज्योतिर्वितानाञ्चितौ
पादौ पन्नगपुङ्गवाचलपतेर्मध्येमनस्तां मम ॥ ७ ॥

मन्दारप्रसवाभिरामशिरसां बृन्दारकश्रेयसां
बृन्दैरिन्दुकलाभृता च विधिना वन्द्यौ धृतानन्दथू ।
बन्धच्छेदविधायिनौ विनमतां छन्दश्शताभिष्टुतौ
वन्दे शेषमहीधरेशचरणौ वन्दारुचिन्तामणी ॥ ८ ॥

चिञ्चामूलकृतासनेन मुनिना तत्त्वार्थसन्दर्शिना
कारुण्येन जगद्धितं कथयता स्वानुष्ठितिख्यापनात् ।
निश्चिक्ये शरणं यदेव परमं प्राप्यं च सर्वात्मनां
तत्पादाब्जयुगं भजामि वृषभक्षोणीधराधीशितुः ॥ ९ ॥

नन्दिष्यामि कदाऽहमेत्य महता घर्मेण तप्तो यथा
मन्दोदञ्चितमारुतं मरुतले मर्त्यो महान्तं ह्रदम् ।

संतप्तो भवतापदावशिखिना सर्वार्तिसंशामकं
पादद्वन्द्वमहीशभूधरपतेर्निर्द्वन्द्वहृन्मन्दिरम् ॥ १० ॥

यौ वृन्दावनभूतले व्यहरतां दैतेयवृन्दावृते
कुप्यत्कालियविस्तृतोच्छ्रितफणारङ्गेषु चानृत्यताम् ।
किञ्चानस्समुदास्थतां किसलयप्रस्पर्धिनावासुरं
तन्वातां मम वेंकटेशचरणौ तावंहसां संहृतिम् ॥ ११ ॥

शेषित्वप्रमुखान्निरीय तु गुणान्नित्या हरेस्सूरयो
वैकुण्ठे तत एत्य वेंकटगिरिं सौलभ्यमुख्यानिह ।
नित्योदञ्चितसंनिधेर्निरुपमान्निर्विश्य तस्याद्भुतान्
निर्गन्तुं प्रभवन्ति हन्त न ततो वैकुण्ठकुण्ठादराः ॥ १२ ॥

संफुल्लाद्भुतपुष्पभारविनमच्छाखाशतानां सदा
सौरभ्यानुभवाभियन्मधुलिहां सङ्घैर्वृते भूरुहाम् ।
उद्यद्रश्मिभिरुज्ज्वलैर्मणिगणैरुत्तुङ्गशृङ्गैर्वृष-
क्षोणीभर्तरि वर्ततेऽखिलजगत्क्षेमाय लक्ष्मीसखः ॥ १३ ॥

नानादिङ्मुखवासिनो नरगणानभ्यागतानादरात्
प्रत्युद्यात इवान्तिकस्फुटतरप्रेक्ष्यप्रसन्नाननः ।
सानुक्रोशमनास्सडिम्भमहिलान् संप्राप्तसर्वेप्सितान्
कुर्वन्नञ्जनभूधरे कुवलयश्यामो हरिर्भासते ॥ १४ ॥

आपादादनवद्यमाच शिरसस्सौन्दर्यसीमास्पदं
हस्तोदञ्चितशङ्खचक्रमुरसा बिभ्राणमम्भोधिजाम् ।
माल्यैरुल्लसितं मनोज्ञमकुटीमुख्यैश्च भूषाशतैः
मध्येतोरणमञ्जनाचलतटे भान्तं हरिं भावये ॥ १५ ॥

मञ्जीराञ्चितपादमद्भुतकटीविभ्राजिपीताम्बरं
पद्मालङ्कृतनाभिमङ्गमहसा पाथोधरभ्रान्तिदम् ।
पार्श्वालङ्कृतिशङ्खचक्रविलसत्पाणिं परं पूरुषं
वन्दे मन्दहसं विचित्रमकुटीजुष्टं वृषाद्रीश्वरम् ॥ १६ ॥

नानाभासुररत्नमौक्तिकवरश्रेणीलसत्तोरण-
स्वर्णस्तम्भयुगान्तरालकमृशप्रद्योतमानाननम् ।
आनासश्रुतिलोलनीलविशदस्निग्धान्तरक्तेक्षणं
नाथं प्रेक्षितुमञ्जनाचलतटे नालं सहस्रं दृशाम् ॥ १७ ॥

चक्राब्जे करयुग्मकेन सततं बिभ्रत् करेण स्पृशन्
सव्येनोरुमपीतरेण चरणौ सन्दर्शयन् भूषणैः ।
सद्रत्नैः सकला दिशो वितिमिराः कुर्वन् वृषाद्रौ हरिः
शुद्धस्वान्तनिषेविते विजयते शुद्धान्तबाह्यान्तरः ॥ १८ ॥

सुस्निग्धाधरपल्लवं मृदुहसं मीनोल्लसल्लोचनं
गण्डप्रस्फुरदंशुकुण्डलयुगं विभ्राजिसुभ्रून्नसम् ।
फालोद्भासिपरार्घ्यरत्नतिलकं वक्रं प्रलम्बालकं
भव्यं वेंकटनायकस्य पिबतां भाग्यं न वाचां पदम् ॥ १९ ॥

त्वत्पादाम्बुजसस्पृहं मम मनः कुर्यास्त्वदन्यस्पृहां
दूरं तोलय दुःखजालजननीं त्वत्पादवाञ्छाद्विषम् ।
किंच त्वत्परतन्त्रभूसुरकृपापात्रं क्रिया मां सदा
सर्पाधीश्वरभूधरेन्द्र भगवन् सर्वार्थसंदायक ॥ २० ॥

नाकार्षं श्रुतिचोदितां कृतिमहं किञ्चिन्न चावेदिषं
जीवेशौ भवभञ्जनी न च भवत्पादाब्जभक्तिर्मम ।

श्रीमत्त्वत्करुणैव देशिकवरोपज्ञं प्रवृत्ता मयि
त्वत्प्राप्तौ शरणं वृषाचलपतेऽभूवं ततस्त्वद्भरः ॥ २१ ॥

श्रीमत्कौशिकवंशवारिधिविधोः श्रीवेंकटेशाख्यया
विख्यातस्य गुरोर्विशुद्धमनसो विद्यानिधेः सूनुना ।
भक्त्यैतां वरदाभिधेन भणितां श्रीवेंकटेशस्तुतिं
भव्यां यस्तु पठेदमुष्य वितरेच्छ्रेयः परं श्रीसखः ॥ २२ ॥

**इति वेंकटेशस्तोत्रम् ॥**

श्रीमते रामानुजाय नमः

---

# वृषाद्रिनाथस्तोत्रम् ॥ ११ ॥



शीशेषशिखरिस्वामिन् रमाभृद्वक्षसस्तव ।
विलसत्पद्मसङ्काशौ चरणौ शरणं भजे ॥

त्वत्कल्याणगुणाङ्किताप्रलवचःपाळी सुधास्यन्दिनी
नृत्यन्ती वदने स्वयं विलसते मूढस्य मे श्रीविभो ।
क्षोणीमण्डलसंस्थसर्वरसिका [नन्दौघसन्दायिनी]
[दुर्मांसा]शनतत्परे वनमृगे व्याप्ता न किं चन्द्रिका ॥ १ ॥

वेदास्सर्वसुरेश्वराः कमलभूश्शम्भुश्च मन्वादयः
स्तोतुं यस्य महत्त्वमक्षमतमा व्यासादयश्चाभवन् ।
त्वद्दासस्त्वदुपाश्रितस्तव सुतस्तस्मादहं निर्भयः
स्वामिंस्तादृशवैभवस्य भवतः कर्तुं यतिष्ये [स्तुतिम्] ॥ २ ॥

श्रीवत्साङ्कयतीन्द्रसंनुतहरे श्रीवेंकटाख्ये गिरौ
वैकुण्ठात्स्वयमागतः प्रकृतिसंश्लिष्टानिमान् प्राणिनः ।
ब्रह्माण्डान्तरसंस्थितान् हि कृपया पातुं सदा वर्तसे
तस्माद्विश्वविधायिनस्तव कृपा निर्हेतुकैव ध्रुवम् ॥ ३ ॥

प्रह्लादः करिराड् विभीषण इति ख्याताश्च भक्ता ह्यमी
भक्त्या लब्धभवत्कृपापरिणतां तां लेभिरे संपदम् ।
तस्मात्केचिदहो सहेतुकपरां व्याचक्षिरे त्वत्कृपां
तेषां भक्तिमनिन्दितां तव कृपालब्धां कथं नोचिरे ॥ ४ ॥

सर्वेषां जगतां हि रक्षणविधौ सक्ता कृपा तावकी
काकं भू .... निलयं संरक्षयन्नाद्भुतम् (?) ।

मोहाद्दुर्विषयेषु सक्तमनसां पापात्मनामादिमं
मिथ्यादास्ययुतं त्वरक्षदिति मां चित्रं हरे श्रीविभो ॥ ५ ॥

हे स्वामिन् भवराजयक्ष्मणि बहुप्रारब्धनानामय-
व्यालीढ[ढे] क्षणदुर्भरेतर [गुरु]तैर[न्यै]रसाध्ये परम् ।
मग्नानां जडताजुषां प्रतिपदं तापत्रयीमूर्च्छया
छिन्नानां सकलात्मनां विजयते सञ्जीवनी त्वत्कृपा ॥ ६ ॥

दातॄणां प्रवरेण तेन भवता देयं धनं शाश्वतं
संख्यातीतमनन्तमङ्गलपदं प्राप्यं सुखान्वेषिणाम् ।
त्यक्त्वा लोष्टविकादिकाम्यमघदं काङ्क्षन्ति ये त्वैहिकं
तान्मूढानपि हे विभो तव कृपा मातेव संरक्षते ॥ ७ ॥

सर्वेषां जगतामधीश्वर इति त्वां ख्यापयन् श्रीविभो
स्फूर्जत्प्रत्नचिरत्नरत्नखचितः कोटीनतुल्यप्रभः ।
ब्रह्मेशानसुरेन्द्रसर्वदिविजैः संस्तूयमानस्य ते
साक्षान्मन्मथमन्मथस्य मकुटी संराजते मस्तके ॥ ८ ॥

देव त्वन्मुखपङ्कजोपरि महासौरभ्यलोभागताः
स्निग्धारालविनीलकुन्तलगणा वल्गन्ति भृङ्गा यथा ।
कर्णाटो[र्णौ चो]त्पलकर्णपूर[विसरत्कान्ति]छटाराजितौ
पश्ये सुन्दरशष्कुलीपरिचितौ श्रीशेषभूभृद्विभो ॥ ९ ॥

कर्पूरार्पितमूर्ध्वपुण्ड्रमलिके विभ्राजते संततं
हारिद्रं तिलकं च शेषधरणीभृद्वल्लभ श्रीविभो ।
लावण्यामृतपूरपूरितमुखे किं पुण्डरीकद्वयं
[भाभातीति] महाद्भुतं जनयते द्वन्द्वं हि ते नेत्रयोः ॥ १० ॥

भ्रूभङ्गाङ्कयुतं शुचिस्मितरुचिज्योत्स्नापरिष्कारितं
सेवे त्वन्मुखचन्द्रमण्डलमहं जृम्भत्तमोहारिणम् ।
स्वामिन् शुक्रबृहस्पती चिरतरात्तस्योभयोः पार्श्वयोः
भ्राजन्ताविव रत्नपुञ्जखचिते द्वे कुण्डले गण्डयोः ॥ ११ ॥

दन्तालिस्तव कुन्दकुड्मलततेस्तुल्या परं राजते
सौगन्ध्यादहिचाम्पकेयकलिकाप्रोद्भासिका नासिका ।
स्वामिन् विद्रुमबिम्बयुग्ममधरं व्यातन्वते माधुरी-
सौरभ्यारुणताश्रयस्त्वदधरः श्रीशेषभूभृद्विभो ॥ १२ ॥

ग्रैवेयादिविभूषणानुकलितः कण्ठस्त्वदीयो हरे
शेषाद्रीश सुवर्णपट्टकलितं शङ्खं विडम्बीयते ।
चत्वारः किल जातपल्लवसुरक्षोणीजशाखा इव
द्योतन्ते तव बाहवः प्रविलसद्रत्नाङ्गदालङ्कृताः ॥ १३ ॥

श्रीवैकुण्ठमिदं पदाब्जयुगमित्यादर्शयन्नात्मनां
श्रीहस्तस्तव दक्षिणश्शमयते तापं भवोपार्जितम् ।
हस्तोऽन्यः कटिसंगतः कथयते कुक्षिस्थसंख्यातिग-
ब्रह्माण्डातिभरोद्धृतेर्दृढबलं मध्यस्य कर्तुं दशाम् ॥ १४ ॥

अन्यो दक्षिणपाणिरप्यमरराजात्यन्तबाधाकृतां
दैत्यानां वधकारि चक्रमनिशं धत्तेऽञ्जनाद्रिप्रभो ।
अन्यो वामकरस्तदब्जनयनागर्भैकनिर्भेदना-
रावं शङ्खमुदारचन्द्रसुषमं धत्ते त्रिलोकीविभो ॥ १५ ॥

यस्मिन् कौस्तुभबिम्बितां निजतनुं दृष्ट्वा रमाऽन्येर्ष्यया
त्वां पश्यत्यध ईक्ष्यदृक्प्रसरणैर्वक्षस्तदुद्भावये ।

संवर्ते विशते यदन्तरगृहं ब्रह्मादिजीवावलिः
तस्यां ते विनिवर्तते च जठरं तत्कीर्तये ते हरे ॥ १६ ॥

ब्रह्मावासपयोजनालनिलयं मे [चित्तहं]सोऽधुना
लावण्यामृतपूरितं प्रविशते नाभिह्रदं तावकम् ।
कीर्यत्काञ्चनवारिजायतरजस्तुल्याम्बरालंकृतं
वल्गन्मेखलया परिष्कृतमहं मध्यं भजे सुन्दरम् ॥ १७ ॥

रम्भास्तम्भमदेभहस्तकरभप्रागल्भ्यचौर्यक्षमौ
ऊरू मे हृदयाब्जदर्पणतलस्तंभानुभावं गतौ ।
स्वामिन्नञ्जनशैलनाथ सततं सेवे भवज्जङ्घिके
स्फूर्जन्मन्मथकाहलीकमलगर्भाकारलीला जुषौ ॥ १८ ॥

स्वामिन् वेदसुवर्णहंसककृतप्रोद्वेलशोभाझरी-
चञ्चद्दिव्यमुनीशमानससरोजाताब्जलीलावहौ ।
नि[त्यं श्री]करपल्लवानुकलनासंवाहितौ सुन्दरौ
पादौ तेऽञ्जनशैलनायक निधिप्रायौ सदा संश्रये ॥ १९ ॥

प्रागुत्तुङ्गपयोधिवारिधिजले त्वं योगनिद्रां भजन्
नाभिप्रोत्थितपङ्कजस्थितविधिं दृष्ट्वा बहुव्याकुलम् ।
पुच्छोद्धट्टनकम्पिताखिलजगन्मीनाकृ[तिं भेजिवान्]
घोराकारयुतं सुरारिमवधीश्चोरं श्रुतीनां हरे ॥ २० ॥

जृम्भद्दैत्यसुपर्वबाहुपटलीसंसक्तसर्पाधिराड्-
भोगालीढविघूर्णितावनिधरे मग्ने जले वारिधेः ।
वात्सल्यादुदधार्षि(?) भूधरममुं त्वं कच्छपाकारवान्
[ब्रह्मेशानवलारि]षु स्तुतिपरेष्वम्भोरुहाक्ष प्रभो ॥ २१ ॥

स त्वं जृम्भितघुर्घुरारवविभिन्नाशावशावल्लभ-
श्रोत्रो यज्ञवराहमूर्तिरसुरं हत्वा हिरण्याक्षकम् ।
अम्भोधौ सरसीव नागदशनाग्रासक्तपद्माकृतिं
दंष्ट्राग्रेण रसामधार्षि भगवन् श्रीशेषभूभृद्विभो ॥ २२ ॥

प्रह्लादाभयदामरेश्च भयदां ते नारसिंहीं तनुं
वन्दे भूरिसटाच्छटाविदलित[प्रोत्तुङ्ग]धाराधराम् ।
घूर्णत्पाटलनेत्रकोणनिपतज्ज्वालास्फुलिङ्गावृत-
क्षोणीचक्रतलां हिरण्यकशिपुप्रध्वंसिकां श्रीविभो ॥ २३ ॥

भिक्षुत्वाद्बहुदैन्यतो बलि[मखे खिन्नस्तदा] सायनैः [वामनः]
तिष्ठन्वेंकटभूधरे बहुजनाद्वित्तं बलादाप्स्यसे । (?)
क्षत्रान् पापवतो [महा]बलयुतांस्त्रिस्सप्तकृत्वोऽवधीः
तीक्ष्णाग्रेण परश्वधेन भगवंस्त्वं भार्गवस्सन् हरे ॥ २४ ॥

रामो दाशरथिर्भवंस्त्रिभुवनप्रख्याततेजोरवि-
प्रोद्वेलांशुगणैरिवातिनिशितैस्सान्द्रैश्शरैस्सानुजः ।
शेषा[द्रीश विभो] सुरारिमवधीस्सीतारमाचोरकं
पौलस्त्यं दशकन्धरं युधि जगद्विद्रावणं रावणम् ॥ २५ ॥

स्वामिन् हन्तुमशक्यमम्बुजभवास्त्राद्यैश्शरैस्तीक्ष्णैः
कक्षे रावणमानिबध्य चतुरो वार्धीन् य आसेदिवान् ।
तादृग्विक्रमशालिनं बलवतामग्रेसरं वालिनं
धैर्यादेकशरेण घोरमवधीश्चित्रं महत्त्वं तव ॥ २६ ॥

त्यक्त्वा त्वामिह धर्मरूपमनघं यत्तुच्छधर्मार्थिने
त्वत्पित्रे न कृतैव मोक्षसरणिर्जाताय सूर्यान्वये ।

तत्कार्यं मम धर्म इत्यभिमतं प्राप्ताय गृध्राय वै
तच्चितं परमं पदं भगवता दत्तं त्वया श्रीविभो ॥ २७ ॥

यस्ते भूर्यपराधकृच्चलमतिर्दृप्तश्च काकासुरः
पापात्मा भवदस्त्रघर्षणभिया धावन्विधीन्द्रेश्वरान् ।
मां रक्षध्वमितीच्छया शरणमागम्याक्षमैरक्षितुं
त्यक्तस्तैः पुनरागतस्तव कृपापात्रं बभूव प्रभो ॥ २८ ॥

अत्रत्याखिलभक्तरक्षणमिषाद्ब्रह्मादिभिः संस्तुतः
कान्तारे पितृवाक्यपालनपरः स्वाम्यागमिष्यत्यसौ ।
इत्येवं दृढनिश्चयात्तमनसा दत्तं शबर्या फलं
भुक्त्वा तृप्तिमवाप्यसे रघुवर श्रीशेषभूभृद्विभो ॥ २९ ॥

क्रूराणां भुवि दानवांशजनुषां कंसादिदुष्टात्मनां
संहाराय वसुन्धरास्थितजनात्यन्तव्यथाकारिणाम् ।
श्रीकृष्णोऽसि निजाङ्घ्रिपद्मयुगसेवासक्तशिष्टात्मनां
संरक्षाभरकारणाय च हरे श्रीशेषभूभृद्विभो ॥ ३० ॥

पौरावेदितनैजचेष्टितगणानाकर्ण्य मात्रा भृशं
कुप्यन्त्या यदुलूखले दृढतरं रज्ज्वा निबद्धो भवान् ।
लीलाभिस्तदुलूखलं करतलेनोद्धाव्य गत्वाऽर्जुन-
द्वन्द्वस्यामररूपतामविदधच्छेषक्षमाभृद्विभो ॥ ३१ ॥

बाले मातुलसंज्ञकेन रिपुणा कंसेन या प्रेषिता
वक्षोज(द्वय)गुप्तभूरिगरला तत्पूतना या पुरा ।
स्तन्यं क्ष्वेलमयं सहासुभिरहो पीत्वा च निश्चेतनां
कृत्वा तां गिरिसन्निभामविहरच्छ्रीमान् भवान् श्रीविभो ॥ ३२ ॥

एकं बालमधो विधाय विजने स्थित्वा च तस्योपरि
क्षिप्रं गोपगृहे पिबन् दधि महायन्त्रे घटान्तःस्थितम् ।
शेषं [तस्य] मुखे विमृज्य सहसा निर्गत्य तत्रान्तरे
ह्यायातैर्गृहिभिर्निरीक्ष्य स भवान् तं ताडितं प्राहसत् ॥ ३३ ॥

बाल्येन त्वयि मृत्तिकां कबलयत्याक्रोशतः सादरं
माता मृत्परिहारणाय वदनं चोद्घाट्य ते पाणिना ।
यत्रालोक्य किलाब्जजाण्डपटलीमाश्चर्यसंमोहिता
तस्थावञ्जनशैलनायक हरे माया तवात्यद्भुता ॥ ३४ ॥

कालिन्दीसविधे विनोदमुरलीनादेन संमोहिताः
सुन्दर्यस्त्वरयाऽऽगताः स्मरनिभं त्वां वीक्ष्य गोपाङ्गनाः ।
त्वद्ब्रह्मात्मकताविलोकनदशापन्ना मुनीशा यथा
दिव्यानन्दपयोधिमग्नमनसोऽभूवन् [वृषा]द्रि[द्रि][प्र]भो ॥ ३५ ॥

हे स्वामिन् यमुनातटे तव परं वेत्तुं महत्त्वं पुरा
वत्सान् धेनुगणांश्च गोपपृथुकान् धाता स्वमायाहृतान् ।
ज्ञात्वा तादृशरूपकांस्त्वमपि तान् कृत्वा मनोहंकृतिं
छित्त्वा तस्य बहूकृतिं च कमलास्वामिन्नकार्षीः प्रभो ॥ ३६ ॥

अक्रूराय भवत्पदैकमनसे पूर्वं त्वया दर्शितान्
दीप्यत्कौस्तुभशङ्खचक्रमकुटीश्रीविद्युता शोभितान् ।
दिव्यानन्दमयामितामृतरसासारप्रदान् श्रीविभो
सेवेऽहं बहुविग्रहान् घननिभांस्त्वद्विश्वरूपात्मकान् ॥ ३७ ॥

बिभ्रल्लाङ्गलमायुधं सुररिपून् भिन्दन् सपक्षान्नृपान्
संरक्षन् करुणार्द्रदृष्टिभिरमून् लोकान् समालोकयन् ।

इन्द्राद्यैर्दिविजैस्स्तुते कटितटीनीलाम्बरालंकृतो
रेवत्या हृदयप्रियोऽसि भगवन् श्रीशेषभूभृद्विभो ॥ ३८ ॥

बुद्धोऽसि त्रिपुराङ्गनाव्रतकृते भङ्गं विधायासुरान्
तद्भर्तृन् शितिकण्ठसायकहतान् कृत्वा पुरा श्रीविभो ।
म्लेच्छान्वाजिखुरोद्धतक्षितिपरागाच्छादिताशाम्बरान्
क्षुद्रान् भूरिबलान् नृशंसचरितान् कल्की हरिष्यस्यहो ॥ ३९

पङ्केजातभवो जगज्जननकृद्ब्रह्मा चतुर्भिर्मुखैः
क्षोणीमण्डलभारवाहचतुरश्शेषस्सहस्राननैः ।
यत्खेलाविहितावतारगणनां कर्तुं न शक्तो हरे
तेऽनन्ताः खलु दिव्यमङ्गलगुणैः संशोभितास्तावकाः ॥ ४० ॥

त्वत्पादाम्बुजयुग्मचिन्तनसुधापानैकलोलात्मनः
पुंसो मानसमन्यदेव विषयं कृत्यं कथं वाञ्छति ।
त्यक्त्वा दिव्यरसालसालजनितं माधुर्यसारं फलं
कीरः काङ्क्षति किं शलाटुपटलं नैम्बं हरे श्रीविभो ॥ ४१ ॥

अज्ञानावृतमात्मधर्मरहितं दूष्यं च नीचैर्गुणैः
नानादुर्विषयानुषक्तहृदयं क्षुद्रं कृतघ्नं जडम् ।
त्वद्भक्तेषु कृतापचारमपि मां संरक्षसे (?) बन्धुवत्
तस्मात्त्वां न च विस्मरामि सततं श्रीशेषभूभृद्विभो ॥ ४२ ॥

संशोध्यन्मणिदीपकस्थिरदशा सन्यांशितास्संत्यजन् (?)
लब्ध्वा वज्रमनर्घमात्तकुतुकस्सन्न त्यजत्यादरात् ।
लक्ष्या शोधयता मुमुक्षुरखिलान् सामान्यदेवांस्त्यजन्
लब्ध्वा त्वां शरणं परात्परतरं हृष्यन्न मुञ्चत्यहो ॥ ४३ ॥

भूसंस्थाश्च पराशरप्रभृतयः खे नारदाद्यर्षयः
पङ्केजोद्भवलोकसंस्थमुनयस्सर्वे सनन्दादयः ।
तत्सायुज्यसमुद्युजोऽपि परमे व्योम्नि स्थितास्सूरयः
त्वामेवाञ्जनशैलराजनिलयं पश्यन्ति वै सन्ततम् ॥ ४४ ॥

शेषाद्रेश्शिखरे सुवर्णरचिते साले कटाहाकृतौ
गुप्तं मूलधनं यथा तव परब्रह्मस्वरूपं हरे ।
विज्ञानाञ्जनमुद्रितान्तरदृशा दृष्ट्वा भृशं योगिनः
प्रायच्छ[न्नुपलभ्य मो]क्षसरणीदारिद्र्यनिर्मोचनम् ॥ ४५ ॥

ईशानं जगतामनन्तगुणिनं दिव्योल्लसद्विग्रहं
लक्ष्मीशं धृतशङ्खचक्रमनघं शेषक्षमाभृद्विभो ।
सत्यं ज्ञानमनन्तमित्यभिमतश्रुत्यर्थवैषम्यतः
व्याचक्षन् कुदृशो निराकृतिकलं त्वां निर्गुणं मायिनः ॥ ४६ ॥

ब्रह्माद्यैः सकलैस्सुपर्वपतिभिर्यद्द्रै दुरापं पदं
ध्यानोन्मीलितयोगिनामपि भृशं यच्चेतसां दूरगम् ।
यद्वाचामपि दूरवर्ति परमं तद्धाम लक्ष्मीविभो
त्वत्पादाब्जयुगप्रपत्तिनिरता गच्छन्ति सौलभ्यतः ॥ ४७ ॥

त्वद्भक्तो निवसन्निहैव द्रुहिणस्याण्डाद्बहिस्संस्थिते
वैकुण्ठेऽनुभवत्यपारकरुणं त्वां दिव्यदृष्ट्या हरे ।
वात्सल्यादनुवर्तसे त्वमपि तं नित्यानपायात्मना
वत्सं धेनुरिवानुलालनरता श्रीशेषभूभृद्विभो ॥ ४८ ॥

शेषाद्रीश कियन्निशाकरसुधासारासुलुण्टाकिनी (?)
दृक् ते सञ्चरिणी जिजीवयिषते जागत्कजीवव्रजान् ।

कल्पस्स व्यवह्री[ह्यभिधी]यते सहि लयः कालः परीफण्यते
हालाहल्यशिखावलीसहचरी यस्मिन्विसर्पिष्यति ॥ ४९ ॥

सृष्ट्यां भौतिकरूपकाण्यपघनान्यास्वाद्य वै प्राणिनः
पुण्यापुण्यपरीणतानि परितश्चाराचरव्यापिनः ।
स्वर्गं नारकमम्बुजासनपदं धात्रीमधोविष्टपं
यातायातशतैः प्रयान्ति भवतो मायाविमोहीकृताः ॥ ५० ॥

मायावृत्तकलेबरान्तरगतास्सर्वे तनूभृद्गणाः
ब्रह्माण्डान्तरकोणकूपकुहरे विश्रामिताः कर्मभिः ।
तन्निष्कामिकमार्गबोधरहितास्तिष्ठन्ति मूढात्मकाः
बद्धद्वारविटङ्कमध्यविचराः कीटा इव श्रीविभो ॥ ५१ ॥

एता[यस्ता]वद्भवमग्नजन्तुगणितः पापात्मनामादिमः
क्षुद्र(ः) क्रूरमना नृशंसचरितश्चापल्यदोषाकरः ।
इतस्सन्ततनीचकृत्यनिरतो गत्यन्तराभाववान्
सोऽहं ते चरणौ व्रजामि शरणं श्रीशेषभूभृद्विभो ॥ ५२ ॥

सर्वेष्वब्जभवाण्डकोटिषु जनास्संख्यापराश्चेत्सदा
तेषामायुरनन्तकालिकमिति स्याच्चेत्परार्धादिकम् [धिका] ।
संख्याऽन्या समुपार्जिता यदि भवेदाजन्मजन्मान्तरं
स्वामिन् मत्कृतपातकानि गणितुं शक्यानि लक्ष्मीविभो ॥ ५३ ॥

आस्तां कल्पशतानुभाव्यदुरितव्रातः परं दुर्वचः
त्वत्कैङ्कर्यरुचिः कदाचिदपि वा नास्त्येव मे पापिनः ।
शेषक्ष्माधरनाथ मामथ यतो रक्षेति [वाङ्नास्ति तत्]
स्वामिन् केवलतावकीयकृपया संरक्षणीयो हरे ॥ ५४ ॥

पुत्रत्वान्न च हातुमिच्छसि हरे पापात्मकत्वाच्च मां
स्वामिन्नानुग्रहीतुमिच्छसि परं ना[चा?] शङ्कच दौष्कामिकम् ।
तस्मान्नारकदुःखहेतुदुरितं दृष्ट्वा परं दुःख्यसि
हाहा हन्त तवापि दुःखवशतां दास्यामि लक्ष्मीविभो ॥ ५५ ॥

पापानीह मया कृतानि गणितुं शक्यानि लक्ष्मीविभो
सद्यस्तानि समुह्य वारय कृपादृष्ट्या निरातङ्कया ।
यद्वा तावकभक्तिमेव परमां तन्निष्कृतिं देहि मे
नोपेक्ष्यश्शरणागतः खलु धरानाथस्य सत्यात्मनः ॥ ५६ ॥

यद्वा दुर्वचपापकृत्यनिरतं मां रक्ष लक्ष्मीविभो
वात्सल्यादिगुणोदधिं मम गुरुं संवीक्ष्य सत्त्वात्मकम् ।
कृत्वा मायिनिराकृतिं तव मतप्रख्यातनिर्वाहकं
ब्रह्मेन्द्रादिकिरीटरत्नसुषमानीराजिताङ्घ्रे हरे ॥ ५७ ॥

त्वद्याथात्म्यनिबोधके मनुवरे निष्ठामवाप्यादरात्
ओङ्कारार्थमवेत्य तत्त्वस[श]रणा[ण]स्तन्नारशब्दोदितम् ।
अर्थं चायनशब्दवेद्यममलं व्युत्पत्तियुग्मेप्सितं
मुक्तस्स्याद्विबुधोचितार्थमपि वै ज्ञानी चतुर्थीरितम् ॥ ५८ ॥

लक्ष्मीनाथ परात्मनश्चिदचितोस्तत्त्वस्य रूपं विदन्
शेषित्वं भवतश्चराचरविभोश्शेषत्वमप्यात्मनः ।
वैषम्यं प्रकृतेर्विचाय सदुपायोपेयभावात् सुधीः
त्वत्पादौ शरणं गतस्तदितरो [रन्]मुक्तो भवेत्संत्यजन् ॥ ५९ ॥

मुक्तस्संप्रतिपूजितस्सुरवरैर्ब्रह्मादिभिस्संव्रजन्
अण्डं चावरणान्यतीत्य च महाव्यक्तेस्त[क्ते त]रन्वै ततः ।

स्नातस्सन् विरजासरित्यथ भजन् दिव्योल्लसद्विग्रहं
वैकुण्ठं[ण्ठे] भवतैव नन्दति समं श्रीशेषभूभृद्विभो ॥ ६० ॥

सौवर्णाञ्चितदिव्यवज्रफलकप्रत्युप्तसालावृते
भव्योत्तुङ्गसहस्ररत्नखचितस्तम्भोद्धृते मण्डपे ।
देवीभिस्सह संस्थितं फणिपतेर्भोगे फणालंकृते
ध्याये त्वां धृतशङ्खचक्रमनघं संवेष्टितं सूरिभिः ॥ ६१ ॥

दिव्यं तत्पुरधामनामकपुरद्वारोल्लसद्गोपुरं
भास्वत्कोटिसमप्रभं हृदि सदा ध्यायेऽञ्जनाद्रिप्रभो ।
तस्मिन् या विरजा नदी प्रवहते तस्योभयोः पार्श्वयोः
सौवर्णद्रुमपुष्पगुच्छसुरभीण्युद्यानबृन्दानि च ॥ ६२ ॥

हरे सूरयस्ते परे धाम्नि संस्थाः
[नमन्तो] वदंते[तो] भवत्कीर्तनानि ।
प्रगीय[याथ] साम प्रधीयन्ति कीर्तिं
वितन्वन्ति नित्यं विचित्रं च कृत्यम् ॥ ६३ ॥

क्वचित्कीररूपा हरे सूरयस्ते
प्रवक्ष्यन्ति नामानि शाखिव्रजेषु ।
क्वचिद्भृङ्गरूपा भवन्माल्यगन्धान्
समाघ्राय दिव्यं प्रमोदं लभन्ते ॥ ६४ ॥

तव परमपदे वै सूरयः पार्श्वयो[स्ते]
परिषदि रचयन्ते द्राविडाम्नायगानम् ।
इति यतिकुलनाथश्रीशठारिप्रमुख्याः
अपि च गुरुवरास्ते मङ्गलान्याचरन्ति ॥ ६५ ॥

श्रीशेषशैलशिखरे चिदचिद्विशिष्टं
श्रीसंश्रितोरसमपारकृपैकपात्रम् ।
आपादशीर्षमवलोक्य हरे जनास्त्वां
भक्ताभयप्रद सदैव मुदं लभन्ते ॥ ६६ ॥

अम्मङ्गिवेङ्कटाचार्यचरणाम्बुजसंश्रितः ।
चकार रघुनाथार्यः शेषभूभृद्विभोस्स्तुतिम् ॥

इति तिरुनन्दाळ्वंशरघुनाथाचार्येण कृतं वृषाद्रिनाथस्तोत्रं संपूर्णम् ॥



श्रीः

## ॥ श्रीनिवासस्तोत्रम् ॥ १२ ॥

अथ विबुधविलासिनीषु विष्वङ्मुनिमभितः परिवार्य तस्थुषीषु ।
मदविहतिविकत्थनप्रलापास्ववमतिनिर्मितनैजचापलासु ॥ १ ॥

त्रिभुवनमुदमुद्यतासु कर्तुं मधुसहसागतिसर्वनिर्वहासु ।
मधुरसभरिताखिलात्मभावास्वगणितभीतिषु शापतश्शुकस्य ॥ २ ॥

अतिविमलमतिर्महानुभावो मुनिरपि शान्तमना निजात्मगुप्त्यै ।
अखिलभुवनरक्षकस्य विष्णोः स्तुतिमथ कर्तुमना मनाग्बभूव ॥ ३ ॥

श्रियःश्रियं षड्गुणपूरपूर्णं श्रीवत्सचिह्नं पुरुषं पुराणम् ।
श्रीकण्ठपूर्वामरबृन्दवन्द्यं श्रियःपतिं तं शरणं प्रपद्ये ॥ ४ ॥

विभुं हृदि स्वं भुवनेशमीड्यं नीळाश्रयं निर्मलचित्तचिन्त्यम् ।
परात्परं पामरपारमेनमुपेन्द्रमूर्तिं शरणं प्रपद्ये ॥ ५ ॥

स्मेरातसीसूनसमानकान्तिं सुरक्तपद्मप्रभपादहस्तम् ।
उन्निद्रपङ्केरुहचारुनेत्रं पवित्रपाणिं शरणं प्रपद्ये ॥ ६ ॥

सहस्रभानुप्रतिमोपलौघस्फुरत्किरीटप्रवरोत्तमाङ्गम् ।
प्रवालमुक्तानवरत्नहारतारं हरिं तं शरणं प्रपद्ये ॥ ७ ॥

पुरा रजोदुष्टधियो विधातुरपाहृतान् यो मधुकैटभाभ्याम् ।
वेदानुपादाय ददौ च तस्मै तं मत्स्यरूपं शरणं प्रपद्ये ॥ ८ ॥

पयोधिमध्येऽपि च मन्दराद्रिं धर्तुं च यः कूर्मवपुर्बभूव ।
सुधां सुराणामवनार्थमिच्छंस्तमादिदेवं शरणं प्रपद्ये ॥ ९ ॥

वसुन्धरामन्तरदैत्यपीडां(?) रसातलान्तर्विवशाभिविघ्नाम् ।
उद्धारणार्थं च वराह आसीच्चतुर्भुजं तं शरणं प्रपद्ये ॥ १० ॥

नखैर्वरैस्तीक्ष्णमुखैर्हिरण्यमरातिमामर्दितसर्वसत्त्वम् ।
विदारयामास [च] यो नृसिंहो हिरण्यगर्भं शरणं प्रपद्ये ॥ ११ ॥

महन्म[अहंम]हत्वेन्द्रियपञ्चभूततन्मात्रमात्रप्रकृतिः पुराणी ।
यतः प्रसूता पुरुषा[ष]स्तदात्मा तमात्मनाथं शरणं प्रपद्ये ॥ १२ ॥

पुरा य एतत्सकलं बभूव येनापि तद्यत्र च लीनमेतत् ।
आस्तां यतोऽनुग्रहनिग्रहौ च तं श्रीनिवासं शरणं प्रपद्ये ॥ १३ ॥

निरामयं निश्चलनीरराशिनीकाशसद्रूपमयं महस्तत् ।
नियन्तृ निर्मातृ निहन्तृ नित्यं निद्रान्तमेनं शरणं प्रपद्ये ॥ १४ ॥

जगन्ति यः स्थावरजङ्गमानि संहृत्य सर्वाण्युदरेशयानि ।
एकार्णवान्तर्वटपत्रतल्पे स्वपित्यनन्तं शरणं प्रपद्ये ॥ १५ ॥

निरस्तदुःखौघमतीन्द्रियं तं निष्कारणं निष्कलमप्रमेयम् ।
अणोरणीयांसमनन्तमन्तरात्मानुभावं शरणं प्रपद्ये ॥ १६ ॥

सप्ताम्बुजीरञ्जकराजहासं सप्तार्णवीसंसृतिकर्णधारम् ।
सप्ताश्वबिम्बाश्वहिरण्मयं तं सप्तार्चिरङ्गं शरणं प्रपद्ये ॥ १७ ॥

निरागसं निर्मलपूर्णबिम्बं निशीथिनीनाथनिभाननाभम् ।
निर्णीतनिद्रं निगमान्तनित्यं निःश्रेयसं तं शरणं प्रपद्ये ॥ १८ ॥

निरामयं निर्मलमप्रमेयं निजान्तरारोपितविश्वबिम्बम् ।
निस्सीमकल्याणगुणात्मभूतिं निधिं निधीनां शरणं प्रपद्ये ॥ १९ ॥

त्वक्चर्ममांसास्थ्यसृगश्रुमूत्रश्लेष्मान्त्रविट्च्छुक्लसमुच्चयेषु ।
देहेष्वसारेषु न मे स्पृहैषा ध्रुवं ध्रुवं त्वं भगवन् प्रसीद ॥ २० ॥

गोविन्द केशव जनार्दन वासुदेव विश्वेश विश्व मधुसूदन विश्वरूप ।
श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष नारायणाच्युत नृसिंह नमो नमस्ते ॥२१॥

देवाः समस्तामरयोगिमुख्याः गन्धर्वविद्याधरकिन्नराश्च ।
यत्पादमूलं सततं नमन्ति तं नारसिंहं शरणं प्रपद्ये ॥ २२ ॥

वेदान् समस्तान् खलु शास्त्रगर्भान् आयुः स्थिरं कीर्तिमतीव लक्ष्मीम् ।
यस्य प्रसादात् पुरुषा लभन्ते तं नारसिंहं शरणं प्रपद्ये ॥ २३ ॥

ब्रह्मा शिवस्त्वं पुरुषोत्तमश्च नारायणोऽसौ मरुतांपतिश्च ।
चन्द्रार्कवाय्वग्निमरुद्गणाश्च त्वमेव नान्यत् सततं नतोऽस्मि ॥ २४ ॥

स्रष्टा च नित्यं जगतामधीशः त्राता च हन्ता विभुरप्रमेयः ।
एकस्त्वमेव त्रिविधा विभिन्नः त्वां सिंहमूर्तिं सततं नतोऽस्मि ॥ २५ ॥

हरिः ओम् शुभमस्तु ॥

इति श्रीनिवासस्तोत्रं संपूर्णम् ॥

श्रीः

## ॥ श्रीवेंकटेश्वरनवरत्नमालिकास्तुतिः ॥ १३ ॥



श्रीमानम्भोधिकन्याविहरणभवनीभूतवक्षःप्रदेशः
भास्वद्भोगीन्द्रभूमीधरवरशिखरप्रान्तकेलीरसज्ञः ।
शश्वद्ब्रह्मेन्द्रवह्निप्रमुखसुरवराराध्यमानाङ्घ्रिपद्मः
पायान्मां वेंकटेशः प्रणतजनमनःकामनाकल्पशाखी ॥ १ ॥

यस्मिन् विश्वं समस्तं चरमचरमिदं दृश्यते वृद्धिमेति
भ्रश्यत्यन्ते च तादृग्विभवविलसितस्सोऽयमानन्दमूर्तिः ।
पद्मावासामुखाम्भोरुहमद[धु]मधुविद्भिभ्रमोन्निद्रचेताः
शश्वद्भूयाद्विनम्राखिलमुनिनिवहो भूयसे श्रेयसे मे ॥ २ ॥

वन्दे देवं महान्तं दरहसितलसद्वक्त्रचन्द्राभिरामं
नव्योन्निद्रावदाताम्बुजरुचिरविशालेक्षणद्वन्द्वरम्यम् ।
राजन्मार्ताण्डतेजःप्रसितशुभमहाकौस्तुभोद्भास्युरस्कं
शान्तं श्रीशङ्खचक्राद्यमलकरयुतं भव्यपीताम्बराढ्यम् ॥ ३ ॥

पायाद्विश्वस्य साक्षी प्रभुरखिलजगत्कारणं शाश्वतोऽयं
पादप्रह्वाघराशिप्रशमननिभृताम्भोधरप्राभवो माम् ।
व्यक्ताव्यक्तस्वरूपो दुरधिगमपदः प्राक्तनीनां च वाचां
ध्येयो योगीन्द्रचेतस्सरसिजनियतानन्ददीक्षाविहारः ॥ ४ ॥

आद्यं तेजोविशेषैरुपगतदशदिङ्मण्डलाभ्यन्तरालं
सूक्ष्मं सूक्ष्मातिरिक्तं भवभयहरणं दिव्यभव्यस्वरूपम् ।

लक्ष्मीकान्तं खगेन्द्रध्वजमघशमनं कामितार्थैकहेतुं
वन्दे गोविन्दमिन्दीवरनवजलदश्यामलं चारुहासम् ॥ ५ ॥

राकाचन्द्रोपमास्यं ललितकुवलयश्याममम्भोजनेत्रं
ध्यायाम्याजानुबाहुं हलनलिनगदाशार्ङ्गरेखाञ्चिताङ्घ्रिम् ।
कारुण्याञ्चत्कटाक्षं कलशजलधिजापीनवक्षोजकोशा-
श्लेषावाप्ताङ्गरागोच्छ्रयललितनवाङ्कोरुवक्षस्स्थलाढ्यम् ॥ ६ ॥

श्रीमत्संपूर्णशीतद्युतिहसनमुखं रम्यबिम्बाधरोष्ठं
ग्रीवाप्रालम्बिवक्षस्स्थलसततनटद्वैजयन्तीविलासम् ।
आदर्शौपम्यगण्डप्रतिफलितलसत्कुण्डलश्रोत्रयुग्मं
स्तौमि त्वां द्योतमानोत्तममणिरुचिरानल्पकोटीरकान्तम् ॥ ७ ॥

सप्रेमौत्सुक्यलक्ष्मीदरहसितमुखाम्भोरुहामोदलुभ्यन्-
मत्तद्वैरेफविक्रीडितनिजहृदयो देवदेवो मुकुन्दः ।
स्वस्ति श्रीवत्सवक्षाः श्रितजनशुभदः शाश्वतं मे विदध्यात्
न्यस्तप्रत्यग्रकस्तूर्यनुपमतिलकप्रोल्लसत्फालभागः ॥ ८ ॥

श्रीमान् शेषाद्रिनाथो मुनिजनहृदयाम्भोजसद्राजहंसः
सेवासक्तामरेन्द्रप्रमुखसुरकिरीटार्चितात्माङ्घ्रिपीठः ।
लोकस्यालोकमात्राद्विहरति रचयन् यो दिवारात्रलीलां
सोऽयं मां वेंकटेशप्रभुरधिककृपावारिधिः पातु शश्वत् ॥ ९ ॥

श्रीशेषशर्माभिनवोपक्लृप्ता
प्रियेण भक्त्या च समर्पितेयम् ।
श्रीवेंकटेशप्रभुकण्ठभूषा
विराजतां श्रीनवरत्नमाला ॥ १० ॥

इति श्रीवेंकटेश्वरनवरत्नमालिकास्तुतिः समाप्ता ॥

---

## ॥ श्रीपद्मावतीनवरत्नमालिकास्तुतिः ॥ १४ ॥



श्रीमान् यस्याः प्रियस्सन् सकलमपि जगज्जङ्गमस्थावराद्यं
स्वर्भूपातालभेदं विविधविधमहाशिल्पसामर्थ्यसिद्धम् ।
रञ्जन् ब्रह्मामरेन्द्रैस्त्रिभुवनजनकः स्तूयते भूरिशो यः
सा विष्णोरेकपत्नी त्रिभुवनजननी पातु पद्मावती नः ॥ १ ॥

श्रीशृङ्गारैकदेवीं विधिमुखसुमनःकोटिकोटीरजाग्रद्-
रत्नज्योत्स्नाप्रसारप्रकटितचरणाम्भोजनीराजितार्चाम् ।
गीर्वाणस्त्रैणवाणीपरिफणितमहाकीर्तिसौभाग्यभाग्यां
हेलानिर्दग्धदैन्यश्रमविषममहारण्यगण्यां नमामि ॥ २ ॥

विद्युत्कोटिप्रकाशां विविधमणिगणोन्निद्रसुस्निग्धशोभा-
सम्पत्सम्पूर्णहाराद्यभिनवविभवालंक्रियोल्लासिकण्ठाम् ।
आद्यां विद्योतमानस्मितरुचिरचितानल्पचन्द्रप्रकाशां
पद्मां पद्मायताक्षीं पदनलिननमत्पद्मसद्मां नमामि ॥ ३ ॥

शश्वत्तस्याः श्रयेऽहं चरणसरसिजं शार्ङ्गपाणेः पुरन्ध्र्याः
स्तोकं यस्याः प्रसादः प्रसरति मनुजे क्रूरदारिद्र्यदग्धे ।
सोऽयं सद्योऽनवद्यस्थिरतररुचिरश्रेष्ठभूयिष्ठनव्य-
स्तव्यप्रासादपङ्क्तिप्रसितबहुविधप्राभवो बोभवीति ॥ ४ ॥

सौन्दर्योद्वेल्लहेमाम्बुजमहितमहासिंहपीठाश्रयाढ्यां
पुष्यन्नीलारविन्दप्रतिमवरकृपापूरसम्पूर्णनेत्राम् ।
ज्योत्स्नापीयूषधारावहनवसुषमक्षौमधामोज्ज्वलाङ्गीं
वन्दे सिद्धेशचेतस्सरसिजनिलयां चक्रिसौभाग्यऋद्धिम् ॥ ५ ॥

संसारक्लेशहन्त्रीं स्मितरुचिरमुखीं सारशृङ्गारशोभां
सर्वैश्वर्यप्रदात्रीं सरसिजनयनां संस्तुतां साधुबृन्दैः ।
संसिद्धस्निग्धभावां सुरहितचरितां सिन्धुराजात्मभूतां
सेवे संभावनीयानुपमितमहिमां सच्चिदानन्दरूपाम् ॥ ६ ॥

सिद्धस्वर्णोपमानद्युतिलसिततनुं स्निग्धसंपूर्णचन्द्र-
व्रीडासंपादिवक्त्रां तिलकुसुमविजयोद्योगनिर्निद्रनासाम् ।
तादात्वोत्फुल्लनीलाम्बुजहसनचणात्मीयचक्षुःप्रकाशां
बालश्रीलप्रवालप्रियसखचरणद्वन्द्वरम्यां भजेऽहम् ॥ ७ ॥

यां देवीं मौनिवर्याः श्रयदमरवधूमौलिमाल्यार्चिताङ्घ्रिं
संसारासारवाराँनिधितरतरणें[तरणतरिं] सर्वदा भावयन्ते ।
श्रीकारोत्तुङ्गरत्नप्रचुरितकनकस्निग्धशुद्धान्तलीलां
तां शश्वत्पादपद्मश्रयदखिलहृदाह्लादिनीं ह्लादयेऽहम् ॥ ८ ॥

आकाशाधीशपुत्रीं श्रितजननिवहाधीनचेतःप्रवृत्तिं
वन्दे श्रीवेंकटेशप्रभुवरमहिषीं दीनचित्तप्रतोषाम् ।
पुष्यत्पादारविन्दप्रसृमरसुमहश्शामितस्वाश्रितान्त-
स्तामिस्रां तत्त्वरूपां शुकपुरनिलयां सर्वसौभाग्यदात्रीम् ॥ ९ ॥

श्रीशेषशर्माभिनवोपक्लृप्ता
प्रियेण भक्त्या च समर्पितेयम् ।
पद्मावतीमङ्गलकण्ठभूषा
विराजतां श्रीनवरत्नमाला ॥ १० ॥

इति श्रीपद्मावतीनवरत्नमालिकास्तुतिः समाप्ता ॥

## ॥ श्रीपद्मावतीपरिणयतारावलिः ॥ १५ ॥

श्रीमानम्भोधिकन्याविहरणभवनीभूतवक्षःप्रदेशो
भास्वद्भोगीन्द्रभूमीधरवरशिखरप्रान्तकेलीरसज्ञः ।
शश्वद्ब्रह्मेन्द्रवह्निप्रमुखसुरवराराध्यमानाङ्घ्रिपद्मः
पायान्नः श्रीनिवासः प्रणतजनमनःकामनाकल्पशाखी ॥ १ ॥

श्रीमच्चन्द्रान्ववाये त्रिजगति महिते भूपतिः कश्चनासीत्
आकाशाख्यः स्वतेजःप्रशमितसकलारातिगर्वान्धकारः ।
प्रागाद्याशावधूटीकुचकलशतटीक्षौमितात्मीयकीर्तिः
निर्वेलौदार्यशाली हरिरिव धरणीं ह्लादयन्नादरेण ॥ २ ॥

पुत्राभावात्कदाचिन्नृपकुलतिलकः पुत्रकामेष्टिहेतोः
क्षोणीं सीरेण कर्षन् स्फुरदमलदलं हैममम्भोजमस्याम् ।
दृष्ट्वा तस्मिंश्च कन्यां सरसिजनयनां 'पुत्रिकेयं त्वदीये'-
त्याकर्ण्याकाशवाणीमनवधिकुतुकस्मेरवक्त्रोऽग्रहीत्ताम् ॥ ३ ॥

तस्मिन् यज्ञं नृपेन्द्रे कृतवति महिषी भूरिवान्तर्निधानं
दिव्यं तेजो वहन्ती स्फुटतमविभवा लब्धसंस्कारसम्पत् ।
अर्थं शक्तित्रयीवाक्षयमभिसुषुवे शक्रसाध्वीसदृक्षा
प्राप्ते काले मुहूर्ते लसितशुभगुणा मित्रतुल्यं सुपुत्रम् ॥ ४ ॥

धात्री [प्रोक्तः स निघ्नो] गुरुषु विधिवदाकल्प्य तज्जातकर्म
स्वारस्यं[स्मीयं] चाप्यपत्यं वसुदमि[म]वनिजां पद्मतौल्येन पद्माम् ।
चक्रे बालश्च सोऽयं विधुरिव ववृधे वासरैश्शुक्लपक्षे
पित्रादेर्ब्रह्मचर्यव्रतमथ विधिना प्राप चास्त्राणि वेदान् ॥ ५ ॥

बाला राजन्यमौलेरनुदिनमतुलां वृद्धिमासाद्यमाना
सेयं लब्धोदया श्रीहिमकरकलिकेवावलेह्याङ्गशोभा ।
कर्णान्तश्रान्तपङ्केरुहदलनयना मन्दहासोज्ज्वलास्या
सुभ्रूस्सौन्दर्यलक्ष्मीरिव सकलजनाह्लादभूत्यै बभूव ॥ ६ ॥

ततः कदाचित्—

तां पद्मां स्वालिबृन्दैस्सह कुसुमवने पारिजातप्रसूना-
न्यादायादाय रम्ये क्वचिदनुलवलीमण्टपे निक्षिपन्तीम् ।
दृष्ट्वा कोऽप्युत्तमस्त्वां विवहति पुरुषश्श्रीसमृद्धोऽचिरेणे-
त्युक्त्वा दत्त्वा शुभाशीर्वचनमथ ययौ नारदः पारदश्रीः ॥ ७ ॥

पश्चादाखेटलोभादधिगहनतलं धावयन्तं करीन्द्रं
दृष्ट्वा तुङ्गे तुरङ्गे कमपि च पुरुषं पद्मपत्रायताक्षम् ।
कोऽयं श्रीमान् वनान्ते विचरति सखि किं दृष्टपूर्वस्त्वयाऽयं
नो चेत् पृष्ट्वा स्वरूपं स्मररुचिरतनोश्चित्तमाश्वासयामि ॥ ८ ॥

इति सखीमुक्त्वा तं प्रति—

कस्त्वं भोः श्रीनिवासोऽस्म्यहमखिलजगन्नायकः काऽसि बाले
श्रीमानाकाशनामा नृपकुलतिलकस्तस्य पद्माऽस्मि पुत्री ।
कस्मादत्रागतस्त्वं तरुणि मनसिजं पृच्छ जाने न चाहं
वामो वामोरु यो मामनयदयि तव श्रीपदाम्भोजमूलम् ॥ ९ ॥

इति तेन प्रत्युक्ता—

सेयं श्यामा लताङ्गी सरसिजनयनस्यान्तरङ्गं विदित्वा
रेरे मा मानिषाद शृणु मम वचनं याहि शीघ्रं पिता मे ।

आगन्ता किं विविक्ते वससि चिरमिति श्लिष्टमुच्चार्य पार्श्वे
ज्ञात्वा गूढां सखीनां स्थितिमथ निरगाल्लज्जिता ताः प्रपेदे ॥ १० ॥

याते राजीवनेत्रे स्वयमथ सकलास्स्वास्सखीस्ता विहाय
स्वीयं प्राप्यावरोधं हृदि तमनुपदं चिन्तयन्त्येकरूपम् ।
दीना कन्दर्पतीव्रप्रहरणविकलस्वान्तरङ्गा कृशाङ्गी
नो नक्तं नो दिवा वा स्वपिति विहरति स्नाति भुङ्क्ते स्म पद्मा ॥११॥

चेतस्तस्या विदित्वा स च हयमधिरुह्याशु गेहं प्रपन्नः
कृच्छ्रेणातीत्य कक्ष्याः कथमपि शयनागारमभ्येत्य तल्पे ।
तामेवान्तर्दधानो दिशिदिशि पुरतः पार्श्वतश्चापि पद्मां
पद्माक्षीमीक्षमाणः प्रतिकलमुहुच्चिन्तयंस्तद्गुणौघान् ॥ १२ ॥

तदानीम्—

एह्येह्युत्तिष्ठ शेषे किमिदमुपनतं नास्ति ते किं बुभुक्षा
भुङ्क्ष्व प्रातश्च सम्यङ्न हि बत भवता भुक्तमित्यामनन्ती ।
आसीनाऽऽराच्च किं ते हृदयगतमहो किं नु वा सुन्दरीं ते
दृष्ट्वा मुग्धं मनस्ते कुत इति वकुला मेऽभिधत्स्वेत्यपृच्छत् ॥ १३ ॥

तस्यै सः—

मातः कान्तारदेशे द्विरदमनुसरन्नेकतो दैवयोगात्
आत्मीयाभिस्सखीभिस्सह कुसुमवने पारिजातापचायम् ।
कुर्वन्तीं व्योमनाम्नो नृपकुलतिलकस्यात्मजामम्बुजाक्षीम्
अद्राक्षं तत्कटाक्षैरपहृतमभवन्मन्मनश्चेत्यवादीत् ॥ १४ ॥

ततः—

नेतुं संभोज्य तं द्रागथ कृतशपथा प्रस्थिता तन्नगर्याः
मध्येमार्गं महेशं कलशजमुनिना पूजितं संप्रणम्य ।

प्राप्यानुज्ञां महर्षेर्महितगुणनिधेर्व्याससूनोश्शुकस्या-
तीत्यारण्यानि पद्मालिभिरथ वकुला सङ्गताऽऽसीत् क्रमेण ॥ १५ ॥

दृष्ट्वा पृष्ट्वा च बाला: किमिह वसथ का यूयमित्यादरोक्त्या
मातः पद्मावयस्या वयमिति च तदीयोत्तरं सा निशम्य ।
पौनःपुन्येन मध्ये पथि नृपतनयाशीलमाकर्णयन्ती
प्रायात्तूर्णं प्रमोदाद्वियदधिपपुरीं प्रांशुहर्म्याग्रभागाम् ॥ १६ ॥

तदैव—

आयान्तीं वीथिकायामथ शतसुषिरेणांशुकेनाञ्चिताङ्गीं
गुञ्जाशङ्खादिभूषामधिहृदयतलं स्वात्मजं धारयन्तीम् ।
भूतं भव्यं भवद्भः फलमपि कथयामीति तारं भणन्तीम्
आनाय्योचे भविष्यद्वद फलमिति तां राजपत्नी पुलिन्दाम् ॥ १७ ॥

सैवं पश्चात्पुलिन्दाऽप्ययि तव तनयोद्यानदेशे युवानं
दृष्ट्वा कन्दर्पतुल्यं सितनलिनदृशं तं वृषस्यन्त्यभीक्ष्णम् ।
विद्धा कन्दर्पबाणैरभिलषितमसावाप्नुयादेव बाले-
त्युक्त्वा राज्ञीमयासीत्पथिपथि च पुनर्व्याहरन्ती यथोक्तम् ॥ १८ ॥

ततः—

पुत्रीमासाद्य राज्ञी तव किमभिमतं ब्रूहि मे नैव गोप्यं
किं वा कार्यं करिष्ये तदपि च तनये तन्ममाचक्ष्व सद्यः ।
एवं सान्त्वं जनन्या कथितमनुगता म्लिष्टमाह स्म पद्मा
मातः श्रीशावलोकादहमभजमिमां तद्वियोगज्वरार्तिम् ॥ १९ ॥

राज्ञी पुत्र्या रहस्यं कथमपि कथितं सत्रपं सानुतापं
श्रुत्वा वै(फ)ल्यभीतस्फुटितनिजमनाः कृच्छ्रतः स्वात्तधैर्या ।
वत्सु त्वं नो बिभीयास्तव हृदयगतं नैव दुःसाधमेतत्
साध्नोमि त्वां च साधु प्रियतमहृदयां मोदयामीत्यवादीत् ॥ २० ॥

दृष्ट्वा पद्मासखीभिः सममथ वकुलाऽऽकाशभूमीशपत्नीं
देवि ! प्रख्यातकीर्तिर्वृषगिरिनिलयः श्रीनिवासस्तवैव ।
कन्यां सप्रेममैच्छत्कलयतु भवती पद्मिनीदानपूर्वं
तत्कल्याणं सुखेनेत्यवददथ नृपश्चाभ्यनन्दत्तथेति ॥ २१ ॥

श्रीमानाकारितस्तं सुरगुरुरचिरादेत्य चाकाशराजं
श्रीमन्वैशाखमासे सितदलनवमीसंयुते शुक्रवारे ।
अस्ति ह्युद्वाहलग्नं प्रतिहतकलुषं निश्चितं सुप्रशस्तं
तस्मिन् पद्माविवाहो भवतु नृपवरेत्येवमारादवोचत् ॥ २२ ॥

सोऽयं राजेन्द्रमौलिस्तदनु स वकुलां प्रेषयन् व्याससूनुं
दूतैरानाय्य तस्मै विधिवदतिथिसत्कारमाधाय धीमान् ।
पद्मिन्या त्वां विधित्सुर्गृहिणमधिप इत्युच्यतां भव्यवार्ते-
त्याख्यायाराच्छुकर्षिं फणिगिरिनिलयस्यान्तिकं प्राहिणोत्तम् ॥ २३ ॥

सद्यस्त्वष्टा तदात्वे वियदधिपविभोराज्ञया राजधानीं
नव्यप्रासादहर्म्यप्रमुखनिरुपमप्राभवाढ्यामकार्षीत् ।
रम्भास्तम्भैः प्रफुल्लप्रसवफलयुतै रम्यचूतप्रवालैः
चित्रैस्संस्थानभेदैस्तदनु पुरजनोऽभूषयद्रङ्गवल्ल्या ॥ २४ ॥

श्रीरप्यात्मप्रियं तं मणिगणनिचिते विष्टरे सन्निवेश्या-
भ्यज्य श्रीगन्धतैलैर्गगनचरधुनीवारिभिस्स्नापयित्वा ।
क्षौमं सन्धार्य नूत्नं मृगमदतिलकं फालभागे विधाया-
तानीद्गन्धानुलेपाद्यखिलविधपरिष्कारमामोदभूम्ना ॥ २५ ॥

पश्चाद्ब्रह्मेन्द्रवैवस्वतवरुणकुबेरादिभिर्देववृन्दैः
तैस्तैर्ब्रह्मर्षिवर्यैः प्रथितनिजतपस्संपदुन्मेषवद्भिः ।

वाणीन्द्राणीभवानीमुखविबुधवधूसङ्घयैरञ्चितोऽसौ
युक्तो माङ्गल्यवाद्यैर्वियदधिपपुरीं प्राविशच्छ्रीनिवासः ॥ २६ ॥

पद्माश्रीशौ तदानीं करिपतगपतिस्कन्धदेशे निषण्णौ
आदायाकाशराजो निजकुलगुरुभिः पौरवृद्धैरमात्यैः ।
साध्वीलोकैर्मृदङ्गाद्यखिलशुभमहातूर्यघोषैश्च सार्धं
तीर्णग्रामोत्सवौ तावनुपमकुतुकादानिनाय स्वगेहम् ॥ २७ ॥

श्रीपद्माश्रीनिवासौ निजगळलसितां श्रीमतीं पुष्पमालाम्
अन्योन्यं मन्दहासस्फुटरुचिरमुखाम्भोरुहौ लीलयैव ।
हर्षोत्कर्षं तदानीं पुरजनहृदयेष्वावहन्तौ त्रिवारं
वृद्धाचारानुरोधाद्विनिमयमवनीशाङ्गणे तावकार्ष्टाम् ॥ २८ ॥

स श्रीमान् श्रीनिवासो वियदधिपसुतापाणिमालम्ब्य पाणौ
निर्दिष्टं तेन राज्ञा विविधमणिमयस्तम्भदिव्यान्तराले ।
श्रीमत्कल्याणगेहे मणिगणविलसन्मण्टपे वेदिमध्ये
भास्वद्भास्वत्प्रकाशं मणिमयमविशत् प्रांशु कल्याणपीठम् ॥ २९ ॥

पादौ निर्णिज्य तीर्थैरथ मनुजपतिश्श्रीशमाराध्य सम्यक्
दत्त्वाऽनर्घ्यं किरीटप्रमुखमणिमयाशेषभूषाविशेषान् ।
पुत्रीं पद्मां सहेमाक्षतकुसुमशुभद्रव्यपूर्णाम्बुधारा-
पूर्वं प्रादात् प्रमोदात्करकमलतले सोऽपि जग्राह पद्माम् ॥ ३० ॥

स्रष्टा श्रीशेन पद्मागलभुवि विधिवन्मन्त्रपूतं प्रशस्ते
लग्ने माङ्गल्यसूत्रं सह शुभनिनदैर्धारयित्वा विधिज्ञः ।
पद्माहस्ताब्जदत्तैर्हुतभुजमपि तैर्हावयित्वाऽथ लाजैः
एतौ जायापती श्रीद्विजवरवचसाऽतोषयत्संप्रणम्रौ ॥ ३१ ॥

श्रीमान्ब्रह्मेशसङ्क्रन्दनवरुणकुबेरादिमान् देवसङ्घान्
देवोऽनुज्ञाप्य सर्वान् श्वशुरमपि मुदाऽऽनम्य पादारविन्दे ।
शेषाद्रौ शृङ्गभागे रुचिरमणिमहासौधसङ्घे नितान्तं
लक्ष्मीपद्मावतीभ्यामरमत मुदितः प्रेमसंपूर्णचेताः ॥ ३२ ॥

श्रीमान् श्रीवत्साङ्कितवक्षा वक्षोधिवासिलक्ष्मीकः ।
श्रीवेंकटेशदेवस्सततं श्रेयांसि दिशतु भूयांसि ॥ ३३ ॥

श्रीशेषशर्माभिनवोपक्लृप्तः प्रियेण भक्त्या च समर्पितोऽयम् ।
पद्माविभोर्मङ्गलकण्ठदेशे विराजतां श्रीनवकण्ठतारः ॥ ३४ ॥

॥ इति श्रीपद्मावतीपरिणयतारावलिः समाप्ता ॥

श्रीः

# उज्ज्वलवेंकटनाथस्तोत्रम् ॥ १६



रङ्गे तुङ्गे कवेराचलजकनकनद्यन्तरङ्गे भुजङ्गे
शेषे शेषे विचिन्वन् जगदवननयं भात्यशेषेऽपि दोषे ।
निद्रामुद्रां दधानो निखिलजनगुणध्यानसान्द्रामतन्द्रां
चिन्तां यां तां वृषाद्रौ विरचयसि रमाकान्त कान्तां शुभान्ताम् ॥१ ॥

तां चिन्तां रङ्गक्लृप्तां वृषगिरिशिखरे सार्थयन् रङ्गनाथ
श्रीवत्सं वा विभूषां व्रणकिणमहिराट्सूरिक्लृप्तापराधम् ।

## उज्ज्वलवेंकटनाथस्तोत्रटीका ॥

इदं स्तोत्रम् अन्तादिरूपेण परिणतमस्ति । तथाहि—प्रथमश्लोकान्ते शुभान्तामिति—द्वितीयश्लोकारम्भे तां चिन्तामिति । क्वचित् पूर्वश्लोकान्त्यपदस्य उत्तरश्लोकादित्वं, क्वचित् पूर्वश्लोकान्त्यवर्णस्य उत्तरश्लोकादित्वम् । एवं प्रबन्धान्त्यावयवस्य प्रबन्धारम्भगतत्वमपि ।

१. गुरुपरंपराशेखरायमाणस्य श्रीरङ्गेशयस्य श्रीवेंकटेशस्य चैक्यमनुभवति उभाभ्यां पद्याभ्याम् ।

कावेर्याः "हेमापगा" इति प्रसिद्धिमनुरुध्याह—**कनकनदीति** । **भुजङ्गे**—फणिपतिशयने । **शेषे**—शेषपर्यङ्कभाग इत्यर्थः । भाति—भासमाने, **अशेषेऽपि दोषे**—विषयसप्तमी । **निद्रामुद्राम्**—अबोधमुद्राम् । **दधान** इत्यस्य निद्रामुद्रां चिन्तामित्युभयत्र सम्बन्धः । निद्रामुद्रां यां चिन्तां च दधानः जगदवननयं, नय उपायः, विचिन्वन् शेषे इति क्रियया सम्बन्धः । **शेषे**—स्वपिषीत्यर्थः । हे **रमाकान्त कान्तां**—**रमणीयाम्** । **शुभान्ताम्**—शुभपर्यवसानां तां चिन्तां वृषाद्रौ विरचयसि, इति सम्बन्धः ।

२. **श्रीवत्सं वा विभूषाम्**—अत्र वाशब्द इवार्थकः । श्रीवत्सविभूषणमिव । **अहिराट्सूरिक्लृप्तापराधं व्रणकिणं**—श्रीमदनन्तसूरिभिः महातटाकनिर्माणसमये कुद्दालप्रहारेण जनितं व्रणकिणम् । वात्सल्यप्रकाशनाय श्रीवत्सविभूषणमिव धृत्वेति सम्बन्धः । **अवने**

धृत्वा वात्सल्यमत्युज्ज्वलयितुमवने सत्क्रतौ बद्धदीक्षो
बध्नन्स्वीयाङ्घ्रियूपे निखिलनरपशून् गौणरज्ज्वाऽसि यज्वा ॥ २ ॥

ज्वालारावप्रनष्टासुरनिवहमहाश्रीरथाङ्गाब्जहस्तं
श्रीरङ्गे चिन्तितार्थान्निजजनविषये योक्तुकामं तदर्हान् ।
द्रष्टुं दृष्ट्या समन्ताज्जगति वृषगिरेस्तुङ्गशृङ्गाधिरूढं
दुष्टादुष्टानवन्तं निरुपधिकृपया श्रीनिवासं भजेऽन्तः ॥ ३ ॥

अन्तः कान्तश्श्रियो नस्सकरुणविलसद्वृत्तरङ्गैरपाङ्गैः
सिञ्चन्मुञ्चन्कृपाम्भःकणगणभरितान्प्रेमपूरानपारान् ।
रूपं चापादचूडं विशदमुपनयन् पङ्कजाक्षं समक्षं
धत्तां हृत्तापशान्त्यै शिशिरमृदुलतानिर्जिताब्जे पदाब्जे ॥ ४ ॥

अब्जेन सदृशि सन्ततमिन्धे हृत्पुण्डरीककुण्डे यः ।
जडिमार्त आश्रयेऽद्भुतपावकमेतं निरिन्धनं ज्वलितम् ॥ ५ ॥

रक्षणरूपे—सत्क्रतौ—समीचीने यागे बद्धदीक्षः—दीक्षितः । गौणरज्ज्वा—गुणानां समूहः गौणं तद्रूपया रज्ज्वा । यज्वा असीति सम्बन्धः ।

३. ज्वालेति ॥ ज्वाला च आरावश्च ज्वालारावौ ताभ्यां प्रनष्टः असुरनिवहः ययोस्तथाविधौ श्रीरथाङ्गाब्जौ सुदर्शनपाञ्चजन्यौ हस्तयोः यस्येति बहुव्रीहिगर्भो बहुव्रीहिः ।

४. अन्तरिति ॥ सकरुणविलसद्वृत्तरङ्गैरपाङ्गैः सिञ्चन् । कृपाम्भःकणगण-भरितान् अपारान् प्रेमपूरान् मुञ्चन् । पङ्कजाक्षं रूपं—दिव्यमङ्गलविग्रहम् आपादचूडं समक्षं विशदमुपनयन् श्रियःकान्तः—श्रीनिवासः शिशिरमृदुलतानिर्जिताब्जे—शैत्यमार्दवाभ्याम् अधरीकृतपद्मे स्वकीये पदाब्जे (कर्म) हृत्तापशान्त्यै नः अन्तः धत्तां निदधात्वित्यर्थः ।

५. अब्जेन सदृशि अब्जाकारे हृत्पुण्डरीककुण्डे हृदयकोशरूपकुण्डे । कुण्डः वैदिकाग्निस्थानम् । जडिमार्तः । जडिमा—संसारजाड्यम् । जाड्यं शैत्यमिति यावत् । अत्र "पद्मकोशप्रतीकाशं, तस्य मध्ये वह्निशिखा" इत्यादिश्रुत्यर्थोऽनुसन्धेयः ।

*ज्वलितनानानागशृङ्गगमणिगणोदितसुपरभागक
घननिभाभाभासुराङ्गक वृषगिरीश्वर वितर शं मम
सुजनतातातायिताखिलहितसुशीतलगुणगणालय
विसृमराराराद्दुदित्वररिपुभयङ्करकरसुदर्शन ।

अथ शरभवृत्तानि पट्पद्यानि ॥

६. **ज्वलितेति** ॥ ज्वलिताः नानानागशृङ्गगाः ये मणयः तेषां गणेन उदितः सुपरभागः यस्य तस्य संबुद्धिः सुपरभागक । घननिभया आभया भासुराणि अङ्गकानि यस्य तस्य संबुद्धिः । **सुजनतातातायितेति**—जनानां समूहः जनता शोभना जनता तस्यास्तातायित साधुजनसंरक्षकेति यावत् । **विसृमरारारादुदित्वररिपुभयंकरकरसुदर्शनेति**—विसृमरारम् आरादुदित्वरारिपुभयंकरं करसुदर्शनं यस्य तस्य संबुद्धिः । **सकलपापापारभीकरघनरवाकरसुदरेति**—सकलपापानाम् अपारभीकरः घनरवाकरः सुदरः शोभनः शंखः पाञ्चजन्यः यस्य । **सादरमिति**—अवतु माम् आमाघसंभृतमिति छेदः । आमैः अपक्वैः अघैः पापैः संभृतं पूर्णम् ; आदौपराधभरितमिति यावत् । **अगणनोचितगुणेति**—अगणनोचिताः असंख्येयाः गुणाः यस्येति व्युत्पत्तिः । **पापाटवीहतिदवहुताशनसमहिमेति** कृपाविशेषणम् । पापाटवीनां हर्ता विनाशनं दवहुताशनसमहिमा दावाग्नितुल्या । समहिमेति सगन्धेतिवन्निर्देशः । एवंभूता कृपा अवत्विति पूर्वेणान्वयः । **इतरथाथाथारमिति**—इतरथा, अथ, अथारम् इति छेदः । अथ इतरथा अथारं अघगणविमोचनं न किंचन इह उपायगणे नास्तीत्यन्वयः । इतरथा—प्रकारान्तरेण । अथारं थं ब्रह्मनिर्वाणं अथं तद्विरोधि तत् आसमन्तात् सवासनं राति अपहरति इत्यथारं ब्रह्मसाक्षात्कारविरोधिनां सवासननिवर्तकम् इति यावत् । अधारामिति तवर्गचतुर्थघटितच्छेदे प्रथमयोः तवर्गद्वितीयत्वात् तृतीयस्य च चतुर्थत्वेन एकजातीयवर्णघटितमगणकमिति शरभवृत्तलक्षणस्य लोपः थकारधकारयोः एकवर्ग्यत्वेन

---

*अत्र षष्ठादिपद्यपञ्चकं शरभवृत्तमष्टपादम् । अन्यानि पद्यानि तु प्रसिद्धवृत्तान्येव । शरभवृत्तलक्षणं तु—वसुपदं दंदम्यते दशरसरसक्षति नमजनज्नजलयुगनानानामवर्णममिह बुधैर्भुवि शरभनाम हि ॥ इति ॥ अस्यार्थः—शरभनाम शरभनामकं वृत्तम् । भुवि । बुधैः । वसुपदं—अष्टचरणम् । दशरसरसक्षति क्रमेण दशसु षट्सु षट्सु च प्रतिपादं यतियुक्तम् । नमजनज्नजलयुक्—प्रतिचरणं नगणमगणजगणनगणजगणनगणजगणलघुभिर्युक्तम् । अनानानामवर्णमं नानानामकवर्णाघटितमगणकम् एकजातीयवर्णघटितमगणकमिति यावत् । एवंभूतं दन्दम्यते हि—सम्यक् शिक्ष्यते खलु इति ॥

सकलपापापारभीकरघनरवाकरसुदर सादरम्
अवतु मामामाघसम्भृतमगणनोचितगुण रमेश्वर
तव कृपा पापाटवीहतिदवहुताशनसमहिमा ध्रुवम्
इतरथाथाथारमस्त्यघगणविमोचनमिह न किञ्चन ॥ ६ ॥

नगधराराराधने तव वृषगिरीश्वर य इह सादर-
रचितनानानामकौसुमतरुलसन्निजवनविभागज-
सुमकृतां तां तां शुभस्रजमुपहरन् सुखमहिपतिर्गुरुः
अतिरयायायासदायकभवभयानकशठरिपोः किल ।
निगमगा गा गायता यतिपरिबृढेन तु रचय पूरुष
जितसभो भो भोगिराड्गिरिपतिपदार्चनमिति नियोजितः

एकप्रयत्नत्वेन च समाधेयः; तत्पक्षे अघारमिति विमोचनक्रियाविशेषणम् । **भवदीय-कृपैकशरणा वयमिति** पिण्डितोऽर्थः ।

७. **नगधरेति** ॥ **नगधर** गोवर्धनोद्धारक **वृषगिरीश्वर** यः **अहिपतिः गुरुः** श्रीमान् अनन्तसूरिः **अतिरयायायासदायकभवभयानकशठरिपोः** । **अतिरयः**— अतिवेगवान् तीव्र इति यावत् **आयायासः**—आयासः तद्दायकः यो **भवः** संसारः तस्य, **भयानकः** यः, शठरिपुः श्रीमान् पराङ्कुशदिव्यसूरिः तस्य । **निगमगाः**— दृष्टत्वं संबन्धः षष्ठ्यर्थः ; तद्दृष्टवेदान्तगताः सहस्रशाखाकद्राविडब्रह्मसंहितागता इति यावत् । **गाः** गिरः गाथारूपाः । **गायता**—वृषन्तः, व्याख्याता इति यावत् । **यतिपरिबृढेन**—भगवता भाष्यकारेण । **भो** पूरुष पूरुषेति धैर्यसूचकेन पदेन श्रीमदनन्तसूरेः संबोधनम् । **जितसभः** धैर्याध्यवसायाभ्यां निर्जिता सभा छात्रगोष्ठी येन तथाभूतस्त्वम् इह अस्यां विभूतौ **भोगिराड्गिरि-पतिपदार्चनं** रचयेति **नियोजितः** सः तव **आराराधने** आराधनार्थम् इह अस्यां विभूतौ । **सादररचितनानानामकौसुमतरुलसन्निजवनविभागजसुमकृताम्** सादरं रचितः **यः नानानामभिः कौसुमतरुभिः** पुष्पवृक्षैः **लसन्** प्रकाशमानः **निजवनविभागः स्वकीयपुष्पोद्यान-विभागः** चम्पकवनं मल्लिकावनं मालतीवनं पुन्नागवनं तुलसीवनं स्थलपद्मवनं **केशवनम्** इति विभागः तज्जन्यैः **सुमैः** सद्योविकस्वरैः पुष्पैः । **कृतां**—ग्रथिताम् । **तांतां** तत्तादृशीं वाचामगोचरशोभायुताम् । **शुभस्रजं** मङ्गलावहां मालाम् **उपहरन्** परमया भक्त्या **समर्पयन्** । **तदुदितव्रणचुबुकभूषणे**—तस्मात् अनन्तसूरेः उदितम् उत्पन्नं **व्रणं** कुद्दालप्रहारव्रणकिणं

इह परं रंरम्यते स्म च तदुदितव्रणचुबुकभूषणे
इह रमे मे मेघरोचिषि भवति हारिणि हृदयरङ्ग ॥ ७ ॥

चुबुकभूषणं चुबुकप्रदेशभूषणं यस्य तस्मिन् वात्सल्यातिशयेन भक्तनिर्मितं व्रणकिणं भूषणत्वेन बिभ्रति। **मे रमे**—मम कान्ते, रमः कान्तः। **मेघरोचिषि हारिणि**—हृदयहारिणि भवति। **परम्** अतीव, **रंरम्यते स्म च**। प्रिये जने नास्ति पुनरुक्तम् इतिन्यायेन पुनःपुनररमत। हृदयरङ्गेति संबोधनम् औचित्येन यत्रकुत्र वा योजनीयम्।

अत्रायमितिहासः—पुरा किल भगवान् भाष्यकारः सुमेधसाम् अनन्तसूरिप्रभृतीनां छात्राणां गोष्ठीमधिष्ठाय श्रीपराङ्कुशदिव्यसूरिगाथासहस्रव्याख्यानेन कंचित्कालं यापयन्नास्त। तत्र कतिपयदिनेषु गतेषु मूलक्रमेण तृतीयशतके (ஒழிவில்காலமெல்லாம்) इत्यादि तृतीयदशकस्य व्याख्यानं प्रस्तुतमासीत्। तत्र भगवतः श्रीपराङ्कुशदिव्यसूरेः श्रीवेंकटाद्रौ श्रीवेंकटेशस्य सर्वकालसर्वावस्थासु पुष्पकैंकर्यकरणे निरतिशयमनोरथः प्रवर्तते इति प्रथम-गाथायां ज्ञात्वा भगवद्यामुनाचार्याणामपि तत्रैव मनोरथं ज्ञात्वा तन्निर्वर्तने श्रद्धातिशयप्रेरितः स्वस्य कैंङ्कर्यान्तरव्यग्रतया स्वशिष्यमुखेन तन्निर्वर्तयितुकामः " अपि नाम अत्र गोष्ठ्यां यः कश्चित् छात्रः वेंकटाद्रौ इदं कैंकर्यं निर्वर्तयितुं प्रभवति" इत्यप्राक्षीत्। वेंकटाद्रौ शीतभयेन सर्वेषु छात्रेषु अनन्तसूरिवर्जं मौनमास्थितेषु श्रीमान् अनन्तसूरिः सहसा उत्थाय आचार्यपरि-गृहीत एव धर्मः शिष्याणामुद्देश्यतम इति दृढम् अध्यवस्य स्वामिन् मामाज्ञापय अस्मै कैंकर्याय इति प्रार्थयामास। तदीयधैर्याध्यवसाययोः परमप्रीतः भगवान भाष्यकारः अस्यां गोष्ठ्यां त्वमेव पूरुषः इति धैर्यसूचकेन पूरुषपदेन तं समबोधयत्। तदनु तत्कैंकर्याय आचार्यप्रेरितः श्रीमान् अनन्तसूरिः पुष्पोद्यानाय महातटाकं स्वजायया सह स्वयमेव कुद्दालखननमृदपनयनादिभिः व्यरचयत्। तत्र तटाकनिर्माणसमये श्रीवेंकटेश्वरः माणवकरूपेण आगत्य श्रीमदनन्त-सूरिदेव्या क्रियमाणे मृदपनयनकैङ्कर्ये मध्ये स्वयं किंचिद्वहनेन साहाय्यमकार्षीत्। पूर्वापेक्षया त्वरितमागच्छन्तीं देवीमवलोक्य कथमेवमित्यप्राक्षीत्। भूतार्थवादिन्यां च देव्याम् अन्य-साहाय्यं स्वीयकैङ्कर्ये असहमानः तं कुद्दालेन प्रहर्तुम् अनुधावति स्म। स तु माणवकः श्रीवेंकटेशस्य आगोपुरद्वारं प्रधाव्य तत्र अनन्तसूरिणा चुबुकदेशे प्रहृतोऽन्तर्दधे। तस्मिन्नेव दिने सायं श्रीमदनन्तसूरौ पुष्पाणि समर्प्य आराधनावसरे भगवन्तं सेवमाने तच्चुबुकप्रदेशे रुधिरव्रणमद्राक्षीत्। दृष्ट्वा च शङ्कितहृदये भगवान् अर्चकमुखेन स्वाभिमतं स्वेनैवेदं कारितमिति च समादिशत्। अनन्तरं तद्व्रणशान्तये घनसारानुलेपनं च समादिशत्। तदनु तटाकनिर्माणपूर्वकं पुष्पोद्यानं निर्माय पुष्पकैङ्कर्ये प्रवर्त्यमाने पुनरपि वात्सल्यातिरेकेण भगवान् श्रीवेंकटेश्वरः सह श्रिया स्वमनःकान्तया काश्चन निशाः तत्र पुष्पोद्याने विहृत्य पुष्पाणि चापचित्य निगूढं कामचारमकरोत्। पुष्पेषु न्यूनीभवत्सु भगवान् अनन्तसूरिः उन्निद्रः कस्यांचन रात्रौ समन्तादवलोकयन्नास्त, अद्राक्षीच्च यथेष्टं क्रीडमानौ तौ दिव्यदम्पती।

गतभये ये ये पदे तव रुचियुता भुवि वृषगिरीश्वर
विदधते ते ते पदार्चनमितरथा गतिविरहिता इति
मतिमता तातायिते त्वयि शरणतां हृदि कलयता परि-
चरणया यायाऽऽयता तव फणिगणाधिपगुरुवरेण तु ।

विरचितां तांतां वनावलिमुपगते त्वयि विहरति द्रुम-
नहनगाङ्गां गामिव श्रियमरचयत्तव स गुरुरस्य च
तदनु तान्तां तां रमां परिजनगिरा द्रुतमवयतो निज-
शिशुदशाशाशालिनीमपि वितरतो वर वितर शं मम ॥ ८ ॥

तदनु तत्र पूरुषे एतदवलोकनभीत्येव सरभसमपगच्छति अबला मन्दमन्दगामिनी स्त्रीरूपिणी श्रीः अनन्तसूरिणा गृहीता बद्धा च द्रुमे धेनुरिव । सा तु बद्धा श्रीमन्तम् अनन्तसूरिं प्रीत्या भीत्येव तातेत्यामन्त्रयामास । एवं निजशिशुभावं वाञ्छन्तीं तां श्रियं परिजनगिरा निश्चित्य आहूय श्रीवेंकटनाथमन्दिरं गत्वा तदङ्गीकारं भगवन्तं ययाचे । याचमान एव तां भगवतो वक्षसि दृष्ट्वा जहर्ष । तदाप्रभृति अनन्तसूरेः **श्रीवेंकटेश्वरश्वशुर** इति प्रसिद्धिः--इति । अयमितिहासः द्वितीयाष्टमयोरपि श्लोकयोरनुसन्धेयो यथाभागम् ॥

८. **गतभय इति** ॥ भो वृषगिरीश्वर येये (साधवः), **गतभये**— भयसंभावनारहिते । **पदे** पादारविन्दे रुचियुताः भवन्तीति संबन्धः ; तेते (साधवः) इतरथागतिविरहिताः उपायान्तररहिताः ; ते तव पदार्चनं विदधते कुर्वन्ति इति मतिमता एवम् अध्यवसाय-युतेन तातायिते रक्षके त्वय्येव शरणताम् उपायत्वं कलयता फणिगणाधिपगुरुवरेण अनन्त-सूरिनामकेन आचार्यशिखामणिना । तव त्वदर्थं परिचरणया कैङ्कर्यरूपेण आयता दीर्घा यया वनावलिः विरचिताम् (अत्र विरचितेति पाठः साधुः) त्वयि तां तां वनावलिम् उपगते विहरति सति (उपगम्य क्रीडमान इति यावत्) स गुरुः तव श्रियं तव मनःकान्तां श्रियं गामिव धेनुमिव द्रुमनहनगाङ्गां द्रुमे नहनं बन्धनं गच्छति प्राप्नोतीति द्रुमनहनगं तादृशम् अङ्गं यस्याः द्रुमनहनगाङ्गा तथाविधाम् । अरचयत्-द्रुमे अबध्नादिति यावत् । तदनु तान्तां श्रान्तां निजशिशुदशाशाशालिनीं स्वशिशुभावं वाञ्छन्तीमपि तां परिजनगिरा रमां द्रुतम् अवयतः निश्चितवतः अतएव वितरतः तुभ्यं प्रयच्छतः वर जामातृभूत । मम शं वितर भवत्स्वरूपरूपगुणविभवैश्वर्यशीलाद्यनुभवजनितसुखं प्रयच्छेत्यर्थः ॥

ममतया यायाऽऽविला मतिरुदयते मम सपदि तां हर
करुणया याया शुभा मम वितर तामयि वृषगिरीश्वर
सदुदयायायासमृच्छसि न दरमप्यरिविदलनादिषु
मदुदयायायासमीप्ससि न तु कथं मम रिपुजयाय च ।

मयि दयाया यासि केन तु न पदतां ननु निगद तन्मम
मम विभो भो भोगिनायकशयन मे मतमरिजयं दिश
परम याया या दया तव निरवधिं मयि झटिति तामयि
सुमहिमा मा माधव क्षतिमुपगमत्तव मम कृतेऽनघ ॥ ९ ॥

घटितपापापारदुर्भटपटलदुर्घटनिधनकारण
रणधराराराात्पलायननिजनिदर्शितबहुबलायन

---

९. **ममतयेति** ॥ अयि वृषगिरीश्वर । **ममतया**—ममकारेण मम याया आविला मतिः कलुषा मतिः उदयते आविर्भवति तां सपदि सद्य एव हर अपाकुरु ; याया शुभा मतिः तां मम **मह्यं करुणया** वितर, त्वं सदुदयाय आयासम् ऋच्छसि दरमपि स्वल्पमपि अरिविदलनादिषु न आयासम् ऋच्छसि । (एवं स्थिते) मदुदयाय कथं नायासमीप्ससि मम रिपुजयाय च कथं तम् ईप्ससि ; आयासः अवतारादिरूपः प्रयत्नः अवतरणादिप्रयत्नस्सर्वोऽपि साधुपरित्राणार्थः, दुष्कृद्विनाशादिकस्त्वानुषङ्गिकः इति हि "परित्राणाय साधूनाम्" इत्यादौ पुराविदः ॥ **मयीति—दयायाः** यासि इति च्छेदः । **मयि दयायाः** मद्विषयिण्या दयायाः पदताम् आधारतां केन हेतुना न यासि, तत् मम निगद । भो भोगिनायकशयन मम विभो **मम नाथ मे मतम्** अरिजयं दिश । **परमेति**—परम यायाः या दया इति छेदः । हे परम तव या **दया मयि विषये,** झटिति क्षिप्रं निरवधिं तां यायाः प्राप्नुहि इत्यर्थः । हे माधव अनघ **निर्दोष** तव सुमहिमा अपारकरुणाकरः अव्याजसुहृत् इत्यादिः शोभनो महिमा । मम **कृते मदर्थं** क्षतिं हानिं न्यूनतामिति यावत् मा उपगमत् न प्राप्नोतु, मदपराधानवेक्ष्य मयि **दयाया अकरणे** तव महिम्नो न्यूनतैव भवेदित्यभिसंधिः । माङ्योगात् उपगमत् इत्यत्र अडभावः ॥

१०. **घटितेति** ॥ घटितानि यानि पापानि तान्येवापारदुर्भटाः तेषां पटलस्य समूहस्य दुर्घटम् अस्मदीयप्रयत्नैः घटयितुमशक्यं यन्निधनं नाशः तस्य कारणीभूत । केवलं कृपया समस्तपापविनाशकेति यावत् । **रणधरेति—रणधरा** युद्धभूमिः तस्या **आरेषु** प्रान्तेषु

दरवराराराववनाशन मधुविनाशन मम मनोधन
रिपुलयायायाहि पाहि न इदमरं मम कलय पावन ।
सुतरसासासारदृक्ततिरतिशुभा तव निपततान्मयि
सहरमो मोमोतु सन्ततमयि भवान्मयि वृषगिरावपि
प्रतिदिनं नंनम्यते मम मन उपेक्षिततदपरं त्वयि
तदरिपापापासनं कुरु वृषगिरीश्वर सततमुज्ज्वल ॥ १० ॥

उज्ज्वलवेङ्कटनाथस्तोत्रं पठतां ध्रुवाऽरिविजयश्रीः ।
श्रीरङ्गोक्तं लसति यदमृतं सारङ्गहृदयसारङ्गे ॥ ११ ॥

॥ इति उज्ज्वलवेंकटनाथस्तोत्रं संपूर्णम् ॥

यदारात्पलायनं शत्रूणां निर्वासनं तेन निजं स्वकीयं निदर्शितं यत् बहुबलं बहु अधिकं बलं भुजादिबलं तस्य अयन—आधारभूत । इदं तु खरदूषणादिवधे प्रसिद्धम् । **दरवरेति**—दरवरेण पाञ्चजन्येन **आराराववनाशन**—आरः अरेरयम् आरः शत्रुसंबन्धी दुर्योधनादिसंबन्धीति यावत् ; यः आरावः कोलाहलः तस्य नाशन विनाशकेति यावत् । मधुविनाशनेत्यादि स्पष्टम् । **रिपुलयायायाहीति**—रिपुलयाय, आयाहीति छेदः । नः पाहि । इदम् अनिष्टनिवारणम् इष्टप्रापणं च उभयम् अरं शीघ्रं मम कलय, हे पावन बाह्याभ्यन्तरशुद्धिकर तव अतिशुभा सा शैत्यमाधुर्यादिगुणविशिष्टा **सारदृक्ततिः**—सारभूतकटाक्षपरंपरा । **सुतरसा**—शोभनेन वेगेन त्वरया मयि निपततात् । अयि वृषगिरीश भवान् मयि वृषगिरावपि सन्ततं **सहरमः** श्रिया सहितः **मोमोतु** भृशं मोदताम् । मम मनः उपेक्षिततदपरं तस्मात् पूर्वोक्तात् श्रिया सहितस्य भवतः मयि निवासात् अपरम् इतरत् वैषयिकं सुखम् उपेक्षितं येन तथाविधं सत् । त्वयि भवद्विषये नंनम्यते भक्त्या पुनःपुनः प्रह्वीभवति । सततम् उज्ज्वल वृषगिरीश्वर तत् तस्मात् ; **अरिपापापासनम्**—अरीणां पापानामपासनं निरसनं कुरु इति संबन्धः ॥

· ११. **उज्ज्वलेति**—अरिविजयश्रीः ध्रुवा इति संबन्धः । **लसतीति—यत्** स्तोत्रं **सारङ्गहृदयसारङ्गे**—सारङ्गानां हृदयरूपे सारङ्गे साराङ्गे सारङ्गशब्दः लक्षणया साराङ्गबोधकः । अमृतम् अमृतमिव लसतीति संबन्धः, अथवा सारङ्ग एव हृदयसारङ्गः चन्द्रः तत्र यत् अमृतं लसति ॥

उज्ज्वलवेंकटनाथस्तोत्रस्येमां मुदा व्यधाट्टीकाम् ।
श्रीशेषसूरिगुरुराड्वंश्यश्श्रीकृष्णसूरिरतिनिपुणम् ॥

इति श्रीशैलानन्तपुरुषवंश्यैः श्रीकृष्णमाचार्यपण्डितवरैः विरचिता उज्ज्वलवेंकटनाथ-स्तोत्रटीका सम्पूर्णा ॥

उज्ज्वलवेंकटनाथस्तोत्रव्याख्यां प्रभावतीनाम्नीम् ।
अर्पयति कृष्णसूरिः वेंकटनाथस्य पादाब्जे ॥

इति श्रीभगवद्रामानुजदिव्याज्ञापरिकल्पितपुष्पवाटिकासमुत्पादितसुमनोमालाप्रसाधन-नित्यसमुज्ज्वलितवेंकटनाथस्य श्रीशैलानन्तसूरेः वंशे जातस्य स्तोत्रकर्तुः सगोत्रस्य श्रीवेंकटेशगीर्वाणविद्याशालामहोपदेशकस्य श्रीकृष्ण-महाचार्यस्य कृतिः उज्ज्वलवेंकटनाथस्तोत्रटीका प्रभावती बतद्यांके शालिवाहनशके समाप्ता

शुभम्



श्रीः

॥ श्रीनिवासाय नमः ॥

# श्रीनिवासार्चादशकम् ॥ १७ ॥

श्रीवासदेवकरुणाशिशिरालोकामृतावसेकेन ।
उपचितबहुविधपुण्यं धन्यं श्रीवेंकटाचलं वन्दे ॥ १ ॥

बहुलशिलातललतरुततितृणगणवीरुज्झरीमयशिखरी ।
यो गीयते परिवृतो योगीन्द्रैश्श्रीनिवास एवेति ॥ २ ॥

पशुपक्षिमृगवनस्पतितृणगुल्मलताशिलासु चात्मजनिम् ।
यत्रार्थयन्ति मुनयश्चिताकारेषु निर्झरेष्वपि च ॥ ३ ॥

परवासुदेव एव स्थिरवासं प्राप्य यत्र सह रमया ।
चिरमानन्दमुपैति हि परमानन्दं विहाय वैकुण्ठम् ॥ ४ ॥

मलसंकुले कलावपि फलजालान्यैहिकान्यपीह जनाः ।
स्वाभीष्टानि लभन्ते यत्र श्रीवासदेवकरुणातः ॥ ५ ॥

नारायणाचलेऽस्मिन्नाराच्छ्रीस्वामिपुष्करिण्याश्च ।
तीरालये विभान्तं नारायणमाश्रये रमाकान्तम् ॥ ६ ॥

अञ्जनगिरिशिखरालयमञ्जनरोचिर्निरञ्जनं धाम ।
कंजविलोचनमीडे पिञ्जरवक्षश्श्रियस्त्विषा किमपि ॥ ७ ॥

नारायणाद्रिवासं श्रीश्रीवासं रमाक्षमावासम् ।
हरिमणिगिरिसमभासं सुरुचिरहासं नमाम्यवितदासम् ॥ ८ ॥

आश्रितफणीन्द्रशैलं हरिमणिनीलं सुवर्णसमचेलम् ।
घनसाराञ्चितफालं कमलालोलं नमामि समशीलम् ॥ ९ ॥

अधरितसुरतरुदानं रक्षितदीनं रजस्तमोहीनम् ।
कमलाकृतबहुमानं श्रीनिधिमेनं श्रये श्रिताधीनम् ॥ १० ॥

सुरगणसेवितचरणं श्रितजनशरणं श्रिताबलाभरणम् ।
कर्तुं भवाब्धितरणं कलये शरणं वृषाद्रिवरशरणम् ॥ ११ ॥

वृषशैलशिखरिजातं वारिधिजाताल्ताभिपरिवीतम् ।
वन्दे सुपारिजातं विश्वजनेभ्यो वितीर्णफलजातम् ॥ १२ ॥

इति नावल्पाक्कं श्रीराजगोपालताताचार्यकृतं
श्रीनिवासार्चादशकम् ॥

श्रीहयग्रीवाय नमः

## श्रीवेंकटेशतूणकम् ॥ १८ ॥

वज्रशङ्ख(बाणचापचिह्नि)ताङ्घ्रिपङ्कजं
नर्तितायुतारुणाग्र्यनिस्सरत्प्रभाकुलम् ।
वज्रपाणिमुख्यलेखवन्दितं परात्परं
सज्जनार्चितं वृषाद्रिसार्वभौममाश्रये ॥ १ ॥

पञ्चबाणमोहनं विरिञ्चिजन्मकारणं
काञ्चनाम्बरोज्ज्वलं सचञ्चलाम्बुदप्रभम् ।
चञ्चरीकसञ्चयाभचञ्चलालकावृतं
किञ्चिदुद्धतभ्रुवं च वञ्चकं हरिं भजे ॥ २ ॥

[गङ्गलाधिदैवतं] भुजङ्गमाङ्गशायिनं
सङ्गरारिभङ्गशौण्डमङ्गदाधिकोज्ज्वलम् ।
अङ्गसङ्गिदेहिनामभङ्गुरार्थदायिनं
तुङ्गशेषशैलभव्यशृङ्ग[सङ्गिनं] भजे ॥ ३ ॥

कम्बुकण्ठमम्बुजातडम्बराम्बकद्वयं
शम्बरारितातमेनमम्बुराशितल्पगम् ।
बम्भरार्भकालिभव्यलम्बमानमौलिकं
शङ्खकुन्ददन्तवन्तमुत्तमं भजामहे ॥ ४ ॥

पङ्कजासनार्चितं शशाङ्कशोभिताननं
कङ्कणादिदिव्यभूषणाङ्कितं वरप्रदम् ।
कुङ्कुमाङ्कितोरसं सशङ्खचक्रनन्दकं
वेंकटेशमिन्दिरापदाङ्कितं भजामहे ॥ ५ ॥

॥ इति श्रीवेंकटेशतूणकम् ॥

श्रीः

# श्रीवेंकटेशविजयार्यासप्तविभक्तिस्तोत्रम् ॥ १९ ॥



श्रीवेंकटाद्रिधामा भूमा भूमाप्रियः कृपासीमा ।
निरवधिकनित्यमहिमा भवतु जयी प्रणतदर्शितप्रेमा ॥ १ ॥

ज[य जनता]विमलीकृतिसफलीकृतसकलमङ्गलाकार ।
विजयी भव विजयी भव विजयी भव वेंकटाचलाधीश ॥ २ ॥

कमनीयमन्दहसितं कञ्चन कन्दर्पकोटिलावण्यम् ।
पश्येयमञ्जनाद्रौ पुंसां पूर्वतनपुण्यपरिपाकम् ॥ ३ ॥

मरतकमेचकरुचिना मदनाज्ञागन्धिमध्यहृदयेन ।
वृषशैलमौलिसुहृदा महसा केनापि वासितं ज्ञेयम् ॥ ४ ॥

पत्यै नमो वृषाद्रेः करयुगपरिकर्मशङ्खचक्राय ।
इतरकरकमलयुगलीदर्शितकटिबन्धदानमुद्राय ॥ ५ ॥

साम्राज्यपिशुनमकुटीसुघटललाटात् सु[मङ्गला]पाङ्गात् ।
स्मितरुचिफुल्लकपोलादपरो न परोऽस्ति वेंकटाद्रीशात् ॥ ६ ॥

सर्वाभरणविभूषितदिव्यावयवस्य वेंकटाद्रिपतेः ।
पल्लवपुष्प[विभूषित]कल्पतरोश्चापि का भिदा दृष्टा ॥ ७ ॥

लक्ष्मीललितपदाम्बुजलाक्षारसरञ्जितायतो[रस्के] ।
श्रीवेंकटाद्रिनाथे नाथे मम नित्यमर्पितो भारः ॥ ८ ॥

आर्यावृत्तसमेता सप्तविभक्तिर्वृषाद्रिनाथस्य ।
वादीन्द्रभीकृदाख्यैरार्यै रचिता जयत्वियं सततम् ॥ ९ ॥

॥ इति श्रीवेंकटेशविजयार्यासप्तविभक्तिस्तोत्रं संपूर्णम् ॥

श्रीः

# वेंकटेशस्तोत्रम् ॥ २० ॥

सेवे वेङ्कटनाथं सेव्यगुणाधारं
देवेशं दनुजरिपुं देवशिरोरत्नम् ॥

प्राचीनं परमधनं प्रणिपतता लभ्यं
प्राचीने वचसि परं ब्रह्म समाम्नातम् ।
प्राचीनैरार्यवरैः प्राप्यतयाऽवगतं
वीचीनाममृतभुवां विजयपरालोकम् ॥ १ ॥

कारुण्यामृतजलधिं कमपि महापुरुषं
तारुण्याञ्चिततुलसीदामालङ्कारम् ।
आरुण्यात्पदतलयोररुणितभूभागं
दारुण्याश्रयनखतो दलितहिरण्याङ्गम् ॥ २ ॥

नित्येष्टां निरपायां निर[वधिकारुण्या]-
मत्याहत्येन[श्चर्येण] तनोरन्तरितां महसा ।
सत्यां सद्गुणपूर्णां सागरसंभृता-
मत्याहत्यात्मसमामादधतं हृदये ॥ ३ ॥

वर्णादाकारभवाद्वारिददायादं
[स्वर्णा]लङ्काररुचा सुभगतटिल्लेखम् ।
कर्णालंकृतिकान्त्या कान्तकपोलान्तं
कर्णान्तायतकरुणाकञ्चुकितापाङ्गम् ॥ ४ ॥

कार्याणां भुवनानां का[रणमा]म्नातं
धार्याणामपि तेषां धारणपारीणम् ।
आर्याणामनुभवतामान्तरमानन्दं
वार्याणां भवविपदां वारकनामानम् ॥ ५ ॥

स्वाधीनाशेषजगत्स्वा[मितयाऽ]वगतं
स्वाधीनेन्द्रियमुनिभिः स्वस्वमनोगम्यम् ।
स्वाधीनम्मन्यजनैस्सूरिभिरग्राह्यं
स्वाधीनोदयविभवं स्वामिसरोदेशे ॥ ६ ॥

वन्दारुत्रिदशवरावनतशिरो[गलितैः]
मन्दारद्रुमकुसुमैर्महितपदाम्भोजम् ।
सौन्दर्यामृतसरिता सकलदृशां सुखदं
सुन्दरजामातृमुनेः शुभतरमन्दारम् ॥ ७ ॥

वादिभीतिकराचार्यरचितं वेंकटेशितुः ।
स्तोत्रं पठति यस्तस्य नित्यं तत्सेवनं भवेत् ॥ ८ ॥

इति वेंकटेशस्तोत्रं संपूर्णम्

श्रीः

## श्रीवेंकटेशपञ्चकस्तोत्रम् ॥ २१ ॥

श्रीधराधिनायकं श्रितापवर्गदायकं
श्रीगिरीशमित्रमम्बुजेक्षणं विचक्षणम् ।
श्रीनिवासमादिदेवमक्षरं परात्परं
नागराड्गिरीश्वरं नमामि वेंकटेश्वरम् ॥ १ ॥

उ-पेन्द्रमिन्दुशेखरारविन्दजामरेन्द्रवृ-
न्दारकादिसेव्यमानपादपङ्कजद्वयम् ।
चन्द्रसूर्यलोचनं महेन्द्रनीलसन्निभम्
नागराड्गिरीश्वरं नमामि वेंकटेश्वरम् ॥ २ ॥

नन्दगोपनन्दनं सनन्दनादिवन्दितं
कुन्दकुट्मलाग्रदन्तमिन्दिरामनोहरम् ।
नन्दकारविन्दशङ्खचक्रशार्ङ्गसाधनं
नागराड्गिरीश्वरं नमामि वेंकटेश्वरम् ॥ ३ ॥

नागराजपालनं भोगिनाथशायिनं
नागवैरिगामिनं नगारिशत्रुसूदनम् ।
नागभूषणार्चितं सुदर्शनाद्युदायुधं
नागराड्गिरीश्वरं नमामि वेंकटेश्वरम् ॥ ४ ॥

तारहीरक्षीरशार[तारहीरशार]दाभ्रतारकेशकीर्ति[सं]
विहार[हारहार]मादिमध्य[म]न्तशून्यमव्ययम् ।
तारकासुराटवीकुठारमद्वितीयकं
नागराड्गिरीश्वरं नमामि वेंकटेश्वरम् ॥ ५ ॥

इति श्रीवेंकटेश्वरपञ्चकस्तोत्रं संपूर्णम्.
श्रीवेंकटेश्वरार्पणमस्तु. श्रीरस्तु.

श्रीः

# श्रीनिवासगद्यम् (श्रीनिवासचूर्णिका) ॥ २२ ॥

मरुद्भितमरिन्दमं मदनकोटिलावण्यव-
त्तुरं पुरहरार्चितं [स्फुरदखण्डचन्द्रा] ननम् ।
[श्रियः पतिमहं दधच्छ्रितजनावने तत्परं]
मम प्रियतमं हरिं मनसि वेंकटेशं कृते(र्ती) ॥ १ ॥

अ(मुं) किल सकलचराचरजन्तुसन्ताननिरन्तरान्तर्बहिर्व्यापि[नं], श्रिताखण्ड-ब्रह्माण्डभाण्डप्रपञ्चं, पञ्चशरप्रपञ्चकोटिसुषमाविलासवशीकृतत्रिविष्टपेशकिंनरकिंपुरुषसिद्ध विद्याधराप्सरो(?)रगयक्षरक्षोगन्धर्वगरुडपन्नगविलासिनीगणं, गणनाथसूनुपुष्करिणी-तीरतरुणारुणकिरणकिरणप्रकाशमानशातकुम्भस्तम्भगोपुरप्राकारान्तरमन्दिरान्तरमण्टपा-न्तरप्रशस्तपीठसमुद्रिशन्तः शन्तनुतनूभवगोगोपगोपीमुचुकुन्दमुक्तिपदं पदारविन्दनि-ष्यन्दवृन्दारकनदीनिर्झरनिमज्जज्जनाघघनप्रचण्डगन्धवाहं वाहनीकृतैरावतवाहनसा-रतादविसारस्तम्भीकृतभीतरायुधसुमेरूपं शरीरकं निजवोटिपुटविदारितकाद्रवेयप्रपञ्चस-रणमात्रविनाशितकरालक्ष्वेळं(?)क्ष्वेळदंष्ट्राशनभास्करं, भास्करभास्वरकोटिखचितमणि-दीप्तिवैभवचित्रलेख्याप्रतिबिम्बिनिकृतोपान्तदीपिकाकलापिपिकपाकशासनोपलकलकाया-नककलशद्युतिरस्कृतनवाम्बुदावृतचञ्चलालतं(?) लतान्तनितान्तसौरभ....वमृगमदमृग-पदधूलिपालिपरिमे (म)ळलहरीधुमंधुमितस्ववस्त्यमध्यं, मध्यालंकृतचामीकरभुजङ्गभूषणं, भूषणीकृतकलशनिर (नीर) निधेयनन्दनं, नन्दनीकृतसुमशिलीमुख[खं,]मुखपीठपाणि-पद्मपरिन्यस्तपाञ्चजन्यादिप्रा(प्र)हारं, हारादिभूषणभूषितं, भूषितशौर्यजटाकलापमहावि-रागिसेवितं, सेवितानन्तर अ(रा)नन्तशङ्करादिपरमभागवतोत्तमम्, उत्तमश्लोकधुर्यं, धुर्यशौर्यलीलाखण्डितकैटभादिदैतेयजातं, जातप्रसादसुधाकल्लोलनीत(नितान्त)कान्त मुखकपोल(लं), फालाम्ब(न्तर) कीलानललोकेश्व(रा)द्यधिकारद(दं), रदावलरक्षणपरं परादपि परं श्रीमद्वेंकटाद्रिनिकेतनं हरिं भजे ॥

श्रीनिवासगद्यं संपूर्णम्.

हरिः ओम्

# ऋद्धिस्तवः ॥ २३ ॥



श्रीमन्वृषभशैलेश वर्धतां विजयी भवान् ।
दिव्यं त्वदीयमैश्वर्यं निर्मर्यादं विजृम्भताम् ॥ १ ॥

देवीभूषायुधैर्नित्यैर्मुक्तैर्मोक्षैकलक्षणैः ।
सत्त्वोत्तरैस्त्वदीयैश्च सङ्गः स्तात्सरसस्तव ॥ २ ॥

प्राकारगोपुरवरप्रासादमणिमण्टपाः ।
शालिमुद्गतिलादीनां शालाश्शैलकुलोज्ज्वलाः ॥ ३ ॥

रत्नकाञ्चनकौशेयक्षौमक्रमुकशालिकाः ।
शय्यागृहाणि पर्यङ्कवर्याः स्थूलासनानि च ॥ ४ ॥

कनत्कनकभृङ्गारपतद्ग्रहकलाचिकाः ।
छत्रचामरमुख्याश्च सन्तु नित्याः परिच्छदाः ॥ ५ ॥

अस्तु निस्तुलमव्यग्रं नित्यमभ्यर्चनं तव ।
पक्षेपक्षे विवर्धन्तां मासिमासि महोत्सवाः ॥ ६ ॥

मणिकाञ्चनचित्राणि भूषणान्यम्बराणि च ।
काश्मीरसारकस्तूरीकर्पूराद्यनुलेपनम् ॥ ७ ॥

कोमलानि च दामानि कुसुमैस्सौरभोत्करैः ।
धूपाः कर्पूरदीपाश्च सन्तु सन्ततमेव ते ॥ ८ ॥

नृत्तगीतयुतं वाद्यं नित्यमत्र विवर्धताम् ।
श्रोत्रेषु(च) सुधाधाराः कल्पन्तां काहलीस्वनाः ॥ ९ ॥

कन्दमूलफलोदग्रं कालेकाले चतुर्विधम् ।
सूपापूपघृतक्षीरशर्करासहितं हविः ॥ १० ॥

घनसारशिलोदग्रैः क्रमुकाष्टदलैस्सह ।
विमलानि च ताम्बूलीदलानि स्वीकुरु प्रभो ॥ ११ ॥

प्रीतिर्भीतियुतो भूयाद्भूयान् परिजनस्तव ।
भक्तिमन्तो भजन्तु त्वां पौरा जानपदास्तथा ॥ १२ ॥

धरणीधनरत्नानि वितरन्तु चिरं तव ।
कैङ्कर्यमखिलं सर्वे कुर्वन्तु क्षोणिपालकाः ॥ १३ ॥

प्रेमदिग्धदृशः स्वैरं प्रेक्षमाणास्त्वदाननम् ।
महान्तस्सन्ततं सन्तो मङ्गलानि प्रयुञ्जताम् ॥ १४ ॥

एवमेव भवन्नित्यं पालयन् कुशली भवान् ।
मामर्हारमण श्रीमान् वर्धतामभिवर्धताम् ॥ १५ ॥

पत्युः प्रत्यहमित्थं यः प्रार्थयेत समुच्छ्रयम् ।
प्रसादसुमुखः श्रीमान् पश्यत्येनं परः पुमान् ॥ १६ ॥

इति ऋद्धिस्तवः संपूर्णः

श्रीः

## श्रीवेंकटेशविजयस्तोत्रम् ॥ २४ ॥



दैवतदैवत मङ्गलमङ्गल पावनपावन कारणकारण ।
वेंकटभूधरमौलिविभूषण माधव भूधव देव जयीभव ॥ १ ॥

वारि[दसंनिभ]देह दयाकर शारदनीरजचारुविलोचन ।
देवशिरोमणिपादसरोरुह वेंकटशैलपते विजयीभव ॥ २ ॥

अञ्जनशैलनिवास निरञ्जन रञ्जितसर्वजनाञ्जनमेचक ।
मामभिषिञ्च कृपामृतशीतलशीकरवर्षिदृशा जगदीश्वर ॥ ३ ॥

वीतसमाधिक सारगुणाकर केवलसत्त्वतनो पुरुषोत्तम ।
भीमभवार्णवतारणकोविद वेंकटशैलपते विजयीभव ॥ ४ ॥

स्वामिसरोवरतीररमाकृतकेलिमहारसलालसमानस ।
सारतपोधनचित्तनिकेतन वेंकटशैलपते विजयीभव ॥ ५ ॥

आयुधभूषणकोटिनिवेशितशङ्खरथाङ्गजितामतसंमत ।
स्वेतरदुर्घटसङ्घटनक्षम वेंकटशैलपते विजयीभव ॥ ६ ॥

पङ्कजना[नीनिलया]कृतिभौरमवासितशैलवनोपवनान्तर ।
मन्द्रमहास्वनमङ्गलनिर्झर वेंकटशैलपते विजयीभव ॥ ७ ॥

नन्दकुमारक गोकुलपालक गोपवधूवर कृष्ण [परात्पर] ।
श्रीवसुदेवज जन्मभयापह वेंकटशैलपते विजयीभव ॥ ८ ॥

शैशवपानितपातकिपूतन धेनुककेशिमुखासुरसूदन ।
कालियमर्दन कंसनिरासक मोहतमोपह कृष्ण जयीभव ॥ ९ ॥

पालितसङ्गर भागवतप्रिय सारथिनाहितनोपपृथासुत ।
पाण्डवदूत पराक्रमभ [मर पाहि] परावरनाथ परायण ॥ १० ॥

शातमखासुविभञ्जनपाटव सत्रिशिरःखरदूषणदूषण ।
श्रीरघुनायक राम रमासख विश्वजनीन हरे विजयीभव ॥ ११ ॥

राक्षससोदरभीतिनिवारक शारदशीतमयूखमुखाम्बुज ।
रावणदारुणवारणदारणकेसरिपुङ्गव देव जयीभव ॥ १२ ॥

काननवानरवीरवनेचरकुञ्जरसिंहमृगादिषु वत्सल ।
[श्रीवर]सूरिनिरस्तभवादर वेंकटशैलपते विजयीभव ॥ १३ ॥

वादिसाध्वसकृत्सूरिकथितं स्तवनं महत् ।
वृषशैलपतेः श्रेयस्कामो नित्यं पठेत् सुधीः ॥ १४ ॥

इति श्रीवेंकटेशविजयस्तोत्रम् ॥

श्रीः

श्रीवेंकटेशाय नमः

# श्रीवेंकटेशद्वादशनामस्तोत्रम् ॥ २५ ॥



अस्य श्रीवेंकटेशद्वादशनामस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः श्रीवेंकटेश्वरो देवता । इष्टार्थे विनियोगः ॥

नारायणो जगन्नाथो वारिजासनवन्दितः ।
स्वामिपुष्करिणीवासी शङ्खचक्रगदाधरः ॥ १ ॥

पीताम्बरधरो देवो गरुडासनशोभितः ।
कन्दर्पकोटिलावण्यः कमलायतलोचनः ॥ २ ॥

इन्दिरापतिगोविन्दः चन्द्रसूर्यप्रभाकरः ।
विश्वात्मा विश्वलोकेशो जयश्रीवेंकटेश्वरः ॥ ३ ॥

एतद्द्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः ।
दारिद्र्यदुःखनिर्मुक्तो धनधान्यसमृद्धिमान् ॥ ४ ॥

जनवश्यं राजवश्यं सर्वकामार्थसिद्धिदम् ।
दिव्यतेजः समाप्नोति दीर्घमायुश्च विन्दति ॥ ५ ॥

ग्रहरोगादिनाशं च कामितार्थफलप्रदम् ।
इह जन्मनि सौख्यं च विष्णुसायुज्यमाप्नुयात् ॥ ६ ॥

॥ इति ब्रह्माण्डपुराणे ब्रह्मनारदसंवादे वेंकटेशद्वादशनामस्तोत्रं सम्पूर्णम् ॥

श्रीः

# श्रीवेंकटेशकवचस्तोत्रम् ॥ २६ ॥



अस्य श्रीवेंकटेशकवचस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः श्रीवेंकटेश्वरो देवता । ओं बीजं ह्रीं शक्तिः क्लीं कीलकम् । इष्टार्थे विनियोगः । ध्यानम्.

ध्यायेद्वेङ्कटनायकं करयुगे शङ्खं च चक्रं मुदा(गदा-)
चा(द्य)न्ये पाणियुगे वरं(ऽम्बरं) कटितटीं(टे) बिभ्राणमर्कच्छविम् ।
देवं देवशिखामणिं श्रियमथो वक्षोदधानं(?) हरिं
भूषाजालमनेकरत्नखचितं दिव्यं किरीटाङ्गदम् ॥ १ ॥

वराहः पातु मे शीर्षं केशान् श्रीवेङ्कटेश्वरः ।
शिखामिळापतिः कर्णौ ललाटं दिव्यविग्रहः ॥ २ ॥

नेत्रे युगान्तस्थायी मे कपोले कनकाम्बरः ।
नासिकामिन्दिरानाथो वक्त्रं ब्रह्मादिवन्दितः ॥ ३ ॥

चुबुकं कामदः कण्ठमगस्त्याभीष्टदायकः ।
अंसौ कंसान्तकः पातु कमठस्स्तनमण्डले ॥ ४ ॥

हृत्पद्मं पात्वदीनात्मा कुक्षिं कालाम्बरद्युतिः ।
कटिं कोलवपुः पातु गुह्यं कमलकोशभृत् ॥ ५ ॥

नाभिं पद्मापतिः पातु करौ कल्मषनाशनः ।
अङ्गुलीर्हैमशैलेन्द्रो नखरानम्बरद्युतिः ॥ ६ ॥

ऊरू तुम्बुरुगानज्ञो जानुनी शङ्खचक्रभृत् ।
पादौ पद्मेक्षणः पातु गुल्फौ चाकाशगाङ्गदः ॥ ७ ॥

दिशो दिक्पालवन्द्याङ्घ्रिर्भार्यां पाण्डवतीर्थगः ।
अव्यात्पुत्रान् श्रीनिवासः सर्वकार्याणि गोत्रराट् ॥ ८ ॥

वेंकटेशः सदा पातु मद्भाग्यं देवपूजितः ।
कुमारधारिकावासो भक्ताभीष्टाभयप्रदः ॥ ९ ॥

शङ्खाभयप्रदाता तु शम्भुसेवितपादुकः ।
वाञ्छितं वरदो दद्याद्वेंकटाद्रिशिखामणिः ॥ १० ॥

श्वेतवाराहरूपोऽयं दिनरात्रिस्वरूपवान् ।
रक्षेन्मां कमलानाथः सर्वदा पातु वामनः ॥ ११ ॥

श्रीनिवासस्य कवचं त्रिसन्ध्यं भक्तिमान् पठेत् ।
तस्मिन् श्रीवेंकटाधीशः प्रसन्नो भवति ध्रुवम् ॥ १२ ॥

आपत्काले जपेद्यस्तु शान्तिमायात्युपद्रवात् ।
रोगाः प्रशमनं यान्ति विर्जपेद्भानुवासरे ॥ १३ ॥

सर्वसिद्धिमवाप्नोति विष्णुसायुज्यमाप्नुयात ।

इति श्रीमदाग्नेयपुराणे वेंकटाचलमाहात्म्ये वसिष्ठनारदसंवादे
वेंकटेशदिव्यकवचस्तोत्रं नाम पञ्चदशोऽध्यायः.

---

श्रीः

# श्रीपद्मावतीस्तोत्रम्

अस्तु पद्मसरोमध्यादाविर्भूतं परं महः ।
वशे यस्य परं धाम तद्वृषाचलमास्थितम् ॥ १ ॥

अनन्याधीनविभवमद्भुतं दैवतं श्रये ।
मातरं जगतां लक्ष्मीं जगन्मातुः परां प्रियाम् ॥ २ ॥

सखीभिश्श्रुतिभिर्नित्यं यां यथावत् पनायिताम् ।
आकर्ण्य हृदये न्यस्यन् लब्धात्मा श्रीनिधिः परः ॥ ३ ॥

मातुस्ते नामधेयं तत् देवतेति, हरिर्ध्रुवम् ।
पद्मदेव्युच्यते तेन, नित्यश्लिष्टतया त्वया ॥ ४ ॥

प्रजाः पतिप्रियाः कृत्वा भोगसाम्यविधित्सया ।
स्वच्छायाश्रयणं तासु तनोषि कृपया रमे ॥ ५ ॥

सरोजसौरभाऽऽधायि दिव्यं लावण्यवर्षि ते ।
वशीकृतवृषाद्रीशं रूपं पापं व्यपोहतु ॥ ६ ॥

अभये कृपया देवि प्रतिज्ञाते त्वया हरिः ।
व्याजभङ्गभिया वक्ति प्रपत्तिं पाणिमुद्रया ॥ ७ ॥

यया खलु परिष्वक्तो देवो देवत्वमश्नुते ।
श्रद्धया सर्वलोकैकहितां त्वां मातरं श्रये ॥ ८ ॥

अम्बुजनिवासरसिकामम्बुजनेत्रस्य वल्लभां देवीम् ।
अनवद्यगुणगरिम्णा श्रियं परां निस्समां वन्दे ॥ ९ ॥

आश्रयतु मानसं सुखमासीनामम्बुजे जगज्जननीम् ।
आश्रितरक्षणहेतोराहृतपद्मावतीरूपाम् ॥ १० ॥

प्रणमयति सव्यकरतो दक्षिणतो या ददाति चाप्यभयम् ।
स्वाधीनलोकवृत्तिं सरोजवासां परां वन्दे ॥ ११ ॥

परया मया त्वया खलु परमोऽभूत्पुरुष एष देवि तथा ।
अपरमताऽऽपत्तिभियाऽनपायिनीमुरसि धत्ते त्वाम् ॥ १२ ॥

निग्रहनितान्तदूरामाग्रहरहितैः प्रबुद्धविभवां त्वाम् ।
प्राप्यां प्रापकभूतां परमां विष्णोः प्रियां वन्दे ॥ १३ ॥

निखिलविभूतिनियन्ता यत्पदलाक्षाङ्कलक्षितोरस्कः ।
अत्यन्तसौम्यमूर्तिं मातरमनघां श्रियं वन्दे ॥ १४ ॥

दुष्कृतकर्तृबहिष्कृतिबद्धश्रद्धे परे हरौ पुंसि ।
प्रादुष्कृतवचनसुधां श्रियं प्रपद्ये शुभं ददतीम् ॥ १५ ॥

अखिलैराश्रितहृद्यैर्गुणैः परां त्वां निरीक्ष्य सव्रीडम् ।
विष्णुं श्रुतीर्ध्रुवं श्रीः सखीस्त्वमादिष्टवत्यसि स्तोतुम् ॥ १६ ॥

पापानि वर्धयति नः परो रणं तैश्चिकीर्षुरतिवेलम् ।
रक्षोवधान्त इव ते परिरम्भं मातरद्भुतं लिप्सुः ॥ १७ ॥

अनघैरम्बुजवासिनि कटाक्षितैस्सहजशीतलैर्दिव्यैः ।
अच्युतरूपोल्लासिभिरस्माक भवुकमत्र देहि त्वम् ॥ १८ ॥

शुकपुरमध्यशोभिशुभसद्मसमुज्ज्वलया
वृषगिरिशृङ्गवासिपुरुषोत्तमसंश्रितया ।
अखिलजगद्धितैकपरया कृपया परया
मम शुभमस्तु नित्यमनयाऽनघया रमया ॥ १९ ॥

कमलकुहरदीव्यद्दिव्यरूपां श्रयन्तः
पुनरपि पुरुहूतोऽन्ये च यां प्राप्तसत्ताः ।
वृषगिरिवरवासी यद्वशे विश्रुतोऽसौ
सविनयमयमस्यै साधु बद्धोऽञ्जलिर्मे ॥ २० ॥

त्रायस्व मामखिलरक्षणजागरूके
नारायणस्य हृदये विहिताधिवासे ।
पाथोजवासरसिके पदपङ्कजं ते
कारुण्यदुग्धजलधे शरणं भजामि ॥ २१ ॥

श्रीस्त्वं श्रिता शरणमीप्सुभिरमार्तरावं
श्रुत्वा श्रिता वृषगिरीशभुजान्तरालम् ।
तं श्रावयस्यथ शृणासि समस्तमेनः
श्रीणासि सर्वमपि शेषजनोचितं नः ॥ २२ ॥

मध्ये समस्तजगदीशितुरब्जगेहे
मातश्रितश्च भवती प्रणवे विभान्ती ।
सत्यं व्यनक्ति घटनां सरसैर्वचोभिः
शेषाद्रिगस्य चरणे शरणार्थिनां नः ॥ २३ ॥

शुकपत्तनवासतत्परां जगतां भाग्यमनुग्रहात्मिकाम् ।
सरसीरुहवासिनीमिमां शरणं याम्यहमन्वहं श्रियम् ॥ २४ ॥

अतिशाय्यनुरूपदिव्यरूपा सततं त्वं श्रितरक्षकस्य शौरेः ।
दयया वृषशैलमाश्रितेऽस्मिन् कमलेऽधः कमले यदाविरासीः ॥ २५ ॥

वृषपर्वततुङ्गशृङ्गभाजा
निहिता मादृशनीचरक्षणार्थे ।

कमले करुणारसैकसान्द्रा
स्वकसंवीक्षणसंहतिर्ध्रुवं त्वम ॥ २६ ॥

निकटेऽत्र गिरौ समागतोऽसौ
तनयाः ! मैवमितो विधत्त पापम् ।
इति दुःखनिराचिकीर्षुरस्म-
त्प्रतिबोधार्थमिहैत्य भासि मातः ॥ २७ ॥

पतिरेष परं पदं विहाय
प्रथितं वेङ्कटशैलमाश्रितस्सन् ।
उपतिष्ठति मे गुणीभवंस्तत्
न भयं वः श्रयतेति वक्षि मातः ॥ २८ ॥

नानारूपाण्यधिगतवती नाथमेनं श्रयन्ती
नाकित्वं त्वं जननि तनुषे नारकिष्वप्यरं यत् ।
तत्किं चित्रं जगति हतकाः कष्टगत्या तवेदं
प्राप्ताः पादाम्बुजमिह लसन्त्येव लब्धेष्टवर्गाः ॥ २९ ॥

(टिप्पणी-अरं-भृशं, रेफशून्यमित्यप्यर्थः ।
नारकिणां रेफशून्यत्वे नाकित्वम् ।
हतकाः- हतककारा इत्यर्थान्तरम् । इदं-इकारदम्
कष्टगतौ ककारहानौ इकारे सति इष्टगतिर्भवति)

त्वदाश्लिष्टोरस्के स्वकचरणयुग्मं प्रणयतः
प्रपत्तव्यं देवे प्रकटयति नारायण इह ।
त्वमम्ब श्रीः स्वस्मिन् श्रुतिमितमुपायत्वमभय-
स्फुटीकृत्या पत्या तुलितमनुकम्प्य प्रथयसि ॥ ३०

तपसा श्रीनिवासेन प्राप्तां शुकपुरे पुरा ।
श्रियं पद्मावतीमित्थं प्रणतो वीरराघवः ॥ ३१ ॥

इति तर्कार्णव पण्डितरत्न वात्स्य श्रीवीरराघव विरचितं पद्मावतीस्तोत्रं संपूर्णम्

श्रीः

## अथ श्रीवेङ्कटेशस्तोत्रम्



श्रिया परिष्कृतोरस्कं दयामय शुभाकृतिम् ।
श्रीवेङ्कटशिखारत्नं श्रीनिवासं भजामहे ॥ १ ॥

सते वैकुण्ठखण्डेऽस्मिन्ननन्ताश्चर्यवैभवे ।
सुलभाय नमः पुंसे दुर्लभात्मसमाय नः ॥ २ ॥

अञ्जनाद्रिशिरस्यात्तव्यञ्जनायाञ्जनच्छिदे ।
अञ्जनाभाय शुद्धाय रञ्जनायात्मने नमः ॥ ३ ॥

अव्यक्ताय सुसूक्ष्माय स्वयंव्यक्ताय भास्वते ।
वृषभाद्रिविनोदाय विशुद्धज्योतिषे नमः ॥ ४ ॥

तस्मै परस्मै कस्मैचित्पुंसे संसेविताङ्घ्रये ।
सुरासुरनरैर्मुक्तैरिव नित्यश्रिये नमः ॥ ५ ॥

अद्रीकृतमहातल्पमविकल्पदयानिधिम् ।
आश्रितप्रार्थनाकल्पमाकल्पयतु मे मनः ॥ ६ ॥

अखर्वपूर्वदेवादिगर्वसर्वङ्कषौजसे ।
नमः श्रीशाय शर्वादिसुपर्वस्तुतपर्वणे ॥ ७ ॥

उत्तुङ्गाचलशृङ्गस्थो दयारङ्गैरपाङ्गितैः ।
समानपि समान्पश्यन् जन्तून्, मन्तून्क्षिपेत्स नः ॥ ८ ॥

आकृष्य भविनो व्याजैः आधिव्याध्येकभेषजम् ।
अनुभावयते रूपं निधये श्रीश्रिये नमः ॥ ९ ॥

नित्यश्रीवासनिर्दुष्टहृदयाय दयात्मने ।
निखिलानुग्रहैकार्थविग्रहाय नमोऽस्तु नः ॥ १० ॥

अर्चिताय नमो दिव्यैस्सुमनोभिस्सुगन्धये ।
विबुधामृतदायास्तु वृषमाद्रिविशोभिने ॥ ११ ॥

घनपत्रलसिंहाद्रिवनच्छायेन वर्भणा ।
घनाघनसमानेन जनतापच्छिदे नमः ॥ १२ ॥

नानाशाखोपपन्नाय सुपर्णोद्भासितात्मने ।
निश्शेषफलदायास्तु नमः कल्पद्रुमाय नः ॥ १३ ॥

यामुनाध्वगतोद्बोधसुमनस्संस्तुतात्मने ।
नित्यगोपजनेष्टाय गोविन्दाय नमोऽस्तु नः ॥ १४ ॥

बालोपच्छन्दनन्यायकृतविश्वहितं परम् ।
अवतीर्णं प्रभुं तीर्णक्लेशं कारणमाश्रये ॥ १५ ॥

कप्यासकञ्जनेत्राय नमः कल्मपहारिणे ।
मनःप्रग्रहरुद्धाक्षवर्गाकार्याय विष्णवे ॥ १६ ॥

प्रशस्तनागपृष्ठेऽस्मिन्नाकपृष्ठ इव स्थितम् ।
नित्यसूर्याश्रयं धाम जगत्सवितृ तन्नुमः ॥ १७ ॥

अपारविभवानेकतीर्थे दिव्ये वृषाचले ।
मध्यलोकमहारत्ने वसते विष्णवे नमः ॥ १८ ॥

आनन्दनिलयख्यातविमानान्तर्विभूषणम् ।
अशेषेश्वरमानन्दमयं ब्रह्म परं स्तुमः ॥ १९ ॥

सेवे तौ दम्पती दिव्यौ यावेनांसि भवार्दितान् ।
हरावः प्रणिपात्येति वराहक्षेत्रमाश्रितौ ॥ २० ॥

प्रणिपात्यानुगृह्यापि पद्मया प्रेषितान् जनान् ।
प्रपाद्य परमानन्दे मज्जयित्रे नमो नमः ॥ २१ ॥

सप्तपर्वतसोपानसमारोहश्रमैर्भवान् ।
अघानि फलयन् श्रीश स्वात्मसात्कुरुते श्रितान् ॥ २२ ॥

आरुह्य पर्वतानुच्चैः अधःस्थान् वीक्ष्य साधवः ।
भक्ताभक्तान्तरं श्रीमन्नेतावदिति मन्वते ॥ २३ ॥

यं त्वां मुक्तामयाकल्पं सदा मुक्तामयाः श्रिताः ।
मुक्ता मयापि पाप्मानः येन श्रीनाथ ते नमः ॥ २४ ॥

अदृष्टश्रीनिवासानामश्रिताहीन्द्रभूभृताम् ।
परो दूरेऽस्ति वैकुण्ठः इति धीरस्त्यपक्विमा ॥ २५ ॥

अमृतस्यन्दिभिर्मुक्तैर्नित्यमुक्तैस्सभक्तिकम् ।
सुमैस्सुवर्णैस्त्वं नित्यमुक्तैश्च श्रीनिधेऽर्च्यसे ॥ २६ ॥

चित्रभूरमृतं तेजः प्राणः खं ब्रह्म माधव ।
मूलं फलं रसो वै स सुखं तत् सर्वमप्यसि ॥ २७ ॥

घनाघनप्रभं शेषधराधरशिरःस्थितम् ।
रमारमणमाहुस्त्वां परापरविदो गतिम् ॥ २८ ॥

वन्दे वैकुण्ठशैलेशं वैकुण्ठं कुण्ठितांहसम् ।
ऐककण्ठ्यं प्रमाणानां यत्र, यस्यापि च श्रिया ॥ २९ ॥

निहत्यान्तस्तमो लोकानवते नवतेजसे ।
सर्वगन्धरसाय स्याद्विचित्र श्रीश ते नमः ॥ ३० ॥

अस्तदोषं समस्ताढ्यं शस्तं कस्तं स्तवैस्स्तुवन् ।
पारं द्रक्ष्यत्यतो नैष परीहासाय मे श्रमः ॥ ३१ ॥

श्रीवेङ्कटेशाय नमः

---

ज्ञानशीलनिधिं नौमि मुनिं श्रीरङ्गलक्ष्मणम् ।
गुरुं, गुरोर्मुखाद्यस्य श्रीवासो भरमग्रहीत् ॥ ३२ ॥

प्रपद्ये पञ्चसंस्कारगुरुं लक्ष्यन्तलक्ष्मणम् ।
नित्यश्रीवासनिध्यानपूर्णोज्यं प्राज्ञयोगिनम् ॥ ३३ ॥

नानाकृतिकृतक्षेमं नारायणगिरिस्थितम् ।
प्रपत्तिदर्शिनं वन्दे देशिकं वेङ्कटेश्वरम् ॥ ३४ ॥

श्रुतिचक्षुर्बलाद्योऽसौ श्रीनिधिं देवतोत्तमम् ।
स्थापयामास योगीन्द्रश्शेष एतं श्रयेऽनिशम् ॥ ३५ ॥

बद्धाञ्जलिपुटो नित्यं प्रपद्ये सप्त पर्वतान् ।
श्रिया विहरते सार्धं येषु नः पुरुषोत्तमः ॥ ३६ ॥

अहीन्द्रशैलवास्तव्यमद्भुतं धाम तन्मयि ।
अपाङ्गरिङ्गणं किञ्चिदातनोत्वनुकम्पया ॥ ३७ ॥

आनन्दात्म यदाश्रित्य सुखमिन्धे जगत्त्रयम् ।
शेषशैलशिरोरत्नं प्रत्नं तद्दयतां मयि ॥ ३८ ॥

महिमाऽनन्यसामान्यो मान्यं सौलभ्यमीश्वरे ।
श्रूयतेऽस्तीति यदस्य देव एष निदर्शनम् ॥ ३९ ॥

कटाक्षाय नमस्तस्मै वेङ्कटब्रह्मणो विभोः ।
अनुकम्पामुपाश्लिष्य जाग्रद्यः कुरुते जगत् ॥ ४० ॥

निःश्रेयसस्थलमिवैष फणीन्द्रशैलो
नाथ त्वया भवति मङ्गलविग्रहेण ।
तन्मादृशाननुगृहाण तथा यथा त्वाम्
आराधयेयुरपि तामनपेक्ष्य मुक्तिम् ॥ ४१ ॥

नूनं वसन्नपि भवानमृते विभूतौ
आत्मप्रभाभिरतसीसुममेचकाभिः ।
व्याप्नोति वेङ्कटविभो भुवनान्यथापि
भाग्याय नस्तव तु मङ्गलविग्रहोऽयम् ॥ ४२ ॥

पित्रोरनुग्रहपदं न परं सुपुत्राः
दुष्टास्सुता अपि तदस्तु रमानिवास ।
बाढं तु विश्वसिमि हानपदं न चाहं
केवोपयोक्ष्यत इयं करुणा विना माम् ॥ ४३ ॥

याचे भवन्तमिह काङ्क्षितमर्पयेति
नो चेद्विभो क्व तव गच्छतु शेष एषः ।
त्रायस्व वा वृषगिरीश दयाप्रभावात्
आहो त्यज ध्रुवमिदं शरणं त्वमेव ॥ ४४ ॥

द्विदशशतरसज्ञो नायमीष्टेऽपराधान्
मम गणयितुमेषा निष्कृतिस्सा क्व कोणे ।
अतिविमलधियो यां यां मुनीन्द्रास्स्मरन्ति
त्वयि शमयतु तत्तान् साञ्जलिर्मे प्रणामः ॥ ४५ ॥

सकृदपि यदि शेषश्शेषशैलेश्वर त्वां
नमति निहितबुद्धिः तत्प्रभृत्येष धन्यः ।

मम तु किमिह कुर्यां चञ्चलं मानसं यत्
क्षणमपि न पुनस्त्वय्यग्रतामेति कृच्छ्रात् ॥ ४६ ॥

त्वयि विनिहितबुद्धिर्नाथ जात्वेष भूयात्
भवतु मयि दया ते मा प्रतीक्षस्व किञ्चित् ।
तृणमपि न चलेत्त्वामन्तरेणेति सत्ये
मम कथमिह यत्नस्सिध्यतु त्वां विनैव ॥ ४७ ॥

अनुदिनमतिभाग्यादाश्रयन्ते भवन्तं
य इह विमलचित्ताः द्विष्टसंसारदुःखाः ।
न न भवति तदा नः तैस्सह त्वत्सवेच्छा
वृषगिरिभुवि विष्णो मां यदि त्वं दयेथाः ॥ ४८ ॥

पुनन्तु पादाम्बुजयुग्मरेणवः
फणीन्द्रशैलेश्वर ते प्रतिक्षणम् ।
स्मरन् ध्रुवं यान् समयेषु सादरं
प्रगल्भते प्रार्थितलम्भने जनः ॥ ४९ ॥

वृषाद्रिशृङ्गे विभवं श्रियःपते
विभाव्य ते विस्मरतात् कथं जनः ।
मुहुर्मुहुर्यः क्रमशोऽनुसंहितो
विधास्यति त्वय्यतुलां दृढां मतिम् ॥ ५० ॥

श्रियःपते वैभवमेव ते महत्
यदाश्रितस्सप्त गिरीनहो जनः ।
अखिन्नपादस्सुखमेव लङ्घयन्
सिसेविषुस्त्वामभिवन्द्य मोदते ॥ ५१ ॥

जगन्नियन्ता न भवेद्भवेद्वा
नास्ते यतो जातु न दृश्यतेऽपि ।

यद्यस्ति दृश्येत तदेति पक्षः
त्वया वृषाद्रीश विलीयते स्म ॥ ५२ ॥

आम्नायबाह्ये जगति प्रभूते
न कश्चन त्वां ध्रुवमभ्युपैष्यत् ।
नचेद्भवान् शेषमहीध्रभूमौ
अद्योतयिष्यत्स्वमनन्यवेद्यः ॥ ५३ ॥

मन्ये य एतादृशमीश्वरं त्वां
प्रवर्तते हन्त जनो निरोद्धुम् ।
कलेस्स कोऽपि प्रभवः प्रमूढः
कथञ्च केनापि न शिक्षणीयः ॥ ५४ ॥

भोक्तव्यं कृतमिति निश्चिता मतिर्मे
खेदस्तु प्रतिदिनमप्यसह्य एषः ।
याचेऽहं वृषगिरिनाथ दीनदीनः
पापानि प्रशमय मे कटाक्षितैस्ते ॥ ५५ ॥

धन्यास्ते फणधरभूधरे तु वृक्षाः
धन्यास्ते प्रतिदिवसं तु किंकरास्ते ।
धन्यास्ते विमलधियः स्तुवन्ति ये त्वां
धन्यस्स्यामहमिह ते कटाक्षितेन ॥ ५६ ॥

ब्रह्माद्याः प्रणिहितमानसास्सुरास्ते
सन्तीति श्रितदय मा भवानुदास्ताम् ।
सत्यं यत्तव न सुदुर्लभाः स्तवास्ते
दिष्ट्या तु क्षणमिह दत्तदृष्टिरसि ॥ ५७ ॥

इष्टं यद्भवति तदाप्तये जगत्यां
सुस्पष्टं वदति जनो ह्युपायभेदान् ।

सन्त्वेते, यदि न भवान् दयेत किं स्यात्
तद्याचे द्रुतमिह मे फलं प्रयच्छ ॥ ५८ ॥

यस्यादरेण भवतो ननु वेङ्कटाख्यः
पापापनोदनविधौ पटुरेष शैलः ।
यस्यानुभावमनुमाय महर्षयस्ते
वाञ्छन्ति तत्र तृणतां तमहं भजामि ॥ ५९ ॥

श्रीश त्वया किमिति वाऽऽद्रियते वृषाद्रिः
तस्याथवा फलमिदं तपसस्तु कस्य ।
ज्ञानेन वा किमथ तस्य वृषाद्रिनाथ
चित्ते तु मे वस न किञ्चन कर्तुमीशे ॥ ६० ॥

लज्जे न कर्तुमिह किञ्चन यन्निषिद्धं
बद्धाञ्जलेस्त्वयि नतिस्तु न बुद्धिपूर्वा ।
भव्यं तथापि भवितेति वृषाद्रिनाथ
मन्ये दयार्द्रभवदीयकटाक्षलाभात् ॥ ६१ ॥

कदाचिदासाद्य वृषाद्रिशृङ्गं
विलोक्य ते वैभवमाश्रितस्त्वाम् ।
सत्यं हरे वेङ्कटशैलनाथ
विहातुमिच्छेन्न कदापि तु त्वाम् ॥ ६२ ॥

अहमहमिकया सिसेविषूणां
यदि निचयं प्रतिवासरं जनानाम् ।
वृषगिरिशिखरे विलोक्य ऋध्नो-
त्यथ किमु ते पदसेविनां विचारः ॥ ६३ ॥

विसृत्वरो यस्य कटाक्ष एष
विनम्रमिष्टैरभिषिञ्चति द्राक् ।

भजे तमेतं वृषशैलदेवं
  श्रियःपतिं शेखरमागमानाम् ॥ ६४ ॥

निरत्ययं खेलतु भावना मे
  यथा च ते मङ्गलविग्रहेऽस्मिन् ।
तथा दयेथाः वृषशैलनाथ
  यथा च नान्यत्र गतिर्ममास्तु ॥ ६५ ॥

यस्यानुभावं स्वयमैकमत्यात्
  उच्चैर्वदन्ति श्रुतयो विभिन्नाः ।
अहीन्द्रशैलस्य शिरोमणिं तम्
  आश्रित्य नारायणमस्मि तुष्टः ॥ ६६ ॥

हृदयेषु सतां वृषाद्रिशृङ्गे
  निगमान्तेषु च नित्यमुल्लसन्तम् ।
कमपि श्रितवत्सलञ्च लक्ष्मी-
  पदलाक्षाङ्कितवक्षसं स्मरामि ॥ ६७ ॥

अस्माकमार्तिशमनाय वृषाचलेऽस्मिन्
  अध्यक्षितः कलशवारिधिकन्यकेशः ।
कारुण्यसारकलितेन कटाक्षितेन
  श्रेयस्तनोतु शरणं जगतां त्रयाणाम् ॥ ६८ ॥

निरीक्षमाणः कृपयाऽर्थिनं जनं
  परीक्षमाणश्च वृषाचलेश तम् ।
यथा न खेदोऽस्य भवेत्तथा भवान्
  हितं वितन्वन्नखिलञ्च रक्षति ॥ ६९ ॥

रमामुखाम्बुजोल्लासवीक्षणस्मेरचक्षुषः ।
प्रसीदन्तु कटाक्षास्ते वृषशैलेशितुर्मयि ॥ ७० ॥

अर्थादौ प्रौढिमाभाविप्यपरित्याज्यतां विदन् ।
श्रीनिवासस्तुतिं वेगाद्यतानीद्वीरराघवः ॥ ७१ ॥

श्रीनिवासाय नमः

---

सम्यग्विभाव्य सकलं पुनरैहिकाद्यं
मायावशेन भवता कमलेश सृष्टम् ।
सर्वात्मकं सुखमयञ्च भवन्तमीहे
दृष्ट्वा गुरोश्च भवति स्वयमैकतान्यम् ॥ ७२ ॥

अत्यन्तसुन्दरमुखाम्बुजमन्दहासात्
नेत्रोत्पलप्रहितनिस्तुलवीक्षितैश्च ।
क्षेमं दधत्सकललोकनिदानमेष
शेषाद्रिशेखरमणिश्शरणं ममास्तु ॥ ७३ ॥

कलशपयोधिजाकमलसोदरनेत्रयुग-
प्रहितकटाक्षवर्षकृतनीलिममूर्तिरसौ ।
निगमशिरोभिराकलितनैजगुणांशकलः
कलयतु मङ्गलं सततमेष वृषाद्रिपतिः ॥ ७४ ॥

पद्मयाऽलङ्कृतोरस्स्थलं प्रार्थये
पूरुषञ्चोत्तमं शेषशैलेश्वरम् ।
दुःखमागन्तु मे दूरतः प्रक्षिपत्
भूरिकल्याणकृद्वीक्षितं प्रेष्यताम् ॥ ७५ ॥

सुरमौलिमकुटमण्डनमन्दारस्रङ्मरन्दमेदुरितम् ।
संवाहितं श्रिया नः श्रियं समेधयतु शौरिपदपद्मम् ॥ ७६ ॥

कलशाम्बुराशिकन्याकौस्तुभवनमालिकादिकलितं तत् ।
वक्षस्स्थलं विधत्तां वेङ्कटनाथस्य मङ्गलानि मम ॥ ७७ ॥

दिवि तिष्ठति वृक्ष इव स्तब्ध इति त्वां धरेऽत्र तिष्ठन्तम् ।
सकलफलकल्पवृक्षं पुरुषं श्रीमन् श्रुतिस्स्तौति ॥ ७८ ॥

कलयामि संततमिमं कमपि कृपावारिशेवधिं देवम् ।
विनतजनजातरक्षादीक्षं श्रीभूमिवल्लभं शरणम् ॥ ७९ ॥

वेङ्कटभूधरशिखरद्योति परं किमपि धाम निर्हेतु ।
निखिलजगदेकहेतुर्नैसर्गिकगुणगभीरमस्तु हृदि ॥ ८० ॥

आश्रितरक्षणसूचकहस्ताम्बुजमुद्रमखिलदेवमिमम् ।
शेषमहीधरभूषणमेष जनः श्रीनिधिं नमति ॥ ८१ ॥

अनिदंप्रथमानि वचांस्यशेषतो बोधयन्ति यं देवम् ।
विनतातनयमहीधरशिखरपरिष्कारमाश्रये श्रीशम् ॥ ८२ ॥

सर्वत्र जगति तिष्ठन् सर्वस्याप्यश्रयः श्रियःकान्तः ।
नारायणशिखरिशिरःपरिष्कृतिश्शरणमस्तु देवो नः ॥ ८३ ॥

विद्युदुदञ्चितदीप्तिस्तरुणो धाराधरो यथा देवः ।
अञ्जनगिरिमधितिष्ठन्नञ्जनमखिलं व्यपोहतु श्रीशः ॥ ८४ ॥

जगतस्सुखमेधयते मेधां भक्तिश्च संपदं ददते ।
वृषपर्वतशिखरजुषे श्रीमण्डितवक्षसे नमस्सततम् ॥ ८५ ॥

प्रह्लादमन्वगृह्णात्कृपानिधिः श्रीनृसिंहमूर्तिर्यः ।
सिंहाचलशिखरगतो देवः श्रीवल्लभस्स एष गतिः ॥ ८६ ॥

सप्ताचलाधिनाथो द्विसप्तलोकाधिराज एष हरिः ।
संख्यातीतै रूपैस्समुल्लसन् श्रीपतिः परं शरणम् ॥ ८७ ॥

सप्तशैलस्वामिने नमः

---

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## वर्णमालास्तवः ॥

अस्तु वस्त्विदमनन्तभूधरे निस्तुलद्युति समस्तदैवतम् ।
शस्तदं श्रितवतामुरस्तलन्यस्तमानितरमं परं हृदि ॥ ८८ ॥

आदरेण वृषभूधरेशितुर्मेदुरेण भयधैर्यनिश्चयैः ।
पंकजातसदृशे पदे नतिः पंकजातशमनीयमस्तु नः ॥ ८९ ॥

इज्ययाऽहमहिराजभूभृतः प्राज्यया परिवृढं प्रहर्षयन् ।
नित्यमस्य पदपद्मचिन्तया कृत्यकृद्भवितुमस्मि कामनः ॥ ९० ॥

ईडितुं श्रुतिगणैस्सदोद्यतैः व्रीडितं हि यमनन्तभूमकम् ।
तस्य शेषगिरिशृंगवासिनः न्यस्य पद्यधिमुदस्मि मे भरम् ॥ ९१ ॥

उच्चनीचपदभेदचिन्तनां व्युच्चरन्त्यविकलं विना यतः ।
पद्मवासरसिकापतेर्दयासद्मनो दृश इमं श्रयेऽनिशम् ॥ ९२ ॥

ऊर्जितं किमपि धाम संश्रये वर्जितं स्वयमशेषहेयतः ।
शेषशैलशिखराग्र्यभूषणं शेषभूतनिखिलं श्रियःपतिम् ॥ ९३ ॥

ऋध्दिरत्र च परत्र चार्थ्यते सिध्दिरात्मशुभकर्मणो यतः ।
व्यक्तिमेत्य वृषपर्वते स्थितं सक्तिमेति तमवेक्षितुं मनः ॥ ९४ ॥

नॄनसावनुजिघृक्षुरादरादेनसा दिवमुपैतुमक्षमान् ।
अंजनाचलशिरः श्रितो रमारञ्जनो य इममाश्रयेमहि ॥ ९५ ॥

क्लृप्तचेतसमदुष्टरक्षणे दृप्तदुष्टदमने च माधवम् ।
अंहसां निधिरयं जनो हरिं रंहसा शरणमेति विश्वसन् ॥ ९६ ॥

एति यो गिरिमुपैति ते पदं हेतिभूषगलसद्विभूतिक ।
स श्रयत्यभिमतानि सत्वदान्यश्रमेण भुवनेष्वपि त्रिषु ॥ ९७ ॥

ऐन्द्रमुख्यपदचिन्तनं वृथा चन्द्रकोटिजयिनो वृषेश्वर ।
व्याकृतानवधिनामरूप ते ह्याकृतेः पदमिदं परं पदम् ॥ ९८ ॥

ओजसैष विदधद्भुवं वशे भो जनाः नस्यति शेषभूभृति ।
विप्रतीपविधिभिः किमस्ति वः क्षिप्रमेष शरणं चिकीर्ष्यताम् ॥ ९९ ॥

औदरैकनिरतान् धनार्थिनोप्यादरेण हरिरेष मुक्तिदः ।
पश्यतीह वृषवल्लभो जनाः नश्यथ स्वयमुपेत्य किं परान् ॥ १०० ॥

अंबुजाक्ष इह शेषभूधरे कम्बुचक्रलसदंसकुण्डलः ।
प्रत्नव्यबहुभव्यभूषणो रत्नराशिरिव राजति स्थिरः ॥ १०१ ॥

अः परो यदिह तत्परः स्थितः, कः परश्शुभकरश्श्रयेम तम् ।
शेषवासरसिकेऽत्र शेषिता शेषतापि यदशेषतस्स्थिरा ॥ १०२ ॥

कमलदळविमलशीतळकर्णान्तविशाललोचनोदारम् ।
कमपि कमलासनाथं कलये वृषशैलविहरणं कृष्णम् ॥ १०३ ॥

खरशठकठोरहृदयस्वभावभेदिप्रभावभूमानम् ।
खरकिरणकोटिभास्वरमखरकराह्लादमच्युतं वन्दे ॥ १०४ ॥

गतिमन्येष्वात्मनि वा फलार्थिनामप्यनर्थिनाञ्च परम् ।
सर्वान्तरं समेतं समया रमया दयानिधिं नौमि ॥ १०५ ॥

घनसुकृतजनसमर्चित घनाघनप्रार्थ्यदिव्यभव्याभ ।
अघनोदन जीवघनात् परं श्रियस्त्वां पतिं समीक्षेय ॥ १०६ ॥

ङस्ङसिनित्यविचारो द्रव्यगुणस्पन्दसततघोषश्च ।
व्यर्थो वृषशैलपतेस्सन्तश्चिन्तयत सन्ततं रूपम् ॥ १०७ ॥

चरणं वृषशैलमणेस्तरणं जगतस्समाश्रये शरणम् ।
अरुणाम्बुजदळसुन्दर-करुणारसनिर्भरायताक्ष तव ॥ १०८ ॥

छविभिस्सकलं तेजश्छादयते यस्स्वयंप्रभः प्रभवः ।
तमहं तरुणपयोधरवर्णं वृषशैलविहरणं प्रणतः ॥ १०९ ॥

जगदवन-हरण भवनाद्याश्चर्यक्रीडमञ्जनापीडम् ।
रमया सनाथममलं हृदये मे प्रार्थये स्थितये ॥ ११० ॥

झटिति त्यजति भवन्तं सन्ततमभ्यस्तलोलुपं चित्तम् ।
वृषशैलशिखरविहरण विवरीतुं त्वां कदा नु ते कामः ॥ १११ ॥

ञाव् ञाविति कलहपरो भक्ष मार्जार इव जनो यत्र ।
परहानि-स्वात्मसुखप्रवणस्तस्माद्रमेश रक्ष भवात् ॥ ११२ ॥

टीकाश्शतं विधत्तां व्याचष्टां श्रुतिषु काममर्थशतम् ।
किं तेन यदि विरज्य न भुङ्क्ते न ध्यायतीह विष्णो त्वाम् ॥ ११३ ॥

ठक्किति यावत्प्राणाः न तनोर्निर्यान्ति तावदस्त्वेषः ।
परिपोषितभक्तिरसो भुवि भवति ध्यानपूजनैश्श्रीश ॥ ११४ ॥

डयत इति विहगमात्रं न कथञ्चन ते रथो यथा विष्णो ।
अहमपि तथा न विधिरिव तथापि नाथ स्तुतिप्रियेक्षस्व ॥ ११५ ॥

ढक्कादिवादनोल्बणनाट्यरसेन स्तवेन भव्येन ।
अनुभूय राधयति यं शंभुस्तं सिंहशैलगं स्तौमि ॥ ११६ ॥

ण इति हि वर्णो वार्णासिद्धेर्विष्णोश्च वर्णने हेतुः ।
नारायणसंज्ञां त्वयि नियमयति श्रीवृषाद्रीश ॥ ११७ ॥

तटिदुज्ज्वलो घनो यो वनमालाशोभनो वृषाधीनः ।
तद्दृष्टौ न भवेयुः केकाः कथमत्र पक्षिणां मध्ये ॥ ११८ ॥

स्थिरकृष्णपक्षरम्या हंसाः प्रासा अहं स इति यागम् ।
स्वपरभिदैकपरा इह चित्रं शुद्धाश्चरन्ति वृषे ॥ ११९ ॥

दक्षास्सन्ति गिरीशास्तदैव ते सर्वमङ्गलाकाराः ।
सद्गुणपतयस्सुगुहाश्शेषगिरीशान भक्तौघाः ॥ १२० ॥

धावन्ति च धोरन्ति च धयन्ति च त्वां स्तवैश्च धिन्वन्ति ।
लब्धञ्च धारयन्ति श्रीशेत्थं पञ्चधा भक्ताः ॥ १२१ ॥

नागेन्द्रनगवरं यो न गतो नगतो नरस्य नास्य भिदा ।
फलदं नगस्य जन्म स्यादस्य तु निष्फलं जन्म ॥ १२२ ॥

पाणिपयोजगतस्ते शङ्खो हंसस्सुदर्शनश्लिष्टः ।
श्रीमन् पदपद्मगतैर्हंसैर्दृष्टोऽथ मानसे लसति ॥ १२३ ॥

फलमिदमेवेति सतां फलदं त्वरयेति संसृतिं वहताम् ।
यत्र परा प्रतिपत्तिः तत् त्वद्रूपं वृषाद्रीश ॥ १२४ ॥

बेरैः पञ्चभिरेतैस्सव्यूहः पर इव त्वमुल्लससि ।
वृक्ष इवैकस्तब्धो दिवि तिष्ठन् शेषशैलशिखरे त्वम् ॥ १२५ ॥

भवतु भगवन्मुकुन्द श्रीवल्लभ वेंकटाद्रिशृंगमणे ।
कुलदैव कल्पवृक्षेत्येवं त्वयि मे वचोऽजस्रम् ॥ १२६ ॥

मदनकदनैर्धनायावेताल्या पारलौकिकैर्धर्मैः ।
भृशमत्र कर्शितानां परायणं त्वं रसायनं भगवन् ॥ १२७ ॥

यस्याः कणास्सरन्तो भाग्यवशात्संहतास्सुखाय भुवः ।
विलसन्ति तत्र तत्र श्रीमन् वात्सल्यदीर्घिका सा त्वम् ॥ १२८ ॥

रमयितुमेव रमां त्वं भूमिमविन्दः प्रजाश्च पासीति ।
गमयति घोषो नाम्नोः कथां रमारमण गोविन्द ॥ १२९ ॥

लक्ष्मीं शुकपुरि तपसा प्राप्य श्रीशैलशृंगशृंगारः ।
तपसो विदूरभविनस्तपस्विनो वीक्षसे दयया ॥ १३० ॥

वन्दारुनन्दथुवहं बृन्दावनचारि वारिजाऽऽताम्रम् ।
शुभशेषभोगवासं श्रीवास त्वत्पदं विभातु हृदि ॥ १३१ ॥

शक्तो दिवि स्थितस्त्वं सर्वत्र तथापि शेषमायातः ।
असमर्थबद्धभक्तव्रातसमाश्लेषविरहसन्तप्तः ॥ १३२ ॥

षड्गुणमन्नं दिव्यं त्रिगुणरतान् सादरं समास्वाद्य ।
अक्लेशतो विरक्तिं वर्धयसे वृषगिरीश त्वम् ॥ १३३ ॥

सद्यः फलं प्रयच्छति कल्पतरौ सप्तशैलशिखरस्थे ।
अनुकल्पभूतमल्पदमन्यद्दैन्येन किं सेव्यम् ॥ १३४ ॥

हयवदनाद्यवतारैराब्रह्ममनुष्यमान्ध्यहर्तारम् ।
वेदगिरिशिखरशेखरमिमं नुमो भक्तिधीवृद्ध्यै ॥ १३५ ॥

इति वर्णमालस्तवः

कुण्डलिराजगिरिस्थः खण्डितसकलान्तराय एष हरिः
कल्याणं कलयतु नः कलशाकूपारकन्यकानिलयः ॥ १३६ ॥

वृषगिरिशिखरविहारी वृषमुखविबुधाभिवन्द्यपदपद्मः ।
वृषमस्मासु विधत्तां वीक्षावलितैर्विशिष्टकारुण्यैः ॥ १३७ ॥

पुष्णासि भोगमखिलं क्लिश्नाति न किञ्चिदाश्रित इह त्वाम् ।
तमिमं मुकुन्द वन्दे देवं त्वां वृषगिरीशानम् ॥ १३८ ॥

अञ्जनाचलविभूषणं भजे कञ्जलोचनमशेषदैवतम् ।
आदरेण निगमान्तदेशिको यो बभूव जगदुद्दिधीर्षया ॥ १३९ ॥

श्रीनिधानमनपायि वत्सलं तन्निधानमविशेषभूधरम् ।
सावधानमनुभोक्तुमादरात्संविधानपरमस्तु मे मनः ॥ १४० ॥

आश्रये श्रितजनावने स्थितं धाम दिव्यमनघं दयानिधिम् ।
वेङ्कटाचलविहारि वारिदश्याम सुन्दरमघापनुत्तये ॥ १४१ ॥

कामये कमलकोमलं तव क्षान्तिसागर पदं परायणम् ।
काम एष मम कापथे बत प्रस्थितिं न पुनरेतु किञ्चन ॥ १४२ ॥

खेदवर्षकरकाभिराहते मोदहेतुरिह नो मनागपि ।
कापथे पुनरिदं प्रवर्तते कष्टमीश्वर मनो रुणत्सि नो ॥ १४३ ॥

इष्टमेतदिति वेङ्कटेश्वर स्वल्पमप्यमल नैव चिन्तये ।
पारतन्त्र्यपरिकर्मितस्य मे तन्न युज्यत इति स्थितः पुनः ॥ १४४ ॥

अञ्जनेश भुवि रञ्जयन्श्रितान् भञ्जनं न कुरुषे ममैनसः ।
कञ्जलोचन कृपानिधे कथं कल्मषक्षपणनामकीर्तनं ॥ १४५ ॥

पापमच्युत कृतं पुनःपुनर्धीहरं खलु मया ऽनुभूयते ।
पुण्यमस्ति यदि मे यदृच्छया पद्मवासरसिकेश पाहि माम् ॥ १४६ ॥

दुष्कृतस्य करणे दृढं मनः दृश्यते पुनरथो मनागिव ।
प्रत्यहं यदिदमीदृशं हरे कीदृशी गतिरहो भविष्यति ॥ १४७ ॥

नास्ति मे गतिरनन्यवत्सल श्रीनिधे सकललोकरक्षक ।
देहि दिव्यजलदोपमद्युते तापशान्तिमभयङ्करो भव ॥ १४८ ॥

यावदच्युत पवित्रमानसप्राज्ञसादरसुभाषितास्पदम् ।
जीवितं सकललोकमानितं तावदस्तु न तु चेन् मृतिं कुरु ॥ १४९ ॥

देशिकैरनघदिव्यमानसैरादृते पथि भवन्मनोहरे ।
श्रीनिवास कृपया मनाग्गतं पार्श्वगर्तपतनाच्च पाहि माम् ॥ १५० ॥

अम्बुजासनमुखैस्सुरैस्स्तुतं तुम्बुरुप्रभृतिगीतमप्यहम् ।
शम्बरारिविवशोच्युतं श्रये त्वं बलेन तव रक्ष माधव ॥ १५१ ॥

कामलेशहतचेतनो न यो माननीयविभवस्स संसृतौ ।
सर्वशेषिशुभदिव्यदम्पतिप्रीतिमात्रमपि किन्न काम्यते ॥ १५२ ॥

सर्वकामपरिपूर्णसेवया घोरकामवशता विनश्यति ।
अद्भुतं तमिममञ्जनाचलद्योतमाश्रय मनः परां गतिम् ॥ १५३ ॥

इन्द्रियाणि न वशे मनागपि श्रीनिवास तमसा वृतोऽस्म्यहम् ।
जातु हन्त भवता भवत्प्रियैश्चेक्षितं सपदि मामुपेक्षसे ॥ १५४ ॥

रक्ष संप्रति रमानिवास मां रागसंभृतपरागपांसुलम् ।
कालमेघ करुणारसैश्शुभैश्शोधयन् विहितशुद्धजीवनः ॥ १५५ ॥

वेदपर्वतशिरस्स्थितं पदं वेद यत्तव रमानिधे जनः ।
वेदनाभिरनुपप्लुतस्सुखं वेद सोऽत्र च परत्र चाखिलम् ॥ १५६ ॥

इत्थमाश्रितजनावनप्रियं देवदेवमनघं दयानिधिम् ।
श्रीनिवासमिह वीरराघवो दुष्कृतौघमहतीप्सयाऽऽश्रितः ॥ १५७ ॥

उपनिषद्भिरुदीरितमादरादुदयतामुपबृंहणवर्णितम् ।
सुरमहर्षिमुखस्तुतमद्भुतं मनसि सिंहमहीधरगं महः ॥ १५८ ॥

किमिह नः कथया भवितान्यया त्वनयकल्पितया कथयानया ।
अवहितं भव वेङ्कटभूधरे तव हितं निहितं महितं मनः ॥ १५९ ॥

प्रणतलोकपरायणमानसं प्रणमत प्रणयेन परायणम् ।
निखिलवेदगवेषितमद्भुतं वृषमहीधरदीप्तमिदं महः ॥ १६० ॥

निखिलतापनिबर्हणचुञ्चुना नियमितस्वकयुग्मविभूतिना ।
श्रितरमः करुणासहचारिणा दिशति वीक्षितकेन स नस्सुखम् ॥ १६१ ॥

सकलहंससमाश्रयणीयतां सकलहंसमिदं मणिनूपुरैः ।
सपदि नः प्रतिपादयतीव ते कमलकान्ति पदं कमलापते ॥ १६२ ॥

हितकृते कृपयेह महीतले महितमञ्जनशैलमधिश्रितम् ।
अनघमद्भुतमङ्गलविग्रहं कमपि यामि गतिं कमलानिधिम् ॥ १६३ ॥

आश्चर्यभूतनिरपायदयामयीभि-
राद्रींकृताखिलवृषाद्यचलस्थलाभिः ।
बद्धादराऽऽहितनिमज्जनपावनीभि-
र्धाराभिराढ्यमवनीधरमाश्रितोऽस्मि ॥ १६४ ॥

अभितो विशोभिगिरिकूटशेखर-
द्रुमशृङ्गतुङ्गतरशाखिकोज्ज्वलैः ।
अधिनीरजातललितैरनोकहै-
र्हृदि पापनाशशुभतीर्थमस्तु नः ॥ १६५ ॥

इतस्ततो भिन्ननिजप्रसारया
प्रभूतपापक्षयवारिधारया ।
अदभ्रवेगोत्थकणाऽऽहिताभ्रया
मनश्शरीरञ्च ममास्तु शोधितम् ॥ १६६ ॥

आकाशगं गामपि संप्रविष्टं
आकाशगङ्गासलिलं महान्तः ।
श्रेयःप्रदं संविनियोजयन्तो
भजन्ति लक्ष्मीश भवत्प्रियत्वम् ॥ १६७ ॥

सहस्रसूर्योज्ज्वलदिव्यतेजस-
स्सरोजवासासहधर्मचारिणः ।
सुखैस्सुशीतैर्हरितैः प्रभाभरैः
वनं मुदे तद् घनपत्रचित्रितम् ॥ १६८ ॥

वने निवासोऽप्यवनेन जीविता
जनेष्वसक्तिर्जनतापहारिता ।
घने स्थितिस्त्वव्ययघनाशशीलता
त्वदद्रिलीनेषु हरे जनेरिताः ॥ १६९ ॥

हरे गिरेरस्य हि सर्वतोमुख-
प्रदानशुद्धान्तरभावशोभिताः ।
निवासिनोऽन्ते स्वयमात्तगौरवा
भवन्ति मान्या मुदिरा भवत्पदे ॥ १७० ॥

---

न श्रद्धा न मतिः न शक्तिरथ मे किं स्याददृष्टं शुभम्
धूर्तानां मम चास्ति का खलु भिदा वेषः प्रजामोहनः ।
हे शेषाचलशेखरेश्वर रमानाथ प्रभो शाश्वत
ज्ञानानन्दविभूतिनायक नय त्वं मां स्वयं सत्पथम् ॥ १७१ ॥

अन्तर्मे न हि मात्रयापि भवति प्रेम श्रियः प्रेयसि
स्वामिन्यद्भुतनिस्समाधिकगुणग्रामे शुभालम्बने ।
कामोऽथापि भवद्विलोकनविधौ कामैकवश्यस्य मे
बाष्पस्वेदसगद्गदस्वरमुखप्राप्त्यै कथं युज्यते ॥ १७२ ॥

भक्ताः केचन पावितत्रिजगतस्त्वय्येव पातिव्रतीं
बिभ्राणास्तव पादपद्मनतये शैलं समायान्ति ये ।
तादृक्षाः मयि नित्यदुष्टहृदये नाथ प्रभो नीरद-
श्याम श्रीधर वीक्षणं सकरुणं याचे क्षिपन्तु स्वयम् ॥ १७३ ॥

कामार्तन्न कथं मनो मम हरे यन्नाम नारीमयीं
हा कष्टं प्रतिमामपीक्षणपदं प्राप्तां जहात्येव न ।
कल्याणे कमनीय उज्ज्वलतमे कालाम्बुदश्यामळे
कांक्षाकल्पतरौ वृषाचलमणौ कुर्यात्कदैतां रतिम् ॥ १७४ ॥

भाग्यं भूरि वृषाचलेश कलये स्त्रीजन्महेतुं यतः
तारुण्योज्ज्वल तोयवाहसुभगे त्वय्यस्तु लीनं मनः ।
एतत्साम्प्रतमम्बुजेक्षण यथा गोप्योऽपि कृष्णे त्वयि
प्रेमोद्गारकषायिकोमलहृदो नैवं मुनीन्द्रा यतः ॥ १७५ ॥

आचार्यैरुपदिष्टमस्ति सुदृढं संचिन्तितञ्च स्वयं
नातो बाह्यकुदृष्टिमोहनवशं मन्ये मनो यास्यति ।
एवन्त्वेपि यदञ्जनाद्रिशिखरप्रद्योत लक्ष्मीनिधे
त्वद्रूपानुभवस्थमस्ति न मनः पापिष्ठमेतत्ततः ॥ १७६ ॥

आगत्यान्तरवेक्षणाय भवतश्चित्तं न यत्तं बत
प्रस्थाने कृपया बहिश्च मनुते प्रान्ते समायात्विति ।
ईदृक्तन्द्रि महाघमेतदनघं त्वाञ्चेत् दिदृक्षेत जा-
त्वेतद्वेंकटशैलनाथ भगवन् प्रत्यूहितं मा कुरु ॥ १७७ ॥

त्वामेष प्रणतोऽस्मि ते परिजनान् येऽन्ये त्वदीयाश्च तान्
मा मे जातु मनः क्रुधा कलुषितं भूयाद्वृषाद्रीश्वर ।
सह्यं सर्वमहो विचिन्त्य बहुना यज्जन्मना स्वार्जितम्
क्रोधः किन्तु महागसे पुनरतश्शान्तोऽस्मि वीक्षस्व माम् ॥ १७८ ॥

बुध्द्या यानि कृतानि सम्प्रति कथं पापानि तानि प्रभो
न स्मर्यन्त इहाञ्जनेश्वर मनो धूर्तं मदीयं ध्रुवम् ।
स्वातन्त्र्यन्तु यथा, तथा न भवितुं यत्नो भवन्तं पुन-
स्साक्षेपं स्मरयामि सर्वसमतां लक्ष्म्या सह त्वं हस ॥ १७९ ॥

दूरेऽपोहय दुष्कृतानि कृपया पुण्यानि चेत्सन्ति मे
तानि श्रीश बलात्समूहय मयि प्रेम स्वयं पोषय ।
हे गोपीजनबान्धव प्रणिपताम्यन्या गतिर्नास्ति मे
तत् त्वं तत्त्वमनुत्तमं तव पदद्वन्द्वं सुखं दर्शय ॥ १८० ॥

भ्राजत्पीतसुवर्णचित्रवसनं काञ्चीकृतालङ्क्रियं
सालग्रामसुवर्णरत्नकुसुमप्रख्यातमाल्याञ्चितम् ।
कान्तं ते घनसारपुण्ड्रललितस्मेरारविन्दोल्लस-
द्वक्त्रं दिव्यकिरीटमञ्जनपते रूपं स्वयं दर्शय ॥ १८१ ॥

(विरक्तगृहस्थप्रार्थना)

श्रीमानेष वृषाचलेन्द्रशिखरप्रान्तप्रदीपायित-
स्वैरव्यक्तसमस्तमङ्गलनिधिश्रीमूर्तिराधित्सताम् ।
पद्मापादपयोजयुग्मविगलल्लाक्षापदेशोज्ज्वल-
न्मन्दस्यन्दिमरन्दमेदुरमहोरस्को विरक्तिं मम ॥ १८२ ॥

कृत्याकृत्यविवेकदुर्विधमहानर्थोपनद्धोन्मद-
प्राज्ञंमन्यकरत्यजद्दरदृढप्रोन्माथि मन्मानसम् ।
तन्मे संप्रति तं प्रति प्रणतयस्सन्तु प्रियो यश्श्रियः
प्रेमार्द्रं प्रणिधापयेन्मन इदं कामञ्च निर्यापयेत् ॥ १८३ ॥

शृङ्गे शेषभुजङ्गपुङ्गवगिरेस्तुङ्गे परं मङ्गलं
शृङ्गारं तमनङ्गभङ्गविधये सोऽहं शरण्यं गतः ।
यो लक्ष्मीमुखपद्मलम्भितमहामोदानघापाङ्गित-
श्रेणीभृङ्गपरंपरास्वरसमस्वाङ्घ्रिश्रितस्वागतः ॥ १८४ ॥

यत्खल्वाश्रममद्वितीयमनघं तत् सद्वितीयं श्रियः
प्रेयः प्राप्तमिदं द्वितीयमिह मे धर्मः परं वर्धताम् ।
मा भूदञ्जनशैलशेखर हरे त्वत्पादपङ्केरुह-
प्राप्तस्यास्य कदापि कामकदनस्वल्पप्रसङ्गोऽपि मे ॥ १८५ ॥

इज्यौपासनवैश्वदेवविधिना पूर्वं परञ्चाश्रमं
प्रत्यप्यन्नसमर्पणेन सुहितां वृत्तिं सुखं प्रेप्सतः ।

श्रीमन्नञ्जनशैलशृङ्गविलसत्सन्तान संकल्पय
स्वेनैव स्वककिंकरत्वविभवस्थैर्यं सयूथस्य मे ॥ १८६ ॥

त्वामेवानुभवन्निरन्तरमहं त्वत्पाददास्यप्रियः
त्वत्प्रीत्यै नियतं विधाय विधिवत्सर्वं गृहस्थोचितम् ।
कामोद्दामकदर्थनानि कमलाकान्त प्रभावेण ते
दूरीकृत्य कृतार्थयेयमनिशं दीनं मदीयञ्च माम् ॥ १८७ ॥

यस्तु प्राथमिकाश्रमस्स भगवन् क्षिप्रं व्यतीयाय मे
वानप्रस्थ इतीदमद्य जगति प्राप्तं भृशादर्शनम् ।
संन्यासस्तु गृहस्थधर्मवहनव्याक्षिप्तनैजस्थितिः
तद्गार्हस्थ्यमिदं विधत्स्व नियतं धर्म्यं प्रियं ते मम ॥ १८८ ॥

इत्थं वेङ्कटशैलशेखरपदाम्भोजद्वयैकप्रियः
कन्दर्पोद्भटदर्पधूननकृते देवं तमेव श्रयन् ।
धर्म्ये वर्त्मनि वीरराघवकविर्वाञ्छन् शुभं वर्तनं
तत्तः प्रार्थितवानथास्य पठिताप्यस्त्वेतदीक्षापदम् ॥ १८९ ॥

(अघमर्षणप्रार्थना)

श्रीकान्त श्रितसर्वलोकशरण श्रेयोनिधे शाश्वत
स्वाधीनाखिल शान्त वत्सल शुभप्रज्ञानशक्त्युज्ज्वल ।
देवाधीश वृषाचलेश्वर दृढं त्वत्पादपद्मप्रियः
त्वद्भृत्यस्तव किंकरोऽस्मि किमिति प्राप्तोऽस्मि कष्टां दशाम् ॥ १९० ॥

वेदो मानमशेषतस्स भगवांस्त्वं दैवतं केशवः
मान्याः व्यासपराशरादिमुनयो निष्कम्पनिर्धारकाः ।
सत्येवं वृषशैलशेखर कथं त्वत्पादपद्मद्वयीम्
आश्रित्यापि जनोऽयमित्थमधुना कष्टस्य काष्ठां गतः ॥ १९१ ॥

उद्दिश्याङ्घ्रिमुदार ते यदि भवेदेकोऽभिनीतोऽञ्जलिः
केनाप्यच्युत कृत्स्नमस्य वृजिनं मुष्णासि पुष्णासि शम् ।
तत्तादृक्प्रथपद्मवासरसिकालङ्कारवक्षस्स्थल
प्राज्ञैरित्थमुदीरितोऽसि तदिदं काले त्वया स्मर्यताम् ॥ १९२ ॥

कालोऽयं कलिरत्र कल्पितमभूज्जन्म त्वयेदं तु नः
तस्मादस्मदिहास्ति कर्म नतरां भूयः प्रतीक्ष्यं त्वया ।
कामं मोक्षपथस्स मास्तु सकलं त्वन्यत्तदेकोद्भवं
तत्किं नामनि वेङ्कटेश फणितेऽप्येवं न सन्तुष्यसि ॥ १९३ ॥

नाहं संसृतिसागरान्तरमहावर्तभ्रमं प्रार्थये
नो वा त्वामपहाय दभ्रचिदनुस्वादक्षणं कामये ।
नो वा संप्रति रङ्गलक्ष्मणमुनिन्यस्तात्मरक्षाभरः
त्वत्तस्त्वत्पदपद्मसेवनमहानन्दश्च याचे स्वयम् ॥ १९४ ॥

श्रीमन्नञ्जनशैलशेखर हरे स्वामिन्निदं शिष्यते
यत्ते पादपयोजसेवनमिहाऽऽदेहावसानेप्सितम् ।
तत्तुभ्यं मयका मदीयकयुजा निर्वर्तय त्वं स्वयं
दूरीकृत्य भयं दयाजलनिधे दोषैकराशेर्मम ॥ १९५ ॥

उत्पाद्य स्वयमुत्तमे खलु कुले विद्यासु युक्तास्वपि
व्यत्पाद्याद्भुतदेशिकाङ्घ्रिकमलात्संपाद्य यत्सांप्रतम् ।
वात्सल्येन वृषाचलेश नयतो वर्त्म स्वयं साधु माम्
अन्ते हन्त कथं नु घोरवृजिनारण्ये विसर्गे मतिः ॥ १९६ ॥

स्थातुं युक्तमसंशयं समधिया मानावमानद्वये
नैवाथापि निदेशलङ्घनकृतं सह्यं सतां गर्हणम् ।
आज्ञापालनतत्परस्य यदि मे कामो न संकल्प्यते
पद्माकान्त सुपुत्रहानिविहितश्शोको भवन्तं दहेत् ॥ १९७ ॥

हा हा हन्त मुकुन्द हास्यति कदा चिन्ताज्वरो मानसं
सर्वोऽप्येष वृथैव याति समयो दास्येऽपि तिष्ठासतः ।
आकर्षन्ति यथायथं न च परीहारे मनाक् प्राभवं
नाथ त्वां शरणं गतस्य ऋणिता श्रीकान्त नैवोचिता ॥ १९८ ॥

अद्य श्वस्तदनन्तरे दिवस इत्येवं मृषाभाषितैः
अर्थापेक्षिणमुत्तमर्णनिवहं नित्यं हरे वञ्चयन् ।
सर्वं नारकमञ्जनाद्रिशिखरालङ्कार चेत्प्राप्नुयां
त्वत्कीर्तिर्मम दास्यवृत्तिरपि हा नूनं लयं यास्यतः ॥ १९९ ॥

श्रीमन्नीदृशसाधुवर्त्मनयनप्राप्तं यशस्ते स्थिरं
कर्तुं किञ्च ममापि जन्म सफलीकर्तुं व्यवस्यन्निह ।
दासे देव दयातरङ्गितशुभापाङ्गाल्पविक्षेपतः
•क्षिप्रं सर्वमृणं विधूय मम देह्यत्यन्तदास्यं त्वयि ॥ २०० ॥

इत्थं वेङ्कटशैलशृङ्गनिलयं सर्वार्थविश्राणनं
श्रीमन्तं हरिचन्दनं कुलधनं देवं परं संश्रयन् ।
प्रेमोद्गारकषायितेन मनसा कैङ्कर्यविघ्नक्षयं
काङ्क्षन्नस्तुत वीरराघवकविः क्षेमाय देवोऽस्तु सः ॥ २०१ ॥

(पाणिमुद्रास्तवः)

पार्थं पुरा प्रणयतः पुरतो निषाद्य
पद्यं यदुत्तमरहस्यमसावगासीः ।
संसेव्य वेंकटपतेऽत्र तदर्थदर्शि
हस्तेंगितं तव किमप्यभिधित्सुरस्मि ॥ २०२ ॥

वाचामगोचरमनन्त पदाब्जयोस्ते
वेदेषु वैभवमशक्ततमेषु वक्तुम् ।
का नाम मादृशमहाजडदुष्टवाचाम्
कार्ये वृषाचलपते ऽत्र कथा प्रवृत्तौ ॥ २०३ ॥

आशावशेन बहुधा विरचय्य कर्मा-
ण्याशाधिपा मदकलेषु मतङ्गजेषु ।
न्यस्तासना इह पतन्ति जनाः! फलं तत्
नित्यं लभध्वमिति वक्षि करेण किं त्वम् ॥ २०४ ॥

दिव्यस्समस्त्यकृतकस्तमसः परस्ता-
दन्यस्स कश्चिदिति किन्नु मुधाऽभिमत्या ।
भक्तैः प्रपत्तृभिरपि त्वपुनर्गतीदं
प्राप्यं परं पदमिति प्रणयिन् ब्रवीषि ॥ २०५ ॥

क्षेत्रं महिष्ठमिदमादिवराहदेव-
कारुण्यकन्दलकटाक्षविनष्टकष्टम् ।
दत्ते त्रिवर्गमपवर्गमपीह तस्मात्
वस्तव्यमित्युपदिशस्युचितं रमेश ॥ २०६ ॥

आरुह्य सप्त तव सेवनकांक्षयाऽद्रीन्
आगच्छतः करुणया कमलेश पश्यन् ।
अत्रैव तिष्ठत मदद्भुतदिव्यरूप-
दृष्टिप्रनष्टदुरिता इति किं ब्रवीषि ॥ २०७ ॥

काकासुरेण कृतघोरविचेष्टितेन
काले जगत्त्रयपरिभ्रमणं विधाय ।
यस्मिन्पदे निपतितं शरणार्थिना प्राक्
एतत्तदाश्रयत शीघ्रमिति ब्रवीषि ॥ २०८ ॥

सन्ति प्रलोभनपराः फलमल्पमेव
दक्षाः प्रदातुमधरोत्तरमाशु देवाः ।
सर्वत्र तत्र भविनां न सुखावकाशः
तन्मे पदं शरणमाश्रयतेति वक्षि ॥ २०९ ॥

ये नाम केचन भवादृशवाञ्छितार्थ-
दोहप्रभावभरिताः प्रथितास्त्रिलोक्याम् ।
तेऽप्येतदंघ्रिसरसीरुहपूजनेन
प्राप्ताः प्रभुत्वमिति किन्नु हरे ब्रवीषि ॥ २०९ ॥

कामं भवेद्विविधनश्वरपूरुषार्थ-
लिप्साकुलं परवशं ललितं मनो वः ।
तत्तादृशं सकलमप्यधिकं लभेध्व-
मेतत्पदाम्बुजमुपाय इति ब्रवीषि ॥ २१० ॥

अर्थ्यं फलं सकलमप्यचिरेण दातुम्
अर्चामिमामुपगतोऽस्मि दयैकरूपाम् ।
कर्तव्यमप्यतिलघु प्रणिपातरूप-
मेतत्पदाब्ज इति देव हितं ब्रवीषि ॥ २११ ॥

व्याजेन केनचिदशेषमपीश्वर त्व-
मानाय्य लोकमनुकम्पिकटाक्षितस्सन् ।
अन्यद्विमुञ्चत फलं सकलं फलं वः
पादाब्जमेव मम नित्यमिति ब्रवीषि ॥ २१२ ॥

देवी दयेव दयिता हृदयं श्रिता सा
नित्याश्च केचन शुभायुधभूषणाद्यैः ।
रूपैर्यथोचितमवाप्तमदङ्गभागाः
तद्वः कृते पदमिदन्त्विति वक्षि सद्भ्यः ॥ २१३ ॥

मा नाम भूद्भयमुपाश्रयतां मनाग-
प्यहाय ते स्वयमिदं मम पादपद्मम् ।
ये वो भयानकमताः, मम हेतिभीताः
प्राप्स्यन्ति जीवितुमिति प्रथयस्यनन्त ॥ २१४ ॥

कामैकभोगविवशांस्त्रिदशानुपेत्य
तेषां पशूभवितुमिच्छथ हन्त कस्मात् ।
तस्माद्दूरं विविधसञ्चरणार्हभूमा-
वत्रैव वस्तुमिति बोधयसि प्रभो त्वम् ॥ २१५ ॥

आराधनेषु विविधेष्वधिवेदमुक्ते-
ष्वेतत्पदाब्जयजनं परमस्ति सन्तः ।
आराधनं परतरं त्विदमाश्रितानां-
मित्यादरेण वृषशैलमणे ब्रवीषि ॥ २१६ ॥

एषा विभूतिरियतीदमुपर्यसौ मे
नित्या त्रिपादिति करेण परेण चोक्त्वा ।
संभ्रम्यमाणमिह भव्यजगन्मय त्वं
लोकं निनीषुरवलोकयसे पदं ते ॥ २१७ ॥

अत्युच्छ्रितः परित एष धराधरेन्द्रः
पादेन पश्यत मयैवमधःकृतोऽत्र ।
इत्थं भवद्वृजिनराशिमधो विदध्या-
मातः पदं प्रणमतेति वदस्यनन्त ॥ २१८ ॥

गृह्णन्ति येऽत्र कुसुमानि कृतेषु साक्षा-
दभ्यर्चनेषु चरणैरमराः महान्तः ।
क्षिप्तानि तेत्विह वहन्ति शिरोभिरेना-
न्यर्च्य पदं तदिदमित्यधिदेव वक्षि ॥ २१९ ॥

त्रैविक्रमश्चरण एष जगद्व्यधात्प्राक्
दब्जातपत्रमुखचिह्नविशिष्टशोभम् ।
एकातपत्रवहवज्रधरादिभाव-
लिप्सा यदि प्रणमतेति वदस्यनन्त ॥ २२० ॥

स्थानात्सुदूरमवतीर्णवतस्ततस्ते
    जङ्घान्तपादयुगलश्रमयापनाय ।
भक्तान्नियोजयसि, यस्य तवाद्भुतस्य
    प्रेक्षालवप्रशमितश्रम एष लोकः ॥ २२१ ॥

भक्तव्रजं वृषगिरीन्द्र विमोहनं त्वां
    स्त्रीभावतस्त्वनुबुभूषुमनुग्रहीतुम् ।
प्राङ्मैथिलीपरिणयात्कृतगौतमस्त्री-
    रूपं दृषद्यमल लम्भयसेऽङ्घ्रिरेणुम् ॥ २२२ ॥

सा पादुकापि पदपङ्कजधारणात्प्राक्
    साकेतराजपदमुत्तममध्यतिष्ठत् ।
तस्मादिदं शिरसि धारयतां करस्थः
    क्षेमस्स्योग इति वक्षि वृषाचलेन्द्र ॥ २२३ ॥

मद्दिव्यशाखचरणैकपरायणत्वा
    च्छाखेति वीक्ष्य चरणेत्यपि च प्रसिद्धिम् ।
वेदस्स मां गिरिवपुर्वहतीह भक्त्ये-
    त्येवं सुपर्णगिरिशृंगमणे ब्रवीषि ॥ २२४ ॥

सत्यादिलोकनिलयांस्तव सेवनार्थे
    वैकुण्ठलोकगमनोद्यमिनस्सुरांस्त्वम् ।
अत्रागतोऽसि वृषशैल इति ब्रुवाणो
    वित्रासितासुर समाह्वयसीति मन्ये ॥ २२५ ॥

ज्ञानात्मके च भुवने जलधेश्च मध्ये
    मान्येषु ते निगमराजशिरस्सु नित्यम् ।
तुल्यं श्रियःकमन निस्स्वपरार्थबुद्धि-
    ष्वप्याविभातमुपदर्शयसेंऽघ्रिपद्मम् ॥ २२६ ॥

संसारवारिधिरयं भवतामगाधो
जङ्घामितं जलमिवास्ति सुखेन लंघ्यः ।
मत्पादपद्मयुगलप्रणिपातमात्रा-
दित्यादरेण वदसीव वृषाद्रिनाथ ॥ २२७ ॥

एवंविधानि विविधानि विबोधयंस्त्वं
विश्वं जनं निजपदाम्बुजसेवनेन ।
धन्यं तनोषि दयया वृषशैलशृंगे
नित्यं स्थितोऽत्र निरपायरमानिवास ॥ २२८ ॥

(इति पाणिमुद्रास्तवः)

नाथ श्रियो नळिनसुन्दरमाश्रयंस्ते
पादं पवित्रमपनीतसमस्तखेदः ।
सार्वज्ञ्यरम्यसकलाद्भुतशेषवृत्ति-
धन्यो बुभूषति दयाम्बुनिधे ममाऽऽत्मा ॥ २२९ ॥

नाथस्स एष नरकच्छिदपारशक्ति-
र्नाकस्य पृष्ठ इव नः प्रकटे प्रकृष्टे ।
नारायणाचल इह स्वयमाविरात्मा
भूमा रमासहचरः स्वगुणैस्समिन्धे ॥ २३० ॥

एष श्रिया सह हरिश्शुभदिव्यमूर्ति-
श्श्रेयो जनस्य सकलस्य विधित्सुरस्मिन् ।
शेषाचले जयति वेंकटनाथनामा
किं भो जनास्तदितरत्र भजध्वमेनम् ॥ २३१ ॥

ये नाम केचन रमेश समेश कर्म-
वैचित्र्यतः कलितबाह्यकुदृष्टिपक्षाः ।

तेपि त्वदीयमनघं विभवं समीक्ष्य
    वश्या भवन्ति तव करसदृशस्ततोऽस्तु ॥ २३२ ॥

त्वामद्वितीयमखिलाश्श्रुतयो गृणन्ति
    श्रीमन् सदैव रमयापि च सद्वितीयम् ।
त्वद्भ्रमदर्शनसुखाम्बुनिधौ निमग्नाः
    नैवान्यदम्बुजविलोचन लोकयन्ति ॥ २३३ ॥

हा हा निमेतदधरोत्तरमद्य लोक-
    स्सम्प्रेष्यमान इति सात्त्विकसंघवादः ।
सर्वज्ञ भावि परिशीलयतः कलौ ते
    साधुत्वबुद्धिरिह चेत्, न रमेश भीर्मे ॥ २३४ ॥

शक्तिस्तवास्त्यनवधिर्हि यथा
    श्रीकान्त सन्त्यनवधीनि ममप्यघानि ।
सर्वाधिकस्य तव साम्यमिदं न युक्तं
    तत्त्वं विचिन्त्य दययोचितमत्र कुर्याः ॥ २३५ ॥

आमञ्जुनूपुरमहामकुटं भवन्तम्
    आस्थापरेण मनसा च दृशा विलोक्य ।
आनन्दसागरनिमज्जनभाग्यधन्याः
    मान्याः श्रियः कमन सन्तु मयि प्रसन्नाः ॥ २३६ ॥

सा सर्वलोकजननी सकलार्तिहन्त्री
    सामादिभिस्त्वयि दयामभिवर्धयन्ती ।
त्वय्येकतामुपगता लसतीह यैषा
    त्वञ्च श्रियो निलय नश्शरणं भवेतम् ॥ २३७ ॥

सर्वान्तरात्मभवनं सकलेषु तुल्यां
    वृत्तिं सदैव रमयापि च साहितीं ते ।

## LIST OF SRI VENKATESVARA ORIENTAL INSTITUTE PUBLICATIONS

| *Sri Venkatesvara Oriental Series* :— | Rs. | A. | P. |
|---|---|---|---|
| 1. **Sri Venkatesvara Kavya Kalapa.** Ed. by Sri D. T. Tatacharya ... | 4 | 0 | 0 |
| 2. **History of Tirupati,** Vol. II by Dr. S. Krishnaswami Aiyangar | 3 | 0 | 0 |
| 3. **A Glossary of Indian Philosophical Terms** by Sri C. V. Sankara Rao ... | 1 | [illegible] | 0 |
| 4. **Psychology** (in Telugu) by Dr. K.C. Varadachari. | 2 | [illegible] | [illegible] |
| 5. **Isavasyopanishad Bhashya,** of Venkatanatha Ed. with English Translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya | 2 | [illegible] | 0 |
| 6. **Samurtarchanadhikarana (Atri Samhita)** Ed. by Sri P. Raghunatha Chakravarti Bhattacharya and Sri M. Ramakrishna Kavi | 8 | 0 | [illegible] |
| 7. **Suvarnasaptati,** Ed. by Sri N. Aiyaswami [illegible] | [illegible] | [illegible] | 0 |
| 8. **Kenopanishad Bhashya** of Rangaramanuja Ed. with English Translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya | 2 | [illegible] | 0 |
| 9. **Tirukkural-Kamattuppal** with two old Commentaries Ed. by Sri T. P. Palaniappa Pillai ... | 4 | [illegible] | [illegible] |
| 10. **Sri Venkatesvara Vachanamulu,** Ed. by Sri V. Prabhakara Sastri ... | 1 | 8 | [illegible] |
| 11. **Sringara Sankirthanamulu** by Tallapaka Annamacharyulu. IV Volume of Tallapaka Works Ed. by V. Prabhakara Sastry ... | 2 | [illegible] | 0 |
| 12. **Kasyapa Jnanakanda (Kasyapa Samhita)** Ed. by Sri R. Parthasarathi Battachar ... | 5 | 0 | 0 |
| 13. **Andhra Kuvalayanandamu** by Ubhaya Bhasha Pravina K. Subramanya Sastri .. | 3 | 12 | 0 |
| 14. **Tirukkural-Porutpal** with the commentaries of Kalingar and Parimelalagar Edited by Sri T. P. Palaniappa Pillai .. | 4 | 0 | 0 |
| 15. **Kathopanishad Bhashya** of Rangaramanuja Ed. with English Translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya ... | 3 | 12 | 0 |
| 16. **Sri Venkatesvara Laghu Kritulu,** Ed. by Sri V. Prabhakara Sastri ... | 1 | 8 | 0 |

| *Sri Venkatesvara Oriental Institute Studies* : | Rs. | A. | P. |
|---|---|---|---|
| 1. **Theory of Knowledge in the Philosophy of Sri Ramanuja** by Dr. K. C. Varadachari .. | 3 | 0 | 0 |
| 2. **Rupakaparisuddhi** by Sri D. T. Tatacharya ... | 2 | 0 | 0 |

*Copies can be had of* :—

THE DIRECTOR

S. V. ORIENTAL INSTITUTE,

श्रीशैलनाथ सहितं रमया च भूम्या
  दासस्समीक्ष्य च विनम्य च धन्य एषः ॥ २४४ ॥

सुस्निग्धवृत्तरुचिरस्फटिकावदात-
  स्थूणोपशोभिनि विचित्रविमानमान्ये ।
विभ्राजमानशुभवैद्युतदीपङ्क्तौ
  स्वज्योतिषा स्तव इहाऽद्रिपते विभासि ॥ २४५ ॥

श्रीमन् वृषाचलवराञ्चलवल्लभ त्वा-
  माश्रित्य सन्ततभवत्पदपद्मसक्तः ।
पापादपायनिचयान्निरयाच्च सम्य-
  गात्मानमात्मजनमप्यवितुं प्रयाचे ॥ २४६ ॥

सर्वज्ञ ते न विदितं किमिदं मनो मे
  सर्वेषु शक्त न कुतस्स्तवने नियोज्ये ।
मुक्तादिनेव किमितोऽस्ति मया फलं ते
  बद्धो यदसि भगवन् स परस्समाधिः ॥ २४७ ॥

आशावशाद्वृषगिरीश तथानुरूप्यात्
  अज्ञातशक्तिरहमीडितुमध्यवस्यन् ।
अन्यत्र कालमखिलं सरसं क्षिपन् यत्
  त्वां प्रस्मरामि तदिदं भगवन् क्षमस्व ॥ २४८ ॥

गीतोपदेशनिरतः पवनात्मजात-
  केतोः पृथातनुभुवो रणदेशमध्ये ।
व्याख्याङ्कशोभिकरपद्मदलस्स नूनं
  गोविन्दराज इह वेङ्कटवल्लभ त्वम् ॥ २४९ ॥

त्वय्येव मे मतिरियं नियता विभातु
  त्वत्पादपङ्कजधनेन च धन्यता स्यात् ।

त्वत्सुन्दराङ्गपरिचिन्तनलब्धभूमा
त्वत्किङ्करः कमललोचन वर्तिषीय ॥ २५० ॥

श्रीवेङ्कटाद्रिसदृशं न हि किञ्चिदस्ति
श्रीवेङ्कटेशसदृशो न च जातु कश्चित् ।
तत्पादपङ्कजपरागपवित्रितेन
देहेन तत्परिसरे सुकृती भवानि ॥ २५१ ॥

वज्रायुधादिविबुधव्रजवन्द्यमानं
वज्रैकभूषणविभूषितमुज्ज्वलं त्वाम् ।
वज्रात्कठोरतरमप्यतिमूर्खचित्त-
माशु द्रवं रचयितुं प्रभुमाश्रितोऽस्मि ॥ २५२ ॥

किं नाम चिन्तयसि दासजने न जाने
देहान्तकालपरमावधि कार्यमन्त्र ।
शास्त्रश्रमेण विकलः कुत एव भक्तः
प्रत्यक्षितं स्वपरभावि कुतस्तरां स्यात् ॥ २५३ ॥

आलोडितानि निखिलान्यपि यैस्तु शास्त्रा-
ण्याचार्यतल्लजमुखैरवधारितं त्वाम् ।
नारायण श्रितवृषाचलतुङ्गशृङ्गं
नाथं नमामि नलिनाक्षमुदारमाद्यम् ॥ २५४ ॥

पादारविन्दयुगले बलवन्मनो मे
निक्षिप्तमच्युत निरस्तसमस्तदोषे ।
तत्रैव मञ्जुलमनोहरदिव्यरुक्म-
मञ्जीरशोभिनि मधुस्वदनं विधत्ते ॥ २५५ ॥

नाथ श्रियो नयनयोर्युगलं मदीयं
निश्शेषमङ्गलनिधिं निधिमाश्रितानाम् ।

आपादचूडमनुभूय भवन्तमेति
 साहस्रनेत्रमुखसेवित ! नैव तृप्तिम् ॥ २५६ ॥

रौक्मेण भव्यमहसा मकुटेन मान्यं
 चक्रेण ते कमललोचन कम्बुना च ।
नित्यं श्रिया विहितशोभभुजान्तरालं
 रूपं प्रभो वृषगिरीश विभातु चित्ते ॥ २५७ ॥

सा मे समस्तजगतीभवभाग्यभूमा
 कामातिशायिकमनीयगुणाभिरामा ।
श्यामा रमारमण दिव्यसुवर्णदामा
 क्षेमाय मूर्तिरियमस्तु वृषाद्रिधामा ॥ २५८ ॥

सिंहाचलेश्वर दिशो विदिशश्च देव-
 सिंहं समाश्रयितुमेत्य जना भवन्तम् ।
सिंहाद्भयादिव मृगैर्वृजिनैर्विमुक्ताः
 सिंहासनेषु महितेषु सुखं जयन्ति ॥ २५९ ॥

नागा हि रत्नशिरसोऽर्थपरायणास्ते
 नागेशपर्वतनिवास तथाऽवनिस्थाः ।
धर्मे रता दिविभवा अपि काममग्नाः
 त्रैवर्गिकेतरदिमां गमय त्रिलोकीम् ॥ २६० ॥

मध्येऽवनेरिह तथा पयसां निधाने
 व्योमन्यपेततमसि स्फुटरश्मिबिम्बे ।
नित्यं विभान्तमनघं मरुतामधीशं
 त्वां सर्वभूतनिलयं कलयेऽञ्जनेश ॥ २६१ ॥

वेङ्कटमहीध्रवरशेखरमिह त्वां
 याचति यदेष इदमस्ति न न युक्तम् ।

दीन इह निर्गतिरलब्धफल एष
त्वं तु विभुरद्भुतमहागुणनिधिश्च ॥ २६२ ॥

वेङ्कटाधीश ते वैभवं किंविधं
केन वा शक्यते ज्ञातुमत्यद्भुतम् ।
क्षेमभाजं जनं मां भवान् भूयसा
वीक्षितेन स्वयं देव नित्यं कुरु ॥ २६३ ॥

दयासिन्धुः श्रीमान् दलितनिखिलारातिरधिकं
श्रियं नः पुष्णन् यश्शरणमसि कृत्स्नस्य जगतः ।
प्रभुत्वं सौलभ्यं परमपुरुषत्वं तव हरे
कदा वा को वा स्याद्वदितुमिह शक्तः कियदपि ॥ २६४ ॥

असामान्यं मान्यं श्रुतिवचनसौलभ्यमधुरं
प्रभुत्वं श्लाघन्ते परमपुरुष ब्रह्मनिरताः ।
अलीकस्तोत्राणामविषयमनन्ताद्भुतगुणं
तदेकस्थानं त्वां वृषगिरिपते यामि शरणम् ॥ २६५ ॥

अस्मादृशामयमनारतदुष्कृतानाम्
अव्याजवत्सलतया शमिताञ्जनस्सन् ।
शेषाचलेश भगवन् भवसिन्धुपोतः
पारे परत्र तनुषे परमं च साम्यम् ॥ २६६ ॥

प्रपद्येऽहं सद्यः पदयुगमविद्यैकनिलयो
निषद्या दोषाणां निरवधिगुणग्राममनघम् ।
मृगेन्द्रक्षोणीभृन्महितशिखरोद्यानविहृति-
प्रियश्रीवैवश्यक्षतदुरितदृष्टेस्तव हरे ॥ २६७ ॥

सूरीन्द्रा अपि नाथयामुनमुनिश्रीपूर्णरामानुज-
श्रुत्यन्तार्यमुखास्तथा मम गुरुस्त्रय्यन्तरामानुजः ।

शिष्यस्तस्य च रङ्गलक्ष्मणमुनिर्यं श्रीनिधिं संश्रिताः
सोऽयं सर्वगुरुस्तुतोऽस्तु नियतं श्रेयःप्रदो नः प्रभुः ॥ २६८ ॥

यदायत्तं विश्वं, यदुपरि न किञ्चित् यत इदं
निलीनं यत्रेदं यदिदमिति चाम्नायविदितम् ।
भजे तन्निर्दोषं निरवधिकनिस्संख्यविभवं
प्रबुद्धैराराध्यं प्रपदनवशं श्रीश्रियमिह ॥ २६९ ॥

मनो मे मा किञ्चिन्मधुमथन मृद्गातु मदनो
मृडे वाऽन्यस्मिन् वा मम भवतु मा रक्षकमतिः ।
अशेषेशे शेषाचलनिलयिनि श्रीपरिबृढे
मुकुन्दे भावो मे भवतु मुनिलोकैकसुगमः ॥ २७० ॥

महत्यानन्देऽस्मिन्महितगुणसिन्धौ स्फुरति तं
विहायायं लोकः किमिति विषये हन्त सजति ।
क्षुधश्चोदन्यायाः प्रशमनमिमं ध्यायत जनाः
शरीरे जीर्णेऽस्मिन्नहि भवति तातो न जननी ॥ २७१ ॥

त्वयि सति खगराजक्ष्माधराधीश लक्ष्मी-
परीबृढ सकलन्नः क्षेममातन्वति द्राक् ।
किमिति कलयतीदं मानसं त्वद्विभिन्नं
भवसि च परमस्त्वं प्रापकस्सन् फलञ्च ॥ २७२ ॥

नियन्ता व्याप्यं यन्निखिलमपि लोकेषु भवता
तदेष स्वाच्छन्द्यं विजहदिह जीवो नियतधीः ।
उपेक्ष्यैतद्ग्राह्यं निपुणमथ सर्वान्तरमिमं
भवन्तं भुञ्जीत श्रितरम दुराशाविरहितः ॥ २७३ ॥

तत्तद्वर्णाश्रमसमुचितं कर्म यस्सात्विकस्सन्
यावज्जीवं त्वयि भगवति श्रीश भक्तो विदध्यात् ।

अर्वाचीनैर्न खलु स पुमान् लिप्यते लब्धशेष-
प्रख्यक्षोणीधरशिखरसंवास कारुण्यतस्ते ॥ २७४ ॥

पादाम्भोजयुगे प्रणम्य निहितं जङ्घागतं मानसं
जानुद्वन्द्वमुपेयिवत् परिगतश्रेष्ठोरु लब्ध्वा कटिम् ।
वक्षः श्रीमणिशोभि संश्रितमथो लोलं भुजेषु क्रमा-
द्वक्त्राब्जं समवाप्य कृत्स्नमचिरादालम्बते श्रीपते ॥ २७५ ॥

इत्थं निस्तुलतीर्थसप्तशिखरिप्रख्यातशृङ्गाटवी-
कुञ्जैकान्तरमाविहारपरमानन्दं परं पूरुषम् ।
श्रीवत्सान्वयवीरराघवकविः कालेषु यै र्भक्तिमान्
अस्तौषीदिह तानि संकलितवान्पद्यानि सोऽयं स्वयम् ॥ २७६ ॥

इति तर्कार्णवेन पण्डितरत्नेन शिरोमणिना उत्तमूर् ति. विरराघवाचार्येण विरचितं
श्रीपद्मावतीस्तोत्रसहितं श्रीवेंकटेशस्तोत्रं संपूर्णम् ॥

॥ शुभमस्तु ॥

---

**श्रीमान्वेंकटनाथार्यः कवितार्किककेसरी ।**
**वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥**

श्रीः

## दयाशतकम्



प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया ।
इक्षुसारस्रवन्त्येव यन्मूर्त्या शर्करायितम् ॥ १ ॥

विगाहे तीर्थबहुलां शीतलां गुरुसन्ततिम् ।
श्रीनिवासदयाम्भोधिपरीवाहपरम्पराम् ॥ २ ॥

कृतिनः कमलावासकारुण्यैकान्तिनो भजे ।
धत्ते यत्सूक्तिरूपेण त्रिवेदी सर्वयोग्यताम् ॥ ३ ॥

पराशरमुखान्वन्दे भगीरथनये स्थितान् ।
कमलाकान्तकारुण्यगङ्गाप्लावितमद्विधान् ॥ ४ ॥

अशेषविघ्नशमनमनीकेश्वरमाश्रये ।
श्रीमतः करुणाम्भोधौ शिक्षास्रोत इवोत्थितम् ॥ ५ ॥

समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम् ।
श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम् ॥ ६ ॥

वन्दे वृषगिरीशस्य महिषीं विश्वधारिणीम् ।
तत्कृपाप्रतिघातानां क्षमया वारणं यया ॥ ७ ॥

निशामयतु मां नीला यद्भोगपटलैर्ध्रुवम् ।
भावितं श्रीनिवासस्य भक्तदोषेष्वदर्शनम् ॥ ८ ॥

कमप्यनवधिं वन्दे करुणावरुणालयम् ।
वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम् ॥ ९ ॥

अकिञ्चननिधिं सूतिमपवर्गत्रिवर्गयोः ।
अञ्जनाद्रीश्वरदयामभिष्टौमि निरञ्जनाम् ॥ १० ॥

अनुचरशक्त्यादिगुणामग्रेसरबोधविरचितालोकाम् ।
स्वाधीनवृषगिरीशां स्वयं प्रभूतां प्रमाणयामि दयाम् ॥ ११ ॥

अपि निखिललोकसुचरितमुष्टिंधयदुरितमूर्च्छनाजुष्टम् ।
सञ्जीवयतु दये मामञ्जनगिरिनाथरञ्जनी भवती ॥ १२ ॥

भगवति दये भवत्या वृषगिरिनाथे समाप्लुते तुङ्गे ।
अप्रतिघमज्जनानां हस्तालम्बो मदागसां मृग्यः ॥ १३ ॥

कृपणजनकल्पलतिकां कृतापराधस्य निष्क्रियामाद्याम् ।
वृषगिरिनाथदये त्वां विदन्ति संसारतारिणीं विबुधाः ॥ १४ ॥

वृषगिरिगृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः ।
दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः ॥ १५ ॥

आसृष्टि सन्ततानामपराधानां निरोधिनीं जगतः ।
पद्मासहायकरुणे प्रतिसञ्चरकेलिमाचरसि ॥ १६ ॥

अचिदविशिष्टान्प्रलये जन्तूनवलोक्य जातनिर्वेदा ।
करणकलेवरयोगं वितरसि वृषशैलनाथकरुणे त्वम् ॥ १७ ॥

अनुगुणदशार्पितेन श्रीधरकरुणे समाहितस्नेहा ।
शमयसि तमः प्रजानां शास्त्रमयेन स्थिरप्रदीपेन ॥ १८ ॥

रूढा वृषाचलपतेः पादे मुखकान्तिपत्रलच्छाया ।
करुणे सुखयसि विनतान्कटाक्षविटपैः करापचेयफलैः ॥ १९ ॥

नयने वृषाचलेन्दोस्तारामैत्रीं दधानया करुणे ।
दृष्टस्त्वयैव जनिमानपवर्गमकृष्टपच्यमनुभवति ॥ २० ॥

समयोपनतैस्तव प्रवाहै-
रनुकम्पे कृतसंप्लवा धरित्री ।
शरणागतसस्यमालिनीयं
वृषशैलेशकृषीवलं धिनोति ॥ २१ ॥

कलशोदधिसम्पदो भवत्याः
करुणे सन्मतिमन्थसंस्कृतायाः ।
अमृतांशमवैमि दिव्यदेहं
मृतसञ्जीवनमञ्जनाचलेन्दोः ॥ २२ ।

जलधेरिव शीतता दये त्वं
वृषशैलाधिपतेस्स्वभावभूता ।
प्रलयारभटीनटीं तदीक्षां
प्रसभं ग्राहयसि प्रसत्तिलास्यम् ॥ २३ ॥

प्रणतप्रतिकूलमूलघाती
प्रतिघः कोपि वृषाचलेश्वरस्य ।
कलमे यवसापचायनीत्या
करुणे किङ्करतां तवोपयाति ॥ २४ ॥

अबहिष्कृतनिग्रहान्विदन्तः
कमलाकान्तगुणान्स्वतन्त्रतादीन् ।
अविकल्पमनुग्रहं दुहानां
भवतीमेव दये भजन्ति सन्तः ॥ २५ ॥

कमलानिलयस्त्वया दयालुः
करुणे निष्करुणा निरूपणे त्वम् ।
अत एव हि तावकाश्रितानां
दुरितानां भवति त्वदेव भीतिः ॥ २६ ॥

अतिलङ्घितशासनेष्वभीक्ष्णं
वृषशैलाधिपतिर्विजृम्भितोष्मा ।
पुनरेव दये क्षमानिदानै-
र्भवतीमाद्रियते भवत्यधीनैः ॥ २७ ॥

करुणे दुरितेषु मामकेषु
प्रतिकारान्तरदुर्जयेषु खिन्नः ।
कवचायितया त्वयैव शार्ङ्गी
विजयस्थानमुपाश्रितो वृषाद्रिम् ॥ २८ ॥

मयि तिष्ठति दुष्कृतां प्रधाने
मितदोषानितरान्विचिन्वती त्वम् ।
अपराधगणैरपूर्णकुक्षिः
कमलाकान्तदये कथं भवित्री ॥ २९ ॥

अहमस्म्यपराधचक्रवर्ती
करुणे त्वं च गुणेषु सार्वभौमी ।
विदुषी स्थितिमीदृशीं स्वयं मां
वृषशैलेश्वरपादसात्कुरु त्वम् ॥ ३० ॥

अशिथिलकरणेऽस्मिन्नक्षतश्वासवृत्तौ
वपुषि गमनयोग्ये वासमासादयेयम् ।
वृषगिरिकटकेषु व्यञ्जयत्सु प्रतीतै-
र्मधुमथनदये त्वां वारिधाराविशेषैः ॥ ३१ ॥

अविदितनिजयोगक्षेममात्मानभिज्ञं
गुणलवरहितं मां गोप्तुकामा दये त्वम् ।
परवति चतुरैस्ते विभ्रमैः श्रीनिवासे
बहुमतिमनपायां विन्दसि श्रीधरण्योः ॥ ३२ ॥

फलवितरणदक्षं पक्षपातानभिज्ञं
प्रगुणमनुविधेयं प्राप्य पद्मासहायम् ।
महति गुणसमाजे मानपूर्वं दये त्वं
प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥ ३३ ॥

अनुभवितुमघौघं नालमागामिकालः
प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम् ।
स्वयमिति हि दये त्वं स्वीकृतश्रीनिवासा
शिथिलितभवभीतिः श्रेयसे जायसे नः ॥ ३४ ॥

अवतरणविशेषैरात्मलीलापदेशै-
रवमतिमनुकम्पे मन्दचित्तेषु विन्दन् ।
वृषभशिखरिनाथस्त्वन्निदेशेन नूनं
भजति शरणभाजां भाविनो जन्मभेदान् ॥ ३५ ॥

परहितमनुकम्पे भावयन्त्यां भवत्यां
स्थिरमनुपधि हार्दं श्रीनिवासो दधानः ।
ललितरुचिषु लक्ष्मीभूमिनीलासु नूनं
प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या ॥ ३६ ॥

वृषगिरिसविधेषु व्याजतो वासभाजां
दुरितकलुषितानां दूयमाना दये त्वम् ।
करणविलयकाले कान्दिशीकस्मृतीनां
स्मरयसि बहुलीलं माधवं सावधाना ॥ ३७ ॥

दिशिदिशि गतिविद्भिर्देशिकैर्नीयमाना
स्थिरतरमनुकम्पे स्त्यानलग्ना गुणैस्त्वम् ।
परिगतवृषशैलं पारमारोपयन्ती
भवजलधिगतानां पोतपात्री भवित्री ॥ ३८ ॥

परिमितफलसङ्गात्प्राणिनः किंपचाना
निगमविपणिमध्ये नित्यमुक्तानुषक्तम् ।
प्रसदनमनुकम्पे प्राप्तवत्या भवत्या
वृषगिरिहरिनीलं व्यञ्जितं निर्विशन्ति ॥ ३९ ॥

त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे
जगति गतिमिहान्यां देवि संमन्यते यः ।
स खलु विबुधसिन्धौ सन्निकर्षे वहन्त्यां
शमयति मृगतृष्णावीचिकाभिः पिपासाम् ॥ ४० ॥

आज्ञां ख्यातिं धनमनुचरानाधिराज्यादिकं वा
काले दृष्ट्वा कमलवसतेरप्यकिञ्चित्कराणि ।
पद्माक्रान्तं प्रणिहितवतीं पालनेऽनन्यसाध्ये
साराभिज्ञा जगति कृतिनस्संश्रयन्ते दये त्वाम् ॥ ४१ ॥

प्राजपत्यप्रभृतिविभवं प्रेक्ष्य पर्यायदुःखं
जन्माकाङ्क्षन्वृषगिरिवने जग्मुषां तस्थुषां वा ।
आशासानाः कतिचन विभोस्त्वत्परिष्वङ्गधन्यै-
रङ्गीकारं क्षणमपि दये हार्दतुङ्गैरपाङ्गैः ॥ ४२ ॥

नाभीपद्मस्फुरणसुभगा नव्यनीलोत्पलाभा
क्रीडाशैलं कमपि करुणे वृण्वती वेङ्कटाख्यम् ।
शीता नित्यं प्रसदनवती श्रद्धधानावगाह्या
दिव्या काचिज्जयति महती दीर्घिका तावकीना ॥ ४३ ॥

यस्मिन्दृष्टे तदितरसुखैर्गम्यते गोष्पदत्वं
सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्तमानन्दसिन्धुम् ।
त्वत्स्वीकारात्तमिह कृतिनस्सूरिबृन्दानुभाव्यं
नित्यापूर्वं निधिमिव दये निर्विशन्त्यञ्जनाद्रौ ॥ ४४ ॥

सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः
काले काले घनरसवती कालिकेवानुकम्पे ।
व्यक्तोन्मेषा मृगपतिगिरौ विश्वमाप्याययन्ती
शीलोपज्ञं क्षरति भवती शीतलं सद्गुणौघम् ॥ ४५ ॥

भीमे नित्यं भवजलनिधौ मज्जतां मानवाना-
मालम्बार्थं वृषगिरिपतिस्त्वन्निदेशात्प्रयुंक्ते ।
प्रज्ञासारं प्रकृतिमहता मूलभागेन जुष्टं
शाखाभेदैस्सुभगमनघं शाश्वतं शास्त्रपाणिम् ॥ ४६ ॥

विद्वत्सेवाकतकनिकषैर्वीतपङ्काशयानां
पद्माकान्तः प्रणयति दये दर्पणं ते स्वशास्त्रम् ।
लीलादक्षां त्वदनवसरे लालयन्विप्रलिप्सां
मायाशास्त्राण्यपि शमयितुं त्वत्प्रपन्नप्रतीपान् ॥ ४७ ॥

दैवात्प्राप्ते वृषगिरितटं देहिनि त्वन्निदाना-
त्स्वामिन्पाहीत्यवशवचने विन्दति स्वापमन्त्यम् ।
देवः श्रीमान् दिशति करुणे दृष्टिमिच्छंस्त्वदीया-
मुद्धातेन श्रुतिपरिषदामुत्तरेणाभिमुख्यम् ॥ ४८ ॥

श्रेयःसूतिं सकृदपि दये सम्मतां यस्सखीं ते
शीतोदारामलभत जनः श्रीनिवासस्य दृष्टिम् ।
देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन्
बन्धान्मुक्तो बलिभिरनघैः पूर्यते तत्प्रयुक्तैः ॥ ४९ ॥

दिव्यापाङ्गं दिशसि करुणे येषु सद्देशिकात्मा
क्षिप्रं प्राप्ता वृषगिरिपतिं क्षत्रबन्ध्वादयस्ते ।
विश्वाचार्या विधिशिवमुखास्स्वाधिकारोपरुद्धा
मन्ये माता जड इव सुते वत्सला मादृशे त्वम् ॥ ५० ॥

अतिकृपणोऽपि जन्तुरधिगम्य दये भवती-
मशिथिलधर्मसेतुपदवीं रुचिरामचिरात् ।
अमितमहोर्मिजालमतिलङ्घ्य भवाम्बुनिधिं
भवति वृषाचलेशपदपत्तननित्यधनी ॥ ५१ ॥

अभिमुखभावसंपदभिसंभविनां भविनां
क्वचिदुपलक्षिता क्वचिदभंगुरगूढगतिः ।
विमलरसावहा वृषगिरीशदये भवती
सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥ ५२ ॥

अपि करुणे जनस्य तरुणेन्दुविभूषणता-
मपि कमलासनत्वमपि धाम वृषाद्रिपतेः ।
तरतमतावशेन तनुते ननु ते विततिः
परहितवर्ष्मणा परिपचेलिमकेलिमती ॥ ५३ ॥

धृतभुवना दये त्रिविधगत्यनुकूलतरा
वृषगिरिनाथपादपरिरंभवती भवती ।
अविदितवैभवाऽपि सुरसिन्धुरिवातनुते
सकृदवगाहमानमपतापमपापमपि ॥ ५४ ॥

निगमसमाश्रिता निखिललोकसमृद्धिकरी
भजदघकूलमुद्रुजगतिः परितप्तहिता ।
प्रकटितहंसमत्स्यकमठाद्यवतारशता
विबुधसरिच्छ्रियं वृषगिरीशदये वहसि ॥ ५५ ॥

जगति मितंपचा त्वदितरा तु दये तरला
फलनियमोज्झिता भवति सन्तपनाय पुनः ।
त्वमिह निरङ्कुशप्रशकनादिविभूतिमती
वितरसि देहिनां निरवधिं वृषशैलनिधिम् ॥ ५६ ॥

सकरुणलौकिकप्रभुपरिग्रहनिग्रहयो-
र्नियतिमुपाधिचक्रपरिवृत्तिपरंपरया ।
वृषभमहीधरेशकरुणे वितरंगयतां
श्रुतिमितसंपदि त्वयि कथं भविता विशयः ॥ ५७ ॥

वृषगिरिकृष्णमेघजनितां जनितापहरां
त्वदभिमतिं सुवृत्तिमुपजीव्य निवृत्ततृषः ।
बहुषु जलाशयेषु बहुमानमपोह्य दये
न जहति सत्पथं जगति चातकवद्व्रतिनः ॥ ५८ ॥

त्वदुदयतूलिकाभिरमुना वृषशैलजुषा
स्थिरचरशिल्पिनैव परिकल्पितचित्रधियः ।
यतिपतियामुनप्रभृतयः प्रथयन्ति दये
जगति हितं न नस्त्वयि भरन्यसनादधिकम् ॥ ५९ ॥

मृदुहृदये दये मृदितकामहिते महिते
धृतविबुधे बुधेषु विततात्मधुरे मधुरे ।
वृषगिरिसार्वभौमदयिते मयि ते महतीं
भवुकनिधे निधेहि भवमूलहरां लहरीम् ॥ ६० ॥

अकूपारैरेकोदकसमयवैतण्डिकजवै-
रनिर्वाप्यां क्षिप्रं क्षपयितुमविद्याख्यबडबाम् ।
कृपे त्वं तत्तादृक्प्रथिमवृषपृथ्वीधरपति-
स्वरूपद्वैगुण्यद्विगुणनिजबिन्दुः प्रवहसि ॥ ६१ ॥

विवित्सावेतालीविगमपरिशुद्धेऽपि हृदये
पटुप्रत्याहारप्रभृतिपुटपाकप्रचकिताः ।
नमन्तस्त्वां नारायणशिखरिकूटस्थकरुणे
निरुद्धत्वद्द्रोहा नृपतिसुतनीतिं न जहति ॥ ६२ ॥

अनन्याधीनस्सन्भवति परतन्त्रः प्रणमतां
कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम् ।
पतिस्त्वत्पारार्थ्यं प्रथयति वृषक्ष्माधरपति-
र्व्यवस्थां वैयात्यादिति विघटयन्ती विहरसि ॥ ६३ ॥

अपां पत्युश्शत्रूनसहनमुनेर्धर्मनिगलं
कृपे काकस्यैकं हितमिति हिर्नास्ति स नयनम् ।
विलीनस्वातन्त्र्यो वृषगिरिपतिस्त्वद्विहृतिभि-
र्दिशत्येवं देवो जनितसुगतिं दण्डनगतिम् ॥ ६४ ॥

निषादानां नेता कपिकुलपतिः कापि शबरी
कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति ।
अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि
प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि ॥ ६५ ॥

त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निजपदे
वहन्मूर्तीरष्टौ विहरति मृडानीपरिबृढः ।
बिभर्ति स्वाराज्यं वृषशिखरिशृंगारिकरुणे
शुनासीरो देवासुरसमरनासीरसुभटः ॥ ६६ ॥

दये दुग्धोदन्वद्द्व्यतियुतसुधासिन्धुनयत-
स्त्वदाश्लेषान्नित्यं जनितमृतसंजीवनदशाः ।
स्वदन्ते दान्तेभ्यः श्रुतिवदनकर्पूरगुलिका
विषुण्वन्तश्चित्तं वृषशिखरिविश्वंभरगुणाः ॥ ६७ ॥

जगज्जन्मस्थेमप्रलयरचनाकेलिरसिको
विमुक्त्येकद्वारं विघटितकवाटं प्रणयिनाम् ।
इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे
विशुद्धानां वाचां वृषशिखरिनाथः स्तुतिपदम् ॥ ६८ ॥

कलिक्षोभोन्मीलत्क्षितिकलुषकूलंकषजवै-
रनुच्छेदैरेतैरवटतटवैषम्यरहितैः ।
प्रवाहैस्ते पद्मासहचरपरिष्कारिणि कृपे
विकल्पन्तेऽनल्पा वृषशिखरिणो निर्झरगुणाः ॥ ६९ ॥

खिलं चेतोवृत्तेः किमिदमिति विस्मेरभुवनं
कृपे सिंहक्ष्माभृत्कृतमुखचमत्कारकरणम् ।
भरन्त्यासच्छन्नप्रबलवृजिनप्राभृतभृतां
प्रतिप्रस्थानं ते श्रुतिनगरशृंगाटकजुषः ॥ ७० ॥

त्रिविधचिदचित्सत्तास्थेमप्रवृत्तिनियामिका
　　वृषगिरिविभोरिच्छा सा त्वं परैरपराहता ।
कृपणभरभृत्किंकुर्वाणप्रभूतगुणान्तरा
　　वहसि करुणे वैचक्षण्यं मदीक्षणसाहसे ॥ ७१ ॥

वृषगिरिपतेर्हृद्या विश्वावतारसहायिनी
　　क्षपितनिखिलावद्या देवि क्षमादिनिषेविता ।
भुवनजननी पुंसां भोगापवर्गविधायिनी
　　वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ॥ ७२ ॥

स्वयमुदयिनस्सिद्धाद्याविष्कृताश्च शुभालया
　　विविधविभवव्यूहावासाः परं च पदं विभोः ।
वृषगिरिमुखेष्वेतेष्विच्छावधि प्रतिलब्धये
　　दृढविनिहिता निश्रेणिस्त्वं दये निजपर्वभिः ॥ ७३ ॥

हितमिति जगद्दृष्ट्या क्लृप्तैरक्लृप्तफलान्तरै-
　　रमतिविहितैरन्यैर्धर्मायितैश्च यदृच्छया ।
परिणतबहुच्छद्मा पद्मासहायदये स्वयं
　　प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा ॥ ७४ ॥

अतिविधिशिवैरैश्वर्यात्मानुभूतिरसैर्जना-
　　नहृदयमिहोपच्छन्द्यैषामसंगदशार्थिनी ।
तृषितजनतातीर्थस्नानक्रमक्षपितैनसां
　　वितरसि दये वीतातङ्का वृषाद्रिपतेः पदम् ॥ ७५ ॥

वृषगिरिसुधासिन्धौ जन्तुर्दये निहितस्त्वया
　　भवभयपरीतापच्छित्त्यै भजन्नघमर्षणम् ।
मुषितकलुषो मुक्तेरग्रेसरैरभिपूर्यते
　　स्वयमुपनतैस्स्वात्मानन्दप्रभृत्यनुबन्धिभिः ॥ ७६ ॥

अनितरजुषामन्तर्मूलेऽप्यपायपरिप्लवे
कृतविदनघा विच्छिद्यैषां कृपे यमवश्यताम् ।
प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जितं
प्रतिविधिमुपादत्से सार्धं वृषाद्रिहितैषिणा ॥ ७७ ॥

क्षणविलयिनां शास्त्रार्थानां फलाय निवेशिते
पितृसुरगणे निर्वेशात्प्रागपि प्रलयं गते ।
अधिगतवृषक्ष्माभृन्नाथामकालवशंवदां
प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम् ॥ ७८ ॥

त्वदुपसदनादद्य श्वो वा महाप्रलयेऽपि वा
वितरति निजं पादाम्भोजं वृषाचलशेखरः ।
तदिह करुणे तत्तत्क्रीडातरङ्गपरम्परा-
तरतमतया जुष्टायास्ते दुरत्ययतां विदुः ॥ ७९ ॥

प्रणिहितधियां त्वत्संपृक्ते वृषाद्रिशिखामणौ
प्रसृमरसुधाधाराकारा प्रसीदति भावना ।
दृढमिति दये दत्तास्वादं विमुक्तिवलाहकं
निभृतगरुतो निध्यायन्ति स्थिराशयचातकाः ॥ ८० ॥

कृपे विगतवेलया कृतसमग्रपोषैस्त्वया
कलिज्वलनदुर्गते जगति कालमेघायितम् ।
वृषक्षितिधरादिषु स्थितिपदेषु सानुप्लवै-
र्वृषाद्रिपतिविग्रहैर्व्यपगताखिलावग्रहैः ॥ ८१ ॥

प्रसूय विविधं जगत्तदभिवृद्धये त्वं दये
समीक्षणविचिन्तनप्रभृतिभिस्स्वयं तादृशैः ।
विचित्रगुणचित्रितां विविधदोषवैदेशिकीं
वृषाचलपतेस्तनुं विशसि मत्स्यकूर्मादिकाम् ॥ ८२ ॥

युगान्तसमयोचितं भजति योगनिद्रारसं
वृषक्षितिभृदीश्वरे विहरणक्रमाज्जाग्रति ।
उदीर्णचतुरर्णवीकदनवेदिनीं मेदिनीं
समुद्धृतवती दये त्वदभिजुष्टया दंष्ट्रया ॥ ८३ ॥

सटापटलभीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटद्भ्रुकुटिकेऽपि वक्त्रे कृते ।
दये वृषगिरीशितुर्दनुजडिम्भदत्तस्तना
सरोजसदृशा दृशा समुदिताकृतिर्दृश्यसे ॥ ८४ ॥

प्रसक्तमधुना विधिप्रणिहितैः सपर्योदकैः
समस्तदुरितच्छिदा निगमगन्धिना त्वं दये ।
अशेषमविशेषतस्त्रिजगदञ्जनाद्रीशितु-
श्चराचरमचीकरश्चरणपङ्कजेनाङ्कितम् ॥ ८५ ॥

परश्वथतपोधनप्रथनसत्क्रतूपाकृत-
क्षितीश्वरपशुक्षरत्क्षतजकुङ्कुमस्थासकैः ।
वृषाचलदयालुना ननु विहर्तुमालिप्यथाः
निधाय हृदये दये निहतरक्षितानां हितम् ॥ ८६ ॥

कृपे कृतजगद्धिते कृपणजन्तुचिन्तामणे
रमासहचरं क्षितौ रघुधुरीणयन्त्या त्वया ।
व्यभज्यत सरित्पतिस्सकृदवेक्षणात्तत्क्षणा-
त्प्रकृष्टबहुपातकप्रशमहेतुना सेतुना ॥ ८७ ॥

कृपे परवतस्त्वया वृषगिरीशितुः क्रीडितं
जगद्धितमशेषतस्तदिदमित्थमर्थाप्यते ।
मदच्छलपरिच्युतप्रणतदुष्कृतप्रेक्षितै-
र्हतप्रबलदानवैर्हलधरस्य हेलाशतैः ॥ ८८ ॥

प्रभूतविबुधद्विषद्भरणखिन्नविश्वंभरा-
भरापनयनच्छलात्त्वमतार्य लक्ष्मीधरम् ।
निराकृतवती दये निगमसौधदीपश्रिया
विपश्चिदविगीतया जगति गीतयाऽन्धंतमः ॥ ८९ ॥

वृषाद्रिहयसादिनः प्रबलदोर्मरुत्प्रेंखित-
स्त्विषा स्फुटतटिद्गुणस्त्वदवसेकसंस्कारवान् ।
करिष्यति दये कलिप्रबलघर्मनिर्मूलनः
पुनः कृतयुगाङ्कुरं भुवि कृपाणधाराधरः ॥ ९० ॥

विश्वोपकारमिति नाम सदा दुहाना-
मद्यापि देवि भवतीमवधीरयन्तम् ।
नाथे निवेशय वृषाद्रिपतौ दये त्वं
न्यस्तस्वरक्षणभरं त्वयि मां त्वयैव ॥ ९१ ॥

नैसर्गिकेण तरसा करुणे नियुक्ता
निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ।
विस्मापयेद्वृषगिरीश्वरमप्यवार्या
वेलातिलङ्घनदशेव महाम्बुराशेः ॥ ९२ ॥

विज्ञातशासनगतिर्विपरीतवृत्त्या
वृत्रादिभिः परिचितां पदवीं भजामि ।
एवंविधे वृषगिरीशदये मयि त्वं
दीने विभोश्शमय दण्डधरत्वलीलाम् ॥ ९३ ॥

मासाहसोक्तिघनकञ्चुकवञ्चितान्यः
पश्यत्सु तेषु विदधाम्यतिसाहसानि ।
पद्मासहायकरुणे न रुणत्सि किं त्वं
घोरं कुलिङ्गशकुनेरिव चेष्टितं मे ॥ ९४ ॥

विक्षेपमर्हसि दये विपलायितेऽपि
व्याजं विभाव्य वृषशैलपतेर्विहारम् ।
स्वाधीनसत्वसरणिस्स्वयमत्र जन्तौ
द्राघीयसी दृढतरा गुणवागुरा त्वम् ॥ ९५ ॥

सन्तन्यमानमपराधगणं विचिन्त्य
त्रस्यामि हन्त भवतीं च विभावयामि ।
अह्नाय मे वृषगिरीशदये जहीमा-
माशीविषग्रहणकेलिनिभामवस्थाम् ॥ ९६ ॥

औत्सुक्यपूर्वमुपहृत्य महापराधान्
मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ।
आलिह्य तान्निरवशेषमलब्धतृप्ति-
स्ताम्यस्यहो वृषगिरीशधृता दये त्वम् ॥ ९७ ॥

जह्याद्वृषाचलपतिः प्रतिघेऽपि न त्वां
घर्मोपतप्त इव शीतलतामुदन्वान् ।
सा मामरुन्तुदभरन्यसनानुवृत्ति-
स्तद्वीक्षणैः स्पृश दये तवकेलिपद्मैः ॥ ९८ ॥

दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं
स्नात्वाऽपि धूलिरसिकं भजनेऽपि भीमम् ।
बद्ध्वा गृहाण वृषशैलपतेर्दये मां
त्वद्वारणं स्वयमनुग्रहशृङ्खलाभिः ॥ ९९ ॥

नातः परं किमपि मे त्वयि नाथनीयं
मातर्दये मयि कुरुष्व तथा प्रसादम् ।
बद्धादरो वृषगिरिप्रणयी यथाऽसौ
मुक्तानुभूतिमिह दास्यति मे मुकुन्दः ॥ १०० ॥

निस्सीमवैभवजुषां मिषतां गुणानां
स्तोतुर्दये वृषगिरीशगुणेश्वरीं त्वाम् ।
तैरेव नूनमवशैरभिनन्दितं मे
सत्यापितं तव बलादकुतोभयत्वम् ॥ १०१

अद्यापि तद्वृषगिरीशदये भवत्या-
मारम्भमात्रमनिदंप्रथमस्तुतीनाम् ।
सन्दर्शितस्वपरनिर्वहणा सहेथा
मन्दस्य साहसमिदं त्वयि वन्दिनो मे ॥ १०२ ॥

प्रायो दये त्वदनुभावमहाम्बुराशौ
प्राचेतसप्रभृतयोऽपि परं तटस्थाः ।
तत्रावतीर्णमतलस्पृशमाप्लुतं मां
पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥ १०३ ॥

वेदान्तदेशिकपदे विनिवेश्य बालं
देवो दयाशतकमेतदवादयन्माम् ।
वैहारिकेण विधिना समये गृहीतं
वीणाविशेषमिव वेङ्कटशैलनाथः ॥ १०४ ॥

अनवधिमधिकृत्य श्रीनिवासानुकम्पा-
मवितथविषयत्वाद्विश्वमव्रीडयन्ती ।
विविधकुशलनीवी वेङ्कटेशप्रसूता
स्तुतिरियमनवद्या शोभते सत्वभाजाम् ॥ १०५ ॥

शतकमिदमुदारं सम्यगभ्यस्यमाना-
न्वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ।
अनितरशरणानामाधिराज्येऽभिषिञ्चे-
च्छमितविमतपक्षा शार्ङ्गधन्वानुकम्पा ॥ १०६ ॥

विश्वानुग्रहमातरं व्यतिषजत्स्वर्गापवर्गौ सुधा-
सध्रीचीमिति वेङ्कटेश्वरकविर्भक्त्या दयामस्तुत ।
पद्यानामिह यद्विधेयभगवत्सङ्कल्पकल्पद्रुमात्
झंझामारुतधूतचूतनयतस्सांपातिकोऽयं क्रमः ॥ १०७ ॥

कामं सन्तु मिथः करम्बितगुणावद्यानि पद्यानि नः
कस्यास्मिञ्छतके सदम्बुकतके दोषश्रुतिं क्षाम्यति ।
निष्प्रत्यूहवृषाद्रिनिर्झरझरत्कारच्छलेनोज्ज्वलन्
दीनालम्बनदिव्यदम्पतिदयाकल्लोलकोलाहलः ॥ १०८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
दयाशतकं सम्पूर्णम्

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेंकटेशाय वेदान्तगुरवे नमः ॥

श्रीरस्तु



श्रीः

# श्रीनिवासगुणाकरः

## श्रीवरदाचार्यविरचितव्याख्यानसहितः

वादिकण्ठीरवश्रीमद्वरदार्येण धीमता ।
व्याख्या श्रीवासकाव्यस्य लिख्यते पदयोजनी

श्रीवेङ्कटेश्वरस्तोत्रमारभते—

श्रीभृत्सद्वृषगोत्रशेखरमणे वेदप्रवक्तः शुचे
लोकास्वाद्यचरित्र सुन्दरतनो धीवारिभिः क्षालिते ।
सस्वैतद्वरदक्षिणा शुभगुणा सालङ्कृतिर्विस्फुर-
त्सद्वृत्ता कविता मया तव पदे दासेन भाव्याऽर्प्यते ॥ १ ॥

**श्रीभृदिति** ॥ श्रियं शोभां संपत्तिं पद्मां बिभर्तीति श्रीभृत्, तस्य संबुद्धिः । 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिति कथ्यते' इति निघण्टुः । सतो वृषगोत्रस्य वेङ्कटाचलस्य शेखरमणे, सत्(न्) वृषं(षः) सुकृतं यस्य तादृशस्य गोत्रस्य शेखरमणे सत्कुलप्रसूतेति चार्थः । वेदप्रवक्तः वेदानां हयग्रीवरूपेण प्रवचनकर्तरित्यर्थः । शुचिः परिशुद्ध इत्यर्थः । लोकैः जनैः आस्वाद्यमनुभवैक-योग्यं चरित्रं चारित्रं यस्य सः । सुन्दरा तनुर्यस्य सः । धीवारिभिः ज्ञानवारिभिः क्षालिते शोधिते, तव भवतः पदे पादे । स्वेन स्वीयेन सह वर्तत इति सस्वः । सचासावेष च सस्वैषः एष आत्मा अहमित्यर्थः । स एव वरदक्षिणा श्रेष्ठदक्षिणा यस्यास्सा सस्वैतद्वरदक्षिणा, आत्मीयसहित आत्मैव वरदक्षिणेत्यर्थः । शुभः गुणः सौन्दर्यादिर्यस्यास्सा शुभगुणा । अलङ्कारादि (अलङ्कृतिरलङ्कारः अनुप्रासादि-) रुपमादिश्च तेन सहिता सालङ्कृतिः । विस्फुरत् प्रकाशमानं सन् योग्यं वृत्तं शार्दूलादिकं यस्यास्सा । कविता मया दासेन अर्प्यते समर्प्यते । अस्मिन् श्लोके

सम्बुद्धिसप्तकम्[1] ॥ १ ॥

ब्रह्मादीनामपि स्तोतुमशक्यस्य तव पदे मम स्तोत्रप्रवृत्तिर्हेयेत्याह—

**वाण्यास्योऽसमदृक् सहस्रवदनो द्योसत्पुरोधाःस्वभू-**
**हृज्जादात्तवरः पुराणवरकृत् तत्पुत्रकस्तत्सुतः ।**
**सेनेशो वरभाष्यकृत् तव परा घण्टाऽहमल्पं परं**
**यौष्माकीन(ण)गुणादिकं कथयितुं लक्ष्मीश शक्तो न किम् ॥**

हे लक्ष्मीश वाणी सरस्वती आस्ये यस्येति व्यधिकरणबहुव्रीहिः चतुर्मुखः । असमा दृशो यस्य सः असमदृक् रुद्रः । सहस्राणि वदनानि मुखानि यस्य सः सहस्रवदनः अनन्तः । द्योसत्पुरोधाः बृहस्पतिः । स्वस्माद्भवतीति स्वभूः ब्रह्मा, तस्य हृत् हृदयं तस्माज्जायत इति हृज्जः नारदः, तस्मादात्तः स्वीकृतः वरो यस्य सः वाल्मीकिः । 'दैवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' इति निघण्टुः । पुराणवरकृत् पराशरः तत्पुत्रकः व्यासः तत्सुतः श्रीशुकः । सेनेशो विष्वक्सेनांशश्शठकोपः । वरभाष्यकृत् श्रीभाष्य[कृत]कारः । घण्टा वेदान्ताचार्य उक्तेभ्योऽन्योऽहमिति शब्दार्थः । यौष्माकीनं(णं) युष्मत्संबन्धिनं परमनन्तमधिकं वा गुणादिकं कथयितुं स्तोतुमल्पं यथातथा शक्तः समर्थः नकिं? शक्त एवेत्यर्थः ॥ २ ॥

एवं स्तोतुमशक्तत्वेऽपि यावच्छक्ति स्तोष्यामीत्याह—

**व्योमाब्जायितसीमभूमिकमपि श्रीभृद्भवद्वैभवं**
**तावच्चित्सुलभं धृतामृतरसं सञ्जीवनैकौषधम् ।**
**यावच्छक्ति वदामि यामि सुसुखं तेनैव कात्स्न्र्येन कः**
**पानाशक्त इति प्रमुञ्चति पयो गाङ्गं सतृट्चेतनः ॥ ३ ॥**

हे श्रीभृत् वेङ्कटाचलपते चित्सुलभं ज्ञानसुलभं धृतामृतरसं धृतमोक्षरसं सञ्जीवनैकौषधं जीवनमुज्जीवनं समुज्जीवनं संजीवनं तत्रैकौषधम् । अनेन कैवल्यव्यावृत्तिः । भवद्वैभवं भवत्प्रभावं व्योमाब्जायितं व्योमाम्बुजवदाचरितं(ता) सीम-

1. सद्गुषेत्यादद्वैधा व्याख्यानात् सप्तकमिति ।

भूमिकं(मिः) सीमातिशयं(-प्रदेशः) यस्य सः(तत्) तादृशमपि यावच्छक्ति शक्त्यनुगुणं वदामि वच्मि। सुसुखं यामि प्राप्स्यामि। तत्र दृष्टान्तमाह। सतृट् चेतनः जलपानोद्युक्तचेतनः तेनैव[1] कार्त्स्न्येन तेन सामस्त्येनैव पाने अशक्त इति असमर्थ इति गाङ्गं गङ्गासंबन्धि पयः प्रमुञ्चति किम्? न प्रमुञ्चतीत्यर्थः ॥ ३ ॥

ब्रह्माद्यपेक्षया मद्वाक्य एव तव प्रेमास्तीत्याह—

**वाणीनाथमुखामरर्षिशठजिद्रामानुजार्यादिवा-**
**ग्जाले सत्यपि शब्दशक्यशुभतायुक्ते त्रयीभाविनि।**
**काङ्क्षेथे पितरौ ममैव मधुरं शब्दं युवां श्रीहरी**
**लोकेऽग्र्यात्मजवाक्चये सति शिशोरव्यक्तशक्यं(ब्दं)यथा ॥ ४ ॥**

त्रय्यां वेदे भाविनि भाववतीत्यर्थः। शब्दशक्यशुभतायुक्ते शब्दश्च शक्यं च शब्दशक्ये तयोः शुभता शुभत्वं तया युक्ते। वाणीनाथः ब्रह्मा मुखो(खे खं) येषां ते वाणीनाथमुखाः, अमरर्षिः नारदः, शठजित् पराङ्कुशः, रामानुजः भाष्यकारः तेषां वाग्जाले वाक्समूहे सत्यपि श्रीहरी लक्ष्मीनारायणौ पितरौ युवां भवन्तौ ममैव अत्यन्तबालकस्य मधुरं शब्दं तथा यथा काङ्क्षेथे काङ्क्षमाणावित्यर्थः। तत्र दृष्टान्तमाह-लोक इति। अग्र्यात्मजाः ज्येष्ठसुताः तेषां वाक्चये वाक्समूहे सत्यपि अव्यक्तमशुद्धं शक्यं(ब्दं)यथा शब्दमिव कांङ्क्षेथे काङ्क्षमाणावित्यर्थः ॥ ४ ॥

कर्तुमकर्तुं शक्तिर्ममाप्यस्तीत्याह—

**अघटितघटनायां त्वत्समोऽसि प्रसिद्धा**
**वृषधरधव मा ते पण्डितंमन्यतेद्धः।**
**नुतिकृतिभरभारी दुर्घटं शास्त्रदृष्ट्या**
**परमिह घटयामि श्रीश शब्दार्थजालम् ॥ ५ ॥**

हेवृषधरधव हेवेङ्कटाचलपते ते भवतः सा अघटितघटना प्रसिद्धा।

---

1. तेनैव यावच्छक्तिवदनेनैव शोभनं सुखं यामीत्यन्वयः स्पष्ट एव। उत्तरत्रापि कथञ्चिदन्वयः सुवच इत्यभिप्रायेण एवं योजना।

हे श्रीश हे स्वामिन् पण्डितंमन्यतेद्धः पण्डितं [आत्मानं] मन्यत इति पण्डितंमन्यः तस्य भावस्तत्ता तया इद्धः दीप्तः अहम् अघटितघटनायां त्वत्समः त्वत्सदृशः अस्मि । अघटितघटनामुपपादयति—नुतिः स्तोत्रं, तस्य कृतिः प्रयत्नः तस्य भरस्तं भरतीति भारी अहं दुर्घटं घटितुमशक्यं शब्दार्थजालं शब्दार्थसमूहं शास्त्रदृष्ट्या श्रीहर्ये(रीअ) त्रेत्यादौ[1] श्रीहर्यत्रेत्यादिरूपेण परमत्यन्तं घटयामि सन्धिं करोमीत्यर्थः ॥ ५ ॥

पूर्वं व्यासमनुप्रविश्य महितानुच्चार्य शब्दान् स्वयं
तं पूजास्पदमातनोरसुपदे त्वं चौर्य(र)वत् कौतुकात् ।
अद्यैनं समनुप्रविश्य कुटिलान् शब्दानिमानुच्चरन्
मां हास्यास्पदमातनोष्यपि तथा शेषः कृतार्थोऽस्मि हि ॥ ६ ॥

त्वं पूर्वं द्वापरयुगे कौतुकात् विलासात् व्यासमनुप्रविश्य अनुप्रवेशं कृत्वा महितान् पूज्यान् शब्दान् स्वयमुच्चार्य तं व्यासं पूजास्पदं पूजाधारमतनोः कृतवानसि । असुपदे सुपदभिन्ने अपशब्देष्वित्यर्थः । (....?) अद्य कलियुगे एनं मां समनुप्रविश्य अनुप्रवेशं कृत्वा चौर्य(र)वत् चोरो यथा, कुटिलान् इमान् शब्दानुच्चरन् मां हास्यास्पदं हासास्पदम् आतनोषि कृतवानसि[1] । अपि तथा तथापीत्यर्थः । हास्यास्पदीकरणेऽपीत्यर्थः । शेषः परार्थत्वादिति सूत्ररीत्या शेषः तव यथेष्टविनियोगार्हत्वात् कृतार्थः इत्यर्थः ॥ ६ ॥

निशामुखनटन्महानटकिरीटकोटिस्फुर-
त्सुधानिधिगलत्सुधामिलितगाङ्गभङ्गोपमम् ।
कवित्वमिह मे भुवि त्वदनुषक्तिमद्युक्तिम-
द्विधेहि कमलानिधे युवनिपीतबालास्यवत् ॥ ७ ॥

हे कमलानिधे श्रीनिवास निशामुखे सायङ्काले नटन्महानटो रुद्रः तस्य किरीटकोटिषु स्फुरन् यस्सुधानिधिश्चन्द्रः तस्माद्गलन्ती या सुधा अमृतं, तया मिलिता ये गाङ्गभङ्गाः गङ्गातरङ्गाः तैरुपमा यस्य तत् । त्वदनुषक्तिमत् त्वया

1. ईदूदेद् द्विवचनं प्रगृह्यमिति प्रकृतिभावविधानात् सन्धिरत्र दुर्घटः ।
2. मी. सू. 3 1 2.

अनुषक्तिमत् त्वत्सम्बन्धवत् । अत एव यूना [तरुण]वयस्केन निपीतं यद्बालास्यं नवोढामुखं तद्वत् युक्तिमत् प्रशस्तयोगवत् । प्राशस्त्ये मतुप् । कवित्वं मे विधेहीत्यर्थः ॥ ७ ॥

इच्छा सिद्धे न भजति जनिं किंतु साध्ये ममेदं
चित्रं चित्तं स्वसहजतया शेषतामेव सिद्धाम् ।
लिङ्गद्वन्द्वस्फुरदजडिमत्वत्स्वरूपाभिनुत्यै
वाञ्छत्युच्चैर्वृषधरशिरोनीलकल्पक्षमाज ॥ ८ ॥

हे वृषधरशिरोनीलकल्पक्षमाज वृषधरशिरसः वेङ्कटाद्रिशिखरस्य नीलकल्पक्षमाज नीलकल्पवृक्षभूतेत्यर्थः । मम इच्छा सिद्धे ब्रह्मणि जनिमुत्पत्तिं निष्ठां न भजति न प्राप्नोति । सिद्धेऽसिद्धे(द्धवत्)साधनाप्रयोगात् । किंतु तथाऽपि साध्ये जनिं भजति । चित्रमित्याश्चर्ये । तर्हि किं वाञ्छतीत्याह— मम चित्तं स्वेन सहजतया सिद्धां शेषतां परार्थतां [फण]ध[रा]राजतां च, लिङ्गद्वन्द्वेन अखिलहेयप्रत्यनीकत्वकल्याणगुणैकतानत्वरूपलिङ्गद्वयेन स्फुरन् प्रकाशमानम् अजडिम जडरहितं ज्ञानस्वरूपं यत्त(-त् त्व-)त्स्वरूपं तत्स्तुत्यै उच्चैः उन्नततया तथा वाञ्छति अपेक्षत इत्यर्थः[1] ॥ ८ ॥

रमाऽपि कुसुमाधिकम्रदिमपाणिना सेवते
प्रमादरहितेव यत्तव तदङ्घ्रियुग्मं परम् ।
ममापि कठिने हृदि स्थिततयैव रक्तीकृतं
क्षमामिह कुरु प्रभो वृषधरेडशक्ते मयि ॥ ९ ॥

हे वृषधरेट् हे वृषाचलपते रमाऽपि श्रीरपि कुसमात् पुष्पादपि अ(-दधिको) म्रदिमा[यस्य]सचासौ पाणिः हस्तः तेन प्रमादरहितेव प्रमादाभावेनेव तव भवतः यतङ्घ्रियुग्मं सेवते, परम् उत्कृष्टं तदङ्घ्रियुग्मं ममापि कठिने हृदि हृदये स्थिततया स्थित्या रक्तीकृतम् अरुणीकृतम् । हे प्रभो इह इदानीम् अशक्ते हृत्काठिन्यनिवर्तनाशक्ते मयि क्षमां शान्तिम् अनुग्रहमिति भावः । कुरु कुर्याः ॥ ९ ॥

1. "चित्तं त्वां स्तोतुं सहस्रमुखशेषतां वाञ्छतीत्यर्थः ।"

**कठिने ते मम चित्ते**
**वृत्तिः शक्या न चेच्छुभं कुर्वेतत् ।**
**कुर्वन्ति तथा लोके**
**नेदं त्याज्यं विभो किमायासेन ॥ १० ॥**

कठिने मम चित्ते ते वृत्तिः स्थितिः शक्या समर्था न चेत् न स्याच्चेत् एतत् मम चित्तं शुभं कुरु मृदु कुर्वित्यर्थः । तदि(त्वमि)ति शेषः । लोके यथा असमीचीननिवासस्थानं समीचीनं कुर्वन्ति तथा त्वमपीत्यर्थः । बहुस्थानकत्वादेतत्त्यजामीत्यत आह—हे विभो स्वामिन् त्वया न त्याज्यं नोपेक्षणीयम् । तत्र हेतुं वक्ति—विभो इति । हे विभो हे स्वामिन् आयासेन किं? किं प्रयोजनमित्यर्थः ॥ १० ॥

**विष्णो त्वत्पदभाक्तरुव्रजमितो ध्वान्तच्छलान्निष्पिबन्**
**धूमालिं विबुधव्रजं शुचिमुखं शुद्धाः कलाः प्रापयन् ।**
**स्वाः पीयूषमयीर्व्रतात्तकृशिमाधिक्यो विशुद्धस्फुरत्-**
**सत्सङ्गोऽङ्घ्रिरुहश्रियै चरति ते श्रीश द्विजेन्द्रस्तपः ॥ ११ ॥**

हे विष्णो हे स्वामिन् त्वत्पदं विष्णुपदम् आकाशं च भाक् प्राप्तः तदनन्तरं तरुव्रजं वृक्षसमूहम् इतः प्राप्तः वनवासं कुर्वंश्च ध्वान्तच्छलात् तमोव्याजात् निष्पिबन् नितरां पिबन्नित्यर्थः । धूमपानं तपश्च करोतीति स्फुरति । शुचिः अग्निः मुखं यस्य तं परिशुद्धाननं च विबुधव्रजं विद्वत्समूहं देवतासमूहं च स्वाः स्वीयाः पीयूषमयीः सुधामयीः मोक्षप्रदतया अमृतपूर्णाश्च शुद्धाः परिशुद्धाः कलाः षोडशभागान् वेदान्तविद्याश्च प्रापयन् दानं कुर्वन्नित्यर्थः । व्रतेन आत्तः यः कृशिमा कार्श्यं तस्याधिक्यं यस्य सः । विशुद्धः परिशुद्धः स्फुरन् प्रकाशमानः सतां नक्षत्राणां सत्पुरुषाणां च सङ्गो यस्य सः । द्विजेन्द्रश्चन्द्रः ब्राह्मणश्च ते भवतः अङ्घ्रिरुहाणां नखानां श्रियै कान्त्यै तपश्चरति आचरतीत्यर्थः ॥ ११ ॥

**अरुणतरुणतरणि[किरण]**
**विकसज्जलवर्तिजलजगर्भाभम् ।**

वृष[गिरि]धव तव चरणं
शरणं करवाण्यनर्घशातार्थम् ॥ १२ ॥

हे वृष[गिरि]धव हे वेङ्कटाचलपते अरुणः रक्तः तरुणः बालः तरणिः सूर्यः तेन (तस्य किरणैः) विकसत् विकसमानं जलवर्ति उदकवर्ति यज्जलजं पद्मं तस्य गर्भः किञ्जल्कः तस्यामेवाभा यस्य तत् तव भवतः चरणं पादम् अनर्घशातार्थम् अपरिमितसुखार्थम् । शर्मशातसुखानि चेत्यमरः । शरणं रक्षकं करवाणि करोमीत्यर्थः ॥ १२ ॥

अम्भस्सम्भरितालवालबलवद्विश्वंभरारम्भव-
द्रम्भास्तम्भविभञ्जकः करिकरः शेषाद्रिचूडामणे ।
स्मारंस्मारमुरुप्रभं म्रदिमभागूरुद्वयं ते ह्रिया
संकोचं मुहुरेति कन्दरमुखं पीत्वा विषं याति च ॥ १३ ॥

हे शेषाद्रिचूडामणे शेषाद्रेः वेङ्कटाचलस्य चूडामणे शिरोभूषणेत्यर्थः । अम्भसा उदकेन सम्भरितं पूर्णीकृतं यदालवालं यस्यास्सा । अत एव बलवती या विश्वम्भरा भूमिः तस्या आरम्भवत आरम्भभूतस्य रम्भास्तम्भस्य कदलीस्तम्भस्य विभञ्जकः नाशकः तत्सत्त्वे ऊरुसाम्यं प्रसजेदिति तद्विभञ्जकः करिकरः करिहस्तः । उरु अधिकं प्रभा यस्य तत् । म्रदिमानं मृदुत्वं भजतीति म्रदिमभाक् ते भवतः ऊरुद्वयं स्मारंस्मारं स्मृत्वास्मृत्वा ह्रिया लज्जया विषं जलं गरलं च पीत्वा मुहुः प्रतिपदं संकोचम् एति प्राप्नोति । कन्दरमुखं गुहातुल्यमुखम् एति च प्रविशतीत्यर्थः । यथा लोके कश्चिन्मानी शत्रुजितस्सन् लज्जया गुहां प्रविशति तद्वत् करिकरोऽपि भवदूरुजितः कन्दरमुखं प्रविशतीति भावः ॥ १३ ॥

नाभिर्नीलिमनीरनिम्नसरसी यत्पद्ममासीत्ततः
त्वच्छ्वासानिललौल्यभाजि युवयोः पित्रोः पुरः पश्यतोः ।
यत्रानेकमुखार्भको मधुरसव्यासङ्गिभृङ्गीच्छटा-
सङ्गीताब्धितरङ्गसङ्गतमनाः प्राश्नाति डोलारसम् ॥ १४ ॥

नाभिः त्वद्वस्तिः नीलिमैव नीरं जलं यस्यास्सा, निम्ना च सरसी, नीलिमनीरा च सा निम्नसरसी च अगाधसरः, अभूदिति शेषः । यत् यस्मात् ततः

नाभ्याः पद्ममासीत् उत्पन्नमासीत् अतः सा सरसीत्यर्थः। तव यः श्वासानिलः निश्वासमरुत् तेन लौल्यं लोलत्वं चञ्चलत्वमित्यर्थः। तद्भजतीति लौल्यभाजि यत्र पद्मे पित्रोः मातापित्रोः, पिता मात्रेत्येकशेषः। युवयोः लक्ष्मीनारायणयोः पुरः पुरतः पश्यतोः सतोः। श्रियो वक्षस्स्थत्वात् युवयोरित्युक्तिः। एतेन जलमध्यस्थापितैकस्तम्भप्रासादसाम्यं च पद्मस्य स्फुरति। अनेकानि मुखानि यस्य सः चतुर्मुखः स एव शिशुः। मधुरसे मकरन्दरसे व्यासङ्गो यासां ताः या भृङ्गीच्छटाः भृङ्गीसमूहाः तासां सङ्गीताब्धिः सङ्गीतसमुद्रः तस्य तरङ्गा ऊर्मयः तेषु सङ्गतम् आसक्तं मनः अन्तःकरणं यस्य सः। डोलारसं प्राश्नाति अनुभवतीत्यर्थः। यथा लोके पितरौ [" प्रेमविषयं बालं "] पिपीलिकाबाधारहितडोलायां [' निवेश्य '] [" तस्यामेव "] [गायन्तीः] बालिकाश्च निवेश्य गानरसमनुभवन्तं पुत्रं प्रेम्णा पश्यतस्तथाऽत्रापि प्रतिभाति॥ १४॥

**श्वासो मन्दमरुन्मणिस्तु मुकुरो मन्दस्मितं चन्द्रिका**
**वेश्मोरो वनमालिका वृषधरेड्डोला तनुत्विण्णदी।**
**मध्वास्वादमदोत्पतन्मधुकरश्रेण्यम्बुबिन्दूत्किर-**
**द्वार्यन्त्रं तव नाभिवारिजमिदं लीलाभिक्लृप्त्यै श्रियः॥ १५॥**

हे वृषधरेट् वेङ्कटाचलपते श्रियः लक्ष्म्याः लीलाभिक्लृप्त्यै लीलार्थं तव भवतः श्वासः निश्वासः मन्दमरुत् मलयवायुः, तव मणिः कौस्तुभं मुकुरः दर्पणः। मन्दस्मितं मन्दहासः चन्द्रिका ज्योत्स्ना, वक्षःस्थलं वेश्म गृहाः, वनमालिका वनमाला डोला, तनुत्विट् तनुकान्तिः नदी जलक्रीडानदी, इदं पुरोवर्ति नाभिवारिजं नाभिपद्मं मध्वास्वादेन मकरन्दास्वादेन यो मदः गर्वः तस्मिन् उत्पतन्ती पतमाना या मधुकरश्रेणी भृङ्गमाला सैव (तामेव) अम्बुबिन्दून् उत्किरत् वार्यन्त्रं जलयन्त्रं, तव अवयवादिकं लक्ष्म्याः लीलोपकरणमासीदिति सर्वत्र संबध्यते॥ १५॥

**कुक्षिस्थत्रैलोक्यगलोकौघविमर्द-**
**प्राप्तोच्छूनत्वोदयभाजो वलयस्ते।**
**तत्सीमाकारा वलिसन्ध्याश्रितरेखाः**
**शेषक्ष्मा(क्षोणी)भृद्वद लक्ष्मीश विभान्ति॥ १६॥**

हे शेषक्ष्मा(क्षोणी)भृद्धव हे वेङ्कटाचलपते हे लक्ष्मीश हे लक्ष्मीपते ते भवतः वलयः कुक्षिस्थं यत् त्रैलोक्यं तद्गच्छतीति त्रैलोक्यगः सचासौ लोकौघः लोकसमूहः जनसङ्घः तस्य विमर्देन संमर्देन प्राप्तं यदुच्छूनत्वं पीनत्वं, तेन उदयभाजः उत्पत्तिभाजः विभान्ति। वलिसन्धिषु वलिमध्येषु अञ्चितरेखाः प्राप्तरेखाः। अञ्चु गतिपूजनयोरिति धातुः। तत्सीमाकाराः तस्य त्रैलोक्यस्य सीमाकारा अवधिभूता विभान्तीत्यर्थः ॥ १६ ॥

**कुक्षिन्यस्तजगत्त्रयीजनघटासंमर्दजोच्छूनता-**
**संभूता वलयश्च सन्धय इमास्तत्सीमरेखा इव ।**
**सद्धीरोदरबन्धनं विजयते तद्धारणादक्षता**
**सन्देहारचितं वृषाचलशिरश्चूडामणे श्रीनिधे ॥ १७ ॥**

उक्तमेवार्थं प्रकारान्तरेण विशदयति— वृषाचलस्य वेङ्कटाचलस्य शिरसः चूडामणे शिरोभूषण श्रीनिधे लक्ष्मीपते इमाः वलयः सन्धयश्च तत्सीमलेखा इव तेषां लोकानां रेखा इव अभिज्ञा (अवधिभूता) इव। कुक्षावुदरे न्यस्ता या जगत्रयीजनघटा लोकत्रय (जन) समूहः तस्या यस्संमर्दः तस्माज्जाता या उच्छूनता पीनत्वं तया संभूताः संजाताः। सन्तः प्रशस्ता हीराः यस्य तत् तथोक्तमुदरबन्धनं रशनाभरणं तद्धारणे जगत्रयीधारणे अदक्षता असामर्थ्यं सैव सन्देहः[1] तेनारचितं [विजयते] निश्चितं रेखा (निश्चिततया) प्रकाशते ॥ १७ ॥

**श्रीवत्सचिह्नवक्षाः**
**श्रीवत्सलतातिशायिवात्सल्यः ।**
**श्रीवत्ससक्तचित्तः**
**श्रीवत्सजिदाकृतिर्हरिर्जीयात् ॥ १८ ॥**

श्रीवत्सं चिह्नं यस्य तद्वक्षो यस्य सः। श्रियो वत्सलता वात्सल्यं [तदतिशापि वात्सल्यं] यस्य सः। ["श्रियः वत्से वक्षसि सक्तचित्तः"]। श्रियः लक्ष्म्याः वत्सः मन्मथः तं जयतीति श्रीवत्सजित् तस्याकृतिरिवाकृतिः यस्य सः। वेङ्कटेश इति शेषः।

---

1. 'सैव' इत्यस्य स्थाने 'तस्य' इति पठितव्यम्। यद्वा सन्देहः सन्दिग्धोऽर्थ इति व्याख्येयम्।

जीयात् सर्वोत्कर्षेण वर्तताम् ॥ १८ ॥

**तटित्पटुकुटीरभापटलहेमपेटीरमा-**
**घटीकुचतटीलसत्तरपटीरपङ्काङ्कितम् ।**
**नमद्धृदय पश्यतोहरतरं तवोरस्स्थलं**
**धगद्धगितसद्दृषद्वृषधरेश चित्तेऽस्तु मे ॥ १९ ॥**

तटित् विद्युदेव पटु समर्थं कुटीरं मन्दिरं यस्य तत्तादृशं यद्भाःपटलं कान्तिबृन्दं तस्य हेमपेट्याः स्वर्णपेटिकायाः रमाया लक्ष्म्याः घटीव यौ कुचौ स्तनौ तयोः तट्यां प्रदेशे लसत्तरमत्यन्तं प्रकाशमाने यत्पटीरपङ्कं चन्दनपङ्कं तेनाङ्कितं चिह्नितं, नमति (तः) नमस्कारं कुर्वत (तः) हृ(य)त हृदयं तस्य पश्यतोहरं [नमन्-] मनोहरं, धगद्धगितः धगद्धगायमानः(ना) सन् (ती) योग्यः (ग्या) दृषत्कौस्तुभो यस्य तत्तवोरस्स्थलं वक्षस्स्थलं मे मम चित्ते अस्तु भवत्वित्यर्थः ॥ १९ ॥

**फुल्लेन्दीवरगुच्छसुन्दरशिखा प्रान्तस्फुटाब्जा ततो-**
**धस्ताद्गुच्छयुगाञ्चिताग्र(न्त)विलसन्मल्ल्यग्रसत्पल्लवा ।**
**अप्राप्तोपमगन्धकान्तिमृदुताव्योमाम्बुजम्लानता**
**न्यस्ता चम्पकमालिकोरसि विभो केनापि शुद्धेन ते ॥ २० ॥**

हे विभो हे वेङ्कटाचलपते ते तव उरसि वक्षस्स्थले फुल्लानि विकचानि यानीन्दीवराणि कल्हाराणि तेषां गुच्छाः स्तबकाः तैस्सुन्दराः सुभगाः शिखाः अग्राणि यस्यास्सा । प्रान्तेषु पार्श्वेषु स्फुटानि विकचानि अम्बुजानि यस्यास्सा । ततोऽधस्तात् अब्जादधः गुच्छकानां स्तबकानां युगेन द्वन्द्वेन अञ्चिता । निगतानि ? अग्राणि । ? मल्ल्यो मल्लिकाकुसुमानि अग्रे येषां ते मल्ल्यग्राः अन्ते विकसन्तो मल्ल्यग्राः सत्पल्लवाः यस्याः सा । अप्राप्ता अलब्धा उपमा साम्यं यस्यास्सा गन्धश्च परिमलः कान्तिस्तेजः मृदुता मार्दवं ताभिः व्योमाम्बुजस्य आकाशपद्मस्य म्लानता यस्यास्सा । तद्वदच्छे (सत्ये) त्यर्थः । शुद्धेन केनापि क्षीरोदेन चम्पकमालिका चम्पकमाला न्यस्ता समर्पिता । केशपाशनेत्रकुचनखकरपादतनुरूपविषयाणां निगरणम् ॥ २० ॥

एका त्वत्पदजा समुद्रमगमत्सिन्धुः परा वार्धिजा
त्वां शेषाद्रिगृहं श्रिता चकचकन्नीरा लसच्छैवला ।
स्वब्जेन्दीवरशङ्खचक्रमिथुनावर्ता स्फुरत्सैकता
स्मृत्याऽप्यर्थितजीवनादिफलदा पापापनोदक्षमा ॥ २१ ॥

चकचकत् प्रकाशमानं नीरमुदकं यस्यास्सा । चकचकदित्यनुकरणशब्दः । सु शोभनमब्जमीन्दीवरं शङ्खश्च चक्रमिथुनं चक्रवाकमिथुनमेव आवर्ताः, स्यादावर्तोऽम्भसां भ्रम इत्यमरः । पक्षद्वये केशपाशरोमराजिमुखनेत्रकण्ठस्तनद्वयावर्तसैकतानां(?) निगरणम् । नदीपक्षे अर्थितजीवनादिफलदा जीवनशब्देन उदकमुच्यते । आदिशब्देन स्वर्ग उच्यते । रमापक्षे जीवनमैश्वर्यादिकम् । आदिशब्देन मोक्षश्च । पुरुषकारेणेत्यर्थः । स्मृत्या स्मरणेन पापानां दुष्कृतानामपनोदने निवारणे क्षमा समर्थेत्यर्थः । "गङ्गा गङ्गेति यो ब्रूयात्" इत्युक्तेः । रमापक्षे मोक्षप्रतिबन्धकीभूतपापनिवर्तिकेत्यर्थः । "वेरि मारात पूमेल्लिरुप्पाक् विनै तीर्क्कुमे" इत्युक्तेः (तिरुवाय् मोऴि ४. ५. ११.) एतादृशात् (एका) त्वत्पदात् चरणाज्जाता गङ्गा सिन्धुः समुद्रं वार्धिं अगमत् प्राप्ता । परा अन्या वार्धिजा लक्ष्मीः, शेषाद्रिः शेषाचलः निवासो यस्य तं त्वां भवन्तं श्रिता आश्रिता ॥ २१ ॥

त्वद्दृक्पुष्पवदंशुजार्धहसनस्वापं मधुभ्राड्रमा
सोपानैर्वलिभिस्समेत्य शिशवे नाभीजुषे चारुजे ।
दातुं स्वौषधिकाज्यमब्जमनिशं हस्ते वहन्ती भव-
द्वक्षस्स्था भवरोगिणे दिशति मे किं नामृतं सत्कृपा ॥ २२ ॥

आश्रित्य किमकरोदित्याह— सती योग्या कृपा दया यस्यास्सा । भवतः वक्षसि वक्षस्स्थले तिष्ठति वसतीति भवद्वक्षस्स्था तव भवतः नाभिपद्मं भवद्वक्षस्स्थत्वासिनी रमा लक्ष्मीः नाभीं जुषतीति नाभीजुट् नाभीपद्मजनुषे अरुजे रोगनिवारणार्थं शिशवे चतुर्मुखाय वलिभिः तैरेव सोपानैः समेत्य गत्वा सु योग्यम् ओषधिरस्यास्तीति औषधिकमोषधिमिश्रं यदाज्यं घृतं दातुं तव भवतः दृशौ यौ पुष्पवन्तौ सूर्यचन्द्रौ तयोः । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरावित्यमरः ।

अंशवः किरणाः तेभ्यः [जातं] अर्धहसनस्वापं यस्य तत्। मधु मकरन्दं धरतीति मधुध्राट्। डुधाञ् धारणपोषणयोरिति धातुः(?)। अप्सु जायत इत्यब्जं पद्मम्। अनिशं सर्वदा हस्ते शये वहन्ती बिभ्रती। भवः संसारः स एव रोगः यस्य तस्मै मे मह्यं अमृतं मोक्षं न दिशति किं, न ददाति किं? दिशत्येवेत्यर्थः॥ २२॥

श्रीस्त्वल्लोचनपुष्पवत्करचयैरर्धप्रबोधं मधु-
भ्राज्यब्जं तव नाभिपद्मशिशवे वल्याख्यसोपनकैः।
गत्वा दातुमिवौषधोज्ज्वलघृतं शङ्खं वहन्ती भव-
द्वक्षस्स्था भवरोगिणे दिशति मे किं नामृतं वत्सला॥ २३॥

उक्तमेवार्थं पुनर्विशदयति। वत्सला वात्सल्यवती श्रीर्लक्ष्मीः भवद्वक्षस्स्था भवद्वक्षस्स्थलनिवासिनी सती तव भवतः नाभिपद्मशिशवे नाभिपद्मजनुषे चतुर्मुखाय वल्याख्यसोपानकैः वल्यभिधानसोपानैः गत्वा प्राप्य औषधेन उज्ज्वलं घृतं यस्य तं शङ्खमिव स्थितमित्युत्प्रेक्षा। तव लोचने यौ पुष्पवन्तौ तयोः करचयाः किरणसमूहाः तैरर्धप्रबोधमर्धविकसितम्। अर्धमुकुलितमित्यर्थात् सिध्यति। मधुभ्राजि मधुना मकरन्देन भ्राजि प्रकाशमानम् अब्जं दातुमिव वहन्ती मे मह्यम् अमृतं मोक्षं न दिशति किम्? न ददाति किम्? दिशत्येवेत्यर्थः॥ २३॥

पश्चाद्बाहुयुगेन पद्मयुगले लक्ष्म्या समीपं स्वकं
नीते तावकमीक्षणं दिनकरश्चन्द्रश्च गोव्यापनैः।
एकं विस्फुटयन् परं मुकुलयन्नित्यं सभृङ्गस्वनं
तस्या वक्त्ररुचिं कलां कुचरुचिं किं प्रापयत्यच्युत॥ २४॥

द्विभुजा हस्तस्थितपद्मा श्रीरित्थं वर्णिता। चतुर्भुजा पश्चाद्भागगतकरद्वय-स्थपद्मद्वया वक्षस्स्था श्रीर्वर्ण्यते—न च्यावयत्याश्रितानित्यच्युतः तस्य संबुद्धिः। स्वपदं सूर्यचन्द्रपरम्। लक्ष्म्या श्रिया पश्चात् पश्चाद्भागे बाहुयुगेन बाहुद्वन्द्वेन स्वकं स्वीयं समीपं संनिधानं पद्मयुगले पद्मद्वन्द्वे विद्याभ्यासार्थं नीते सति तयोर्मध्ये एकं दक्षिणभागस्थं पद्मं तावकं त्वत्संबन्धि [ईक्षणं] ईक्षणरूपः दिनकरः सूर्यः। गोव्यापनैः

किरणव्यापनैः अन्यत्र विद्याव्यापनैः। एतेनाध्यापकत्वोक्तिः। विस्फुटयन् विकासयन् अन्यत्र स्फुटोच्चारणं कुर्वन्। भृङ्गस्वनशब्देन पद्मं प्रति अध्ययनं च व्यजयते। तस्या लक्ष्म्याः वक्त्ररुचिं मुखकान्तिरूपां कलां विद्यां प्रापयति किम्—तयोर्मध्ये नित्यं सभृङ्गस्वनं परमन्यत्पद्मं त्वदीक्षणरूपश्चन्द्रश्च गोव्यापनैर्मुकुलयन् मुकुलभावं कुर्वन् कुचरुचिं स्तनकान्तिरूपां कलां प्रापयति किमित्युत्प्रेक्षा ॥ २४ ॥

चञ्चल्लोकजयेच्छपञ्चविशिखज्यावाहरावावली-
स्वादुत्वापहमाधुरीरसपिबद्वाचासुधाशीकरैः।
जन्यान्धोमहतीसमुद्गतकलादेशैस्त्वदीशश्रुति
मातस्सिञ्चसि मा कथं मम कृते वीक्ष्यापि मे मद्दशाम् ॥ २५ ॥

हे [मे] रमे हे मातः इति संबन्धः। जन्यं युद्धम् अन्धः अन्नं यस्य तस्य नारदस्य। 'भिस्सा स्त्री भक्तमन्धोऽन्नमित्यमरः। महती महतीनामिका या वीणा तस्याः समुद्गतायाः कलायाः गानविद्याया आदेशैः विरोधिभिः। "शत्रुवदादेशः।" चञ्चती लोकानां जयेच्छा यस्य तस्य पञ्चविशिखस्य मन्मथस्य ज्यावाहयोः मौर्वीवाहनरूपयोः भृङ्गश्रेणीशुकयोः रावावल्याः ध्वनिपङ्क्तेः स्वादुत्वापहेन स्वादुत्व-चोरेण माधुरीरसेन माधुर्यरसेन पिबन्त्याः पानं कुर्वत्याः वाचाया एव सुधायाः अमृतस्य शीकरैः बिन्दुभिः मद्दशां मदवस्थां वीक्ष्यापि दृष्ट्वाऽपि त्वदीशश्रुतिं त्वन्नाथकर्णरन्ध्रं मम कृते मदर्थं कथं मा सिञ्चसि? कुतो वा नोपदिशेः। नारद-गानादपि माधुरी[भृता] वाचा मद्दैन्यं दृष्ट्वाऽपि कथं न शंससि? अतः शीघ्रं विज्ञापयेत्यर्थः ॥ २५ ॥

भोगी चन्दनगन्धसङ्गमृदुतावृत्तायतत्वैर्भवद्-
बाहुश्रीजयदी(धी)रितो वृषगिरिं मत्वा जगद्रक्षणात्।
बाहोः पोष्यघनाच्च भक्षितजगत्प्राणं घनद्वेषयुक्-
स्वं न्यूनं तत्र वीक्ष्य केतनमगाद्वल्मीकरन्ध्रं भयात् ॥ २६ ॥

भोगी सर्पः चन्दनवृक्षगन्धस्य यस्सङ्गः संबन्धः तस्मात्(?) मृदुता मार्दवं

वृत्तत्वं वर्तुलत्वम् आयतत्वं दैर्घ्यम् चन्दनगन्धसङ्गमृदुतावृत्तायतत्वान्वितैः(-तौ) भवतः तव [यौ] बाहू तयोः, [श्रियः शोभायाः] जयश्रीः (-धीः) जयसंपत्तिः (-सङ्कल्पः) [यस्य तादृशः] सन् वृषगिरिं वेङ्कटाचलम् इतः प्राप्तः; जगतो रक्षणं यस्मात्तस्मात्, पोषयितुं योग्यः पोष्यः घना मेघा महान्तश्च यस्य तस्माद्बाहोः भुजात्, भक्षितः ग्रसितः जगत्प्राणो वायुः जगतां प्राणश्च येन तम्। घनैर्महद्भिः मेघैश्च यो द्वेषः विरोधः तेन युज्यत इति घनद्वेषयुक् सचासौ स्वश्च तं न्यूनं मत्वा तव केतनं गरुडध्वजं मत्वा (वीक्ष्य) च भयात् युद्धभयात् वल्मीकरन्ध्रं वामलूरुविवरं; 'वामलूरुश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः। अगात् प्राप्तः ॥ २६ ॥

**वाराशिजादिनिजनारीसमूहकुचनीरोत्थकुड्मलगणे**
**तारेट्कलानिकरमूरीकृतोल्लसनभीरञ्चितं कृतवती।**
**स्फाराङ्गुलिव्रततिसारप्र['सून']ततिराराद्धृताङ्कुशदशा**
**क्रूरासुरेट्करिणि हा राजते नखरपारम्परी तव हरे ॥ २७ ॥**

हरति पापानीति हरिः। 'हरिर्हरती'त्यादि। तस्य संबुद्धिः। तव भवतः नखरपारम्परी नखराणां नखानां पारम्परी परम्परा। वाराशिः समुद्र तस्य (-ज्जा) आदिर्यस्य सः। सचासौ निजनारीसमूहस्य(श्च)[तस्य]लक्ष्मीप्रमुखसमूहस्य कुचनीरोत्थकुड्मलगणे कुचावे(चेष्वे)व स्तनावे(नेष्वे)व नीरोत्थकुड्मलगणे पद्मकुड्मलगणे ऊरीकृता अङ्गीकृता उल्लसनस्य विकासस्य भीःसती (यया) भया (तथा) सती। तारेट् चन्द्रः तस्य कलानिकरं किरणसमूहम् अञ्चितं पूजितं यथा तथा कृतवती। स्फाराणां विस्ताराणामङ्गुलीनामेव व्रततीनां लतानां, 'वल्ली तु व्रततिर्लते'त्यमरः। सारप्रसूनततिः सारयुक्तकुसुमततिः पुष्पावस्थेत्यर्थः। आरात् समीपे। आराद्दूरसमीपयोरिति निघण्टुः। क्रूरः दुष्टः असुरेट् राक्षसाधिपो हिरण्यकशिपुः स एव करी गजः तस्मिन् क्रूरासुरेट्करिणि धृता अङ्कुशस्य दशा यस्यास्सा। कृतान्तददशेति पाठे कृता रचिता अन्तदा नाशदा दशा यया। तस्य नाशिकेत्यर्थः। राजते प्रकाशते। हेत्याश्चर्ये ॥ २७ ॥

अन्यावार्यातिभीमप्रतिकलरहितापारपाप्मास्मदीक्षा
दोषार्तौ पुष्पवन्तावरिदरकपटौ त्वन्मुखेनेक्षणोत्कौ ।
इच्छन्तौ साक्षितां स्वां मदितरविषयां पापनुत्तिं नु नात्त-
प्रत्युक्ती त्वत्कुतो वा परमिह वसतः किं वृषक्ष्माधरेश ॥ २८ ॥

हे वृषक्ष्माधरेश वेंकटाचलपते अन्यानि लोकविलक्षणानि अवार्याणि निवारयितुमशक्यानि अतिभीमानि अतिभयङ्कराणि प्रतिकलेन प्रत्यन्तरेण रहितानि अपाराणि अनन्तानि यानि(?) पाप्मानि येषां तेषामस्माकमीक्षया वीक्षणेन यो दोषः प्रत्यवायः तेनार्तौ पीडितौ । मदीक्षेति वक्तव्येऽपि स्वकार्यनिन्दाभिप्रायेणा-स्मदिति बहुवचनोक्तिः । अरिश्च (-रि च) दरश्च अरिदरौ शङ्खचक्रे इति कपटो व्याजो ययोस्तौ । कपटोऽस्त्री व्याजदम्भेत्यमरः । पुष्पवन्तौ चन्द्रसूर्यौ त्वन्मुखमेव त्वद्वक्त्रमेव इनस्सूर्यः तस्य दर्शने इक्षणे उत्कौ यत्नवन्तौ मदीक्षणपापनिवृत्त्यर्थं त्वन्मुखसूर्येक्षणोत्कावभूदि(तामि)ति भावः । 'सूर्योऽपि सूर्यान्तर'मित्यादि । सूर्यावलोकनार्थगमनेऽपि तत्रैव स्थितिः कुत इत्यत्राह— इच्छन्ताविति । स्वां स्वीयां सूर्यचन्द्रसंबन्धिनीं साक्षितां साक्षित्वम् । 'आदित्यचन्द्रा'विति चतुर्दशानां नरवृत्तान्तसाक्षित्वात् तेष्वेतयोरपि प्रवेशादिति भावः । मत्तः इतरः अन्यः विषयः यस्यास्तां, पापनुत्तिं नु मत्पापनाशं नु इच्छन्तौ काङ्क्षमाणौ कुतो वा हेतोः त्वत् त्वत्तः नात्तप्रत्युक्ती नञर्थस्य नशब्दस्य सुप्सुपेति समासः । अस्वीकृतप्रत्युत्तरौ इह त्वत्सन्निधावेव परमत्यन्तं वसतः, किमिति प्रश्ने । एतद्दर्शनपापं त्वद्दर्शनान्निवृत्तम् । पुनर्दर्शने पापं स्यादिति अत्रैव वसतः किमित्यर्थः[1] ॥ २८ ॥

---

1. "पूर्वं एतस्य दर्शनेन जातं पापं त्वन्मुखसूर्यदर्शनान्निवृत्तम् । पुनर्गमने पुनस्त-द्दर्शनात् आवयोः पापं स्यात् । एतदन्यविषयं आवयोः साक्षित्वाधिकारं देहि । नोचेत् अस्य पापं वा निवर्तय । नो चेन्न गच्छाव इति प्रार्थितवन्तौ । 'एताभ्यां त्यक्तं एतस्य पुण्यपाप-साक्षित्वाधिकारं कः कुर्यात् । एतस्य पापं मयाऽपि वारयितुमशक्यम् । अतः किं कुर्याम् ।' इति [इति]कर्तव्यतामूढतया वा, परत्वेन अनादरेण वा, केनापि हेतुना भगवता प्रत्युत्तरं दत्तम् । अतः अत्रैव वसतः किमित्यर्थः ।"

धराधरधराधरं तव सुधाझरीमाधुरी-
निराकृतिधुरंधरं दृढतरं निपीयाहवे ।
दरस्ता सुहृद्द्विषोर्ध्वनिमिषेण हि श्रोत्रयोः
सुधागरलवृष्टिकृद्भवति पुष्टिनष्टयोः कृते ॥ २९ ॥

धराधरं गोवर्धनं धरतीति धराधरधरः तस्य संबुद्धिः । आहवे युद्धे तव दरः शङ्खः । 'दरोऽस्त्री शङ्खभययोरीषदर्थेऽपि चाव्ययम्' इति निघण्टुः । सुधाझरीमाधुरीनिराकृतिधुरंधरं, सुधा अमृतं तस्याः झरी प्रवाहः तस्या माधुरी माधुर्यं, तस्या निराकृतौ निवारणे धुरं भारं वहतीति । तस्या गर्वनिरासकमित्यर्थः । तव अधरमधरोष्ठम् अत्यन्तं दृढं दृढतरम् । 'डतरडतमौ प्रत्ययाविति तरप्प्रत्ययः(?) । तरप्तमपाविति घप्रत्ययश्च(?) । निपीय पीत्वा । सुहृच्च द्विट् च सुहृद्द्विषौ मित्रशत्रू तयोः श्रोत्रयोः श्रवणयोः पुष्टिनष्टयोः लाभालाभयोः कृते ध्वनिमिषेण ध्वनिव्याजेन सुधागरलयोः अमृतविषयोः वृष्टिं वर्षं करोतीति सुधागरलवृष्टिकृद्भवतीत्यर्थः । द्विषां नाशार्थं सुहृदां पुष्ट्यर्थं ध्वनिं करोतीत्यर्थः । "स घोषो धार्तराष्ट्राणा"मिति । मेघस्तु सामुद्राम्भः पीत्वा कुल्यासु मधुरं वर्षति । तटाकस्थं जलमादाय क्षेत्रे वर्षति । शङ्खस्तु अधरामृतं पीत्वा शत्रुकर्णे विषात्मना सुहृत्कर्णे अमृतात्मना एकदैव वर्षति अहो इत्यर्थः[1] ॥ २९ ॥

स्यालं श्रीश दिनेदिनेऽक्षतजलध्युत्पत्तिमस्तोपम-
त्वद्वक्त्राभिभवेच्छयाऽऽगतमथ त्वत्पन्नगेन क्षतम् ।
हीतं पीतकलङ्कदुर्भरगरं हा कालचक्रे विधुं
विन्यस्य भ्रमयत्यजेन विगरं कर्तुं स्वात्तत्पितुः ॥ ३० ॥

हे श्रीश श्रियःपते दिनेदिने प्रतिदिनम् अक्षतानित्यादि(अक्षता नित्या) जलधेः समुद्रात् उत्पत्तिर्जन्म यस्य तम् । लडयोरभेदाद्दिनेदिने मन्दबुध्युत्पत्तिमन्तम् । तदेव दर्शयति— अस्तेति । अस्ता निरस्ता उपमा सादृश्यं यस्य[तस्य]त्वद्वक्त्रस्य

1. "देवासुरयुद्धे देवेषु मूर्छितेषु भगवता आगत्य शङ्खे पूरिते तावतैव 'स घोषो धार्तराष्ट्राणां' इति रीत्या दैत्या मूर्छिता मृताश्च भवन्ति । देवास्तु जीवन्तीत्यर्थः । "

त्वन्मुखस्य अभिभवे तिरस्कारे इच्छया यत्नेन आगतं प्राप्तम् । अथ आगमनानन्तरं त्वत्पन्नखेन त्वत्पादनखेन क्षतम् महात्मनो धिक्कुर्वतां पादताडनमेव निश्चितमित्यर्थः । स्यालत्वात् पादताडित इति स्फुरति । नखसाम्यमेव नास्ति, कुतो वक्त्रसाम्यमिति भावः । ह्रीतं लज्जावन्तम् अत एव पीतं कलङ्क एव दुर्भरं भरणायोग्यं गरलं यस्य तम् । स्यालं भावुकं विधुं चन्द्रं तत्पितुस्समुद्रस्य रवात् पुत्रमरणं स्यादिति भयकृतान्निनादात् [ "चन्द्रोदयसमये समुद्रघोषो महान् । विगरं वीतगरलं कर्तुम् । गरलनिवर्तने श्रीशत्वस्यालत्वश्वशुरनिनादा हेतवः" ।] अजेन चतुर्मुखद्वारा कालचक्रे शिंशुमारचक्रे विन्यस्य स्थापयित्वा भ्रमयसि । भ्रमितं करोतीति वा पाठः[1] । हेत्याश्चर्ये[2] खेदे वा ॥ ३० ॥

**मत्वाऽऽस्याक्रमणोत्कमक्षियुगलं त्वच्छ्मश्रुरेखा नता**
**तन्मध्यं तव चोन्नतानुनयने(कृत्)नासा जगाम श्रुतिः ।**
**स्वानुलङ्घनधीः समीपमलिकं भ्रूसीमलोलीकृते**
**मूर्धन्यश्च कचं स भागमपरं भीत्या किमु श्रीनिधे ॥ ३१ ॥**

हे श्रीनिधे लक्ष्मीनिवास अक्षियुगलं नेत्रद्वन्द्वम् आस्यस्य मुखस्य आक्रमणे आक्रान्तौ उत्कमुत्सुकं मत्वा स्वनिराकरणभीत्या त्वच्छ्मश्रुरेखा नता नम्रा किमिति सर्वत्र संबध्यते । मृद्वी श्मश्रुरेखा नमनेन काल्यापनं कृतवती किम् । स्वाभाविकनमनस्य भीतिहेतुकत्वमुत्प्रेक्ष्यते । उन्नता नासा नासिका स्वनिराकरण-भयेन अनुनयने निमित्ते सति । अनुनयनशब्दोऽनुनयनजन्यप्रसादपरः, नेत्रद्वन्द्व-प्रसादनार्थमित्यर्थः । तन्मध्यमक्षियुगलमध्यं जगाम । नासेति स्त्रीलिङ्गात् स्त्री व्यज्यते । महत्या स्त्रिया अनुनयने कृते अवश्यमनुगृह्य निराकरणं न करोतीति भावः । अनुनयकृदिति वा पाठः । अनुनयनं कुर्वती सती जगामेत्यर्थः । एकनेत्रसमीपगमने अपरस्य कोपः स्यादिति तन्मध्यगमनम् । श्रुतिरपि श्रोत्रमपि अनुनयनार्थं स्वानुलङ्घने स्वस्यानतिक्रमणे धीर्यस्यास्सा स्वानुलङ्घनधीः । चक्रपाणिव-

---

1. "लोके कृतगरलपानं जनं तन्निवर्तनाय कुलालचक्रे भ्रमयन्ति । तद्वत् ।"
2. 'हीत्याश्चर्ये' इत्यन्यत्र ।

ध्यधिकरणसप्तमी । श्रुत्युल्लङ्घनस्यायुक्तत्वादिति भावः । समीपं[1] जगाम । अलिकं फालम् । भ्रूरेव सीमा । नयनफाल्योरान्तरालिकसीमा । तस्याः अक्षियुगलेन चञ्चलीकरणात् । अक्षिचलने भ्रूचलनादिति भावः । तत्कृतां मर्यादां (तामर्यादां?) कथयितुं मूर्धन्यं मूर्ध्नि भवं सर्वोत्कृष्टं च कचं प्रति जगाम । स कचोऽपि भयेन स्वस्य मृदुत्वात् स्वतिरस्कारे किं स्यादिति भयेन अलिकस्य वचनमनादरेणाशृण्वन्निव अपरं भागं पश्चाद्भागं प्रति कार्यान्तरासक्त्येव जगाम किमित्यर्थः ॥ ३१ ॥

**न्यक्कृतकमलोल्लसितं**
**श्रुत्यन्तनिषक्तमस्तमिथ्यादृष्टि (कृ?) ।**
**दृष्ट्वेव भक्तबृन्दं**
**दृग्द्वयमासीत्तथा वृषाद्रीश ॥ ३२ ॥**

हे वृषाद्रीश । न्यक्कृतेत्यादिविशेषणानि दृग्द्वयपक्षे प्रथमान्तानि(?) । भक्तपक्षे द्वितीयान्तानि । तव दृशोः दृष्ट्योः द्वयं द्वन्द्वम् इदं कर्तृ । न्यक्कृतं तिरस्कृतं कमलाया लक्ष्म्याः संपदः उल्लसितमुल्लासो यस्य तत्, संपद्यनासक्तमित्यर्थः । श्रुत्यन्तेषु वेदान्तेषु निषक्तमत्यन्तासक्तम् अस्तमपगतं(?) मिथ्यादृष्टिः देहात्मज्ञानं यस्य तत् देहात्मभ्रमरहितमित्यर्थः । तव भक्तबृन्दं भक्तसमूहं दृष्ट्वेव स्वयमपि तथा न्यक्कृतेत्यादिविशेषणविशिष्टमासीत् अभवत् । न्यक्कृतं तिरस्कृतं कमलस्य पद्मस्य उल्लसितं विकासो यस्य तत्, कर्णान्तव्यापि, भ्रमरहितं, भगवद्दृष्टेर्भ्रान्त्यसंभवादिति भावः ॥ ३२ ॥

**आघ्रातुं मुखमीश किंनु भवता कुन्दव्रजः प्रापितः**
**किं कारुण्यसुधाब्धिफेनपटली चित्ताद्बहिर्निर्गता ।**
**लग्ना त्वद्वदनेन्दुपानसमये माधुर्यलोभाद्दरात्**
**किं लक्ष्मीरथवा (-रदभा) मुकुन्द किमिदं मन्दस्मितं तेऽथवा ॥ ३३ ॥**

हे ईश भवता कुन्दव्रजः मल्लिकासमूहः आघ्रातुमाघ्राणं कर्तुं मुख वक्त्रं

1. अक्षियुगलस्य समीपम् ।

प्रति प्रापितः किम्। चित्तादन्तःकरणाद्बहिः निर्गता तव कारुण्यमेव त्वद्दयैव सुधाब्धेः क्षीरसमुद्रस्य फेनपटली किम् फेनततिः किम्? लक्ष्मीः(क्ष्म्या) कर्त्री (र्त्र्या) त्वद्वदनेन्दुः त्वन्मुखचन्द्रः तस्य पानसमये वरात् श्रेष्ठात् माधुर्यलोभात् माधुर्यलौभ्यात् लग्ना सक्ता लक्ष्मीः अथवा(लक्ष्मीरदभा) [श्री]दन्तकान्तिः किम्? अथवा नो चेत् मन्दस्मितं वा मन्दहासो वा? इतीत्थमिति निश्चयाभावात् [अ]निश्चिता(श्चया)न्तस्सन्देहालङ्कारः ॥ ३३ ॥

**बन्धूकाम्बुजकुन्दचम्पकसुमान्योष्ठाक्षिदन्तावली-**
**घ्राणं मुख्यरुचीहया समभवन् युग्मं तु सारङ्गयोः ।**
**शाख्यन्तस्पृहयाल्वदभ्रमहिमश्रीदृक्त्वमाश्रित्य किं**
**तव श्रीप्रिय सर्वगन्धरससल्लब्ध्या सदा मोदते ॥ ३४ ॥**

हे श्रीप्रिय लक्ष्मीप्रिय बन्धूकः बन्धुजीवकः; बन्धूको बन्धुजीवक इत्यमरः। अम्बुजं पद्मं कुन्दः मल्लिकाचम्पककुसुमानि(?) एतेषां द्वन्द्वः बन्धूकाम्बुजकुन्दचम्पकसुमानि। मुखे भवा मुख्या भवन्मुखसंबन्धिकान्तिमनुभवितुमिच्छयेत्यर्थः। ओष्ठः अधरोष्ठः अक्षिणी नेत्रे दन्तावली दन्तपङ्क्तिः घ्राणं नासिका ओष्ठा(ष्ठो)क्षि(णी) दन्तावली घ्राणं चेति द्वन्द्वः। प्राण्यङ्गत्वादेकवद्भावः। समभवन् समभूवन्। सारङ्गयोः भृङ्गयोर्युग्मं द्वन्द्वम्। 'सारङ्गश्चातके भृङ्गे' इत्यमरः। शाख्यन्तस्पृहयाल्वदभ्रमहिमश्रीदृक्त्वं शाख्यन्तेषु वृक्षाग्रेषु वेदान्तेषु च स्पृहयालु स्पृहायुक्तम् अदभ्रौ(भ्रो) अधिकौ(को) महिमानौ(मा) [ययोस्ते] श्रियो लक्ष्म्या दृशौ तयोर्भावस्तत्त्वम्। यद्वा अदभ्रमहिमानं श्रियं पश्यतीति अदभ्रमहिमश्रीदृक् तस्य भावस्तत्त्वं पुरुषकारभूतलक्ष्मीध्यनासक्तत्वं प्रार्थ्यते। आश्रित्य तव त्वन्मुखे सर्वगन्धानां सर्वरसानां सल्लब्ध्या सौन्दर्यप्रशस्तलाभेन(?)अन्यत्र चम्पकगन्धरसानुभवो नास्ति। अन्येषां तु एकदा एकैकस्य। त्वन्मुखे तु चम्पकगन्धरससहितानां सर्वेषामेकदैव लाभ इत्यर्थः। सर्वगन्धस्सर्वरस इति श्रुत्युक्तस्य सच्छब्द['वाच्य']स्य लाभेन चेत्यर्थः। सर्वगन्धानां (सर्वोगन्धः सर्वो) रसो यस्य सः। सचासौ(?) सच्च सर्वगन्धरससत् परब्रह्म तस्य लब्ध्या लाभेन सदा सर्वदा मोदते किम् ॥ ३४ ॥

आराध्याराधन(क)परि-
शोधकवेदावलीधियै भवतः ।
छन्दःप्रवक्तुरास्ये
विमले रदमालिके भवतः ॥ ३५ ॥

छन्दसां वेदानां प्रवक्तुः प्रवचनकर्तुः भवतः तव आस्ये मुखे विमले स्वच्छे रदमालिके दन्तपङ्क्ती, आराधयितुं पूजयितुं योग्यमाराध्यम्। आराधयतीत्याराधकम्। स्वार्थे कः(?) पूजायोग्यपदार्थः (यज्ञादिः) एतेन आराध्यं चाराधनं चाराध्याराधने तयोः परिशोधकः विमर्शको यो वेदः आम्नायः। 'श्रुतिस्त्री वेद आम्नाय' इत्यमरः। तस्यावली(ल्यौ) पङ्क्तिः(ङ्क्ती)। आराध्यभूतब्रह्मस्वरूपप्रतिपादकोत्तरभागः आराधनभूतयज्ञादिस्वरूपप्रतिपादकः पूर्वभागः [इत्येवं द्वेधा स्थितौ] पूर्वोत्तरभागौ कर्मकाण्डब्रह्मकाण्डौ किमिति धियै बुध्यै भवत आस्तामित्यन्वयः। अत्र 'वेदास्सर्वे षडङ्गा' इत्यादिश्लोकोऽनुसन्धेयः ॥ ३५ ॥

अघटितघटनालक्ष्यं
वक्त्रेन्दौ श्मश्रुतिमिरमेतत्ते ।
नासाचम्पकानकट
भ्रूभृङ्गश्रेणिकेव लक्ष्मीश ॥ ३६ ॥

हे लक्ष्मीश ते तव वक्त्रं मुखमेव इन्दुश्चन्द्रः तस्मिन् [एतत् श्मश्रेव तिमिरम्] नासैव चम्पकं चम्पककुसुमं तस्य निकटे[भ्रू] भृङ्गाणां भ्रूभ्रमराणां श्रेणिकेव पङ्क्तिरिव अघटितघटनालक्ष्यम्। [चन्द्रतिमिरयोर्विरोधात्] चम्पकभ्रमरयोः विरोधाच्च ॥ ३६ ॥

जित्वा प्राकृतसाधनैर्जगदथो साध्येतरांस्तैर्मुनीन्
दिव्ये ते धनुषी भ्रुवौ रतियुतस्तूण्यौ च जङ्घे स्मरः ।
वर्ष्मेन्दीवरजालमङ्घ्रिकरदृग्वक्त्रं च पद्मान्यहो
यत्नैः प्राप्य चकार पूरुषमणे तैर्वल्लवीस्त्वद्विटाः ॥ ३७ ॥

हे पूरुषमणे पुरुषश्रेष्ठ [स्मरः] [" धनुर्द्वयसम्पादनप्रयोजनलाभाय

रतियुतं इति विशेषणम् । अत एव 'धुनुषी रतिपञ्चबाणयोः' इति नैषधः''] प्राकृतैः प्रकृतिविकारैः साधनैः इक्षुधनुःपञ्चबाणाद्यैः । 'अरविन्दमशोकं चे' त्यादि । जगत् मुनिव्यतिरिक्तं कृत्स्नं जगज्जित्वा ब्रह्मादिकृत्स्नं जगत् कामवशं कृत्वा अथो अनन्तरं तैः प्राकृतसाधनैः साध्याज्जगतः इतरानप्यतिरिक्तान् मुनीन् कर्म, दिव्ये अप्राकृते ते तव भ्रुवावेव धनुषी । दिव्यपदं यथायोग्यं तूण्यादिष्वपि संबध्यते । जङ्घे एव तूण्यौ । वर्ष्म शरीरमेव इन्दीवरजातं कुवलयसमूहम् । अङ्घ्री पादौ करौ हस्तौ दृक् नेत्रं वक्त्रं चेति अङ्घ्रिकरदृग्वक्त्रमिति द्वन्द्वः । प्राण्यङ्गत्वादेकवद्भावः । यत्नैः [''तपः प्रभृतिभिः प्राप्य तैः''] पूर्वोक्तैः दिव्यैस्साधनैः त्वमेव विटो यासां तास्त्वद्विटाः वल्लवीगोपिकाः चकार कृतवान् । तदामोहकं सर्वावयवसौन्दर्यमिति भावः ॥ ३७ ॥

**साराचिरद्युतिकनीराभिरामतरधाराधराधिपघटा-**
**दोराहवप्रचयधीरानुशासितभगोराशिजायुततनो ।**
**स्वाराण्मुखाग्निमुखहीरालियुङ्मकुटभाराजिदीपपटली-**
**नीराजिताङ्घ्रियुग नारायणाद्यपरमारादशर्म हर मे ॥ ३८ ॥**

सारं सारयुक्तं चिरा[त्]द्युतिर्यस्य न भवतीति अचिरद्युतिकम् अस्थिरकान्तिकमित्यर्थः[1] । यन्नीरं जलं तेन अभिरामतराः सुन्दरतराः ये धाराधराधिपघटाः मेघसमूहाः । 'धाराधरो जलधर' इत्यमरः । ताभिः दोराहवप्रचये बाहुयुद्धोपचये धीरा दृढा अनुशासिता शिक्षिता भा कान्तिर्यस्यास्सा गोराशिजा लक्ष्मीः तया युक्ता तनुर्यस्य तस्य संबुद्धिः । स्वाराण्मुखानामिन्द्रप्रमुखानाम् अग्निमुखानां देवानां हीरालियुजां वज्रपङ्क्तियुक्तानां मकुटानां भाराजिभिः कान्तिपङ्क्तिभिरेव दीपपटलीभिर्दीपसमूहैः नीराजितं नीराजनीकृतम् अङ्घ्रियुगं पादयुग्मं यस्य तस्येति संबुद्धिः । अद्य इदानीम् । आद्येति वा पदविभागः । आदिभूतेत्यर्थः । हे नारायण सकलजनाधार मे मम आराद्दूरम्, अशर्म दुःखं हर परिहर[2] ॥ ३८ ॥

---

1. ''सारविद्युज्जलाभिराम....'' इत्यन्यत्र

2. श्लोके 'परमारात्' इत्यत्र 'परम सर्वोत्कृष्ट' इति विभज्य व्याख्येयम् । 'परम्' इति विभज्य 'अद्य परं अद्यैव' इति वा, 'परं आरात् अत्यन्तदूरे' इति वा ।

**बृन्दीभूततमिस्रबुद्धिकलयच्चण्डांशुभामण्डली-**
**शङ्कामङ्कुरयत्सुरत्नरुचिरं शेषाचलाधीश्वर ।**
**बद्धं मूर्द्धजकुड्मलं कबलयन्नम्राघराश्यागिरत्-**
**त्वत्कारुण्यकलामिव प्रकटयत्येतत् किरीटं तव ॥ ३९ ॥**

हे शेषाचलाधीश्वर हे वेंकटाचलाधीश्वर तव भवतः अबृन्दं बृन्दं संपद्यमानं भूतं बृन्दीभूतम् । अभूततद्भावे च्विः । समूहीभूतमित्यर्थः । यत्तमिस्रमन्धकारः तस्य बुद्धिं मनीषां कलयन् निराकरिष्यन् । कलिः कामधेनुः । यश्चण्डांशुः सूर्यः तस्य भामण्डली कान्तिसमूहः तस्याः शङ्कां सन्देहमङ्कुरयन्ति उत्पादयन्ति यत्सुरत्नानि यच्छोभनरत्नानि तैः रुचिरं सुन्दरम् । बद्धं पुञ्जीभूततया समीचीनतया कृतं मूर्द्धजाः शिरोरुहा एव कुड्मलं, कुड्मलाकारकेशसमूहमित्यर्थः । कबलयत् आक्रममाणम् ।. एतत् दरीदृश्यमानं किरीटं नम्राणां नमस्कुर्वताम् अघानां पापानां राशिं समूहम् आसमन्तात् गिरत् भक्षयत् यत्कारुण्यं त्वदीयदया तस्य कलां पापभक्षणरूपविद्यां प्रकटयतीव प्राकट्यं करोतीवेत्यर्थः ॥ ३९ ॥

**अलिजलधरबलभिदुपल-**
**तिमिरलघिमकलनसबलकबररुचः ।**
**जनदृगगुणपरिहृतिमति-**
**कृतपरिवृति भवति तव नु सुम मकुटम् ॥ ४० ॥**

हे सुम शोभमाना प्रकाशमाना मा लक्ष्मीः यस्य तस्य संबुद्धिः श्रीश, तव मकुटं किरीटम् अलिर्भ्रमरः जलधरः मेघः बलभिदुपलः इन्द्रनीलः तिमिरमन्धकारः एतेषां लघिमा लघुत्वं तस्य कलने संपादने सबलायाः बलयुक्तायाः तज्जयिन्या इत्यर्थः । कबररुचः कचकान्त्याः जनानां दृगगुणस्य दृष्टिदोषस्य परिहृतिमत्या परिहारेच्छया कृता परिवृतिरावरणं यया (यस्य) तत्तादृशं भवति अभविष्यन्नु(?) । अतिसुन्दरकचान्निकृष्टमकुटस्य कचालङ्कारत्वासंभवात् दृष्टिपरिहाराय कचमावृणोति

किमित्यर्थः ॥ ४० ॥

श्रीभृद्रुद्धकचं श्रमैकफलदं किं ते किरीटं महत्
चित्रं मन्मकुटं शिरस्स्थमपि मे बिभ्रद्भरं भासयत् ।
सद्गम्यं परमं पदं त्ववति ते प्राचीनमप्युत्तरं
सर्वस्मात्परिपूरयत्युरुतराः स्वाशा महद्वर्ण्यते ॥ ४१ ॥

हे श्रीभृत हे लक्ष्मीभृत् रुद्धः प्रतिरुद्धः कचः केशपाशो यस्य तत् कचकान्त्याच्छादकत्वात् शोभाकरत्वाभावात् श्रमैकफलदं श्रम आयासः एको मुख्यः यस्य तत् तच्च तत्फलं च तद्ददातीति श्रमैकफलदं तद्धारणात् श्रमात्मकफलमेव शिष्यत इत्यर्थः । ते तव किरीटं मकुटं किं महत् किमधिकम्? मत्किरीटम्, त्वत्पादुकारूपमिति गूढाभिप्रायः । चित्रं विचित्रम् । चित्रत्वमेवाह—मन्मकुटं मत्किरीटं शिरस्स्थमपि मे मम भरं भारं बिभ्रत् भासयत् तद्धारणमारभ्यैव जीवस्य स्वरूप-प्रकाशात् तत्पूर्वमसत्प्रायत्वान्मामाभासयदित्यर्थः । "असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु"रित्युक्तेः । सतां सत्पुरुषाणां नक्षत्राणां च गम्यं प्राप्यं लभ्यं च ते भवतः परमम् उत्कृष्टं पदं वैकुण्ठमाकाशं च अवति रक्षति, वैकुण्ठं रक्षतीत्यर्थः । पादं लीलाविभूतिमवतीति च । पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवीति श्रुतेः । अनेन पादरक्षाशब्दार्थ उक्तः । किं च प्राचीनं प्राग्देशस्थं पुरातनं च सर्वावयवनिकृष्टत्वादस्य सर्वस्मादुत्कृष्टत्वं सर्वावयवेभ्यः उत्तरमुत्तरभागस्थमुत्कृष्टम् । सर्वे वेदा यत्पदमामनन्तीति श्रुतेः । उरुतरा अधिकतराः सुयोग्याः आशा दिशः मनोरथांश्च परिपूरयति । अतश्चित्र-मिदं महत् । एतन्महत्त्वं वर्ण्यते । त्वत्किरीटं तु तव भारभूतं केशपाशच्छादकत्वान्न प्रकाशकम् । कस्याप्यप्राप्यत्वात् अरक्षकत्वात् अनभीष्टत्वाच्च । तस्मात् किं महत्? एतादृशत्वत्किरीटवर्णनेन मम किं प्रयोजनम्? मम प्राप्यप्रापकभूतं मन्मकुटमेव वर्ण्यत इत्यर्थः ॥ ४१ ॥

**साक्षिण्याप्ततमा दयां तव गता सर्वार्थविन्माधुरी-**
**युक् श्रुत्यन्तपदाभिराममनिनदा सर्वैस्त्वदीयैस्सह ।**
**त्वद्घण्टैव सहस्रधा निकटभाग्ब्रूते जगद्धूर्वहं**
**त्वद्भून्मन्मकुटप्रसिद्धिमधिकां श्रीवल्लभ श्रूयताम् ॥४२॥**

त्वन्मकुटे को वा साक्षीत्यत आह—हे श्रीवल्लभ वेंकटाचलपते [साक्षिणी] साक्षिभूता आप्ततमा अत्यन्तमाप्ता तव भवतः दयां गता दयाविषयभूता दयाशतकवक्त्री च सर्वार्थवित् सर्वज्ञा सर्वतन्त्रस्वतन्त्रा च । उक्तं हि वादिभीकरगुरुभिः—* अपि तत्सहधर्मिणीकृपात्ताखिलतन्त्रप्रभुताक एष सूरिरिति । [माधुरीयुक्] श्रुतिः वेदः अन्ते यस्य तत् श्रुतेराद्यमित्यर्थः । तच्च तत् पदं च प्रणवमोङ्कारः तेनाभिरामः सुन्दरो निनदः ध्वनिर्यस्यास्सा ओमिति नादं कुर्वतीत्यर्थः । यद्वा माधुरीयुक्श्रुत्यन्तपदेन वेदान्ताचार्य-शब्दो विवृतः । उक्तं हि सप्तत्याम्—* "इहरङ्गपतिप्रसादलब्धे"त्यादि । सर्वैस्समस्तैः त्वदीयैस्त्वत्संबन्धिभिशठकोपादिरूपैः अवतीर्णैः विष्वक्सेनादिभिस्सह तैरपि तत्तत्र मन्मकुटवर्णनं कृतमित्यर्थः । त्वद्घण्टैव घण्टाधिष्ठानदेवता नित्यसूरिर्वेदान्ताचार्य इत्यर्थः । उक्तं हि तैरेव संकल्पसूर्योदये—* "विलासिनी विबुधवैरिवरूथिनीना"मित्यादिना । सप्तत्यां च—* भाद्रपदमासेत्यादिना । चण्डमारुते च—* तुरगवदनहेषाजृम्भितेत्यादिना । जगतां लोकानां धुरं भारं वहतीति जगद्धूर्वहं त्वां बिभर्तीति जगद्धूर्वहत्वद्भृत् तच्च तन्मकुटं यत्किरीटं तस्य प्रसिद्धिं निकटभाक् सती सहस्रधा पादुकासहस्ररूपेण ब्रूते वदतीत्यर्थः । श्रूयतां त्वयेति शेषः । विष्वक्-सेनादिभिस्तत्तत्त पादुकावर्णनात् तेषां सहोक्तिः[1] ॥ ४२ ॥

**शेषत्वेन निरूपितं गुरुवरैस्तच्छेषतामाश्रितैः**
**स्वामित्वं निरुपाधिकं भजदहो निर्दोषमत्स्वत्वभाक् ।**
**लक्ष्मीभागधरीकृतं तु भवता लोकानुकूलं पुरा**
**त्वामुद्धास्य तव प्रभुत्वमकरोन्नो वेत्सि किं तत्प्रभो ॥ ४३ ॥**

अचेतनघण्टायाः कथं साक्षित्वम्? तत्राह । लक्ष्मीं श्रियं भजतीति

1. दूरान्वयेऽपि 'सर्वैस्त्वदीयैः सह श्रूयताम्' इत्यपि सुवचम् ।

लक्ष्मीभाक् तस्य संबुद्धिः नित्यश्रीरिति वा पाठः। नित्याः श्रियः शोभा संपत्तिः पद्मा (शोभासम्पत्तिपद्माः) यस्य तस्य संबुद्धिः। बहुवचनान्तसमासत्वान्नित्यश्रीकेति न प्राप्तम्। तस्य मन्मकुटस्य शेषतां शेषभूततामाश्रितैः प्राप्तैः गुरुवरैः विष्वक्सेनादिभिः शेषत्वेन स्वशेषभूतत्वेन *निवासशय्यासनपादुकेत्याद्युक्तरीत्या फणिराजत्वेन निरूपितं निरुपाधिकम् *दासभूताः स्वतस्सर्वे इत्यादिना उपाधिरहितं स्वामित्वं मत्स्वामित्वं भजदपि भजमानमपि निर्दोषं चोरादिबाधारहिततया निर्दोषं मत्स्वत्वं मत्स्वामित्वं मद्धनत्वं च भजतीति निर्दोषमत्स्वत्वभाक् भवता त्वया अधरीकृतं तिरस्कृतं पादस्याधस्ताच्च कृतं सत् क्रियमाणं सत् लोकानुकूलं जनानुकूलं यथातथा त्वां भवन्तम् उद्वास्य निराकृत्य पुरा त्रेतायुगे तव प्रभुत्वम् अकरोत् कृतवान् ( वत् )। लोके कश्चन पुरुषस्तिरस्कृतस्सन् समयं प्रतीक्ष्य तत्पदमनुभुङ्क्ते तद्वदिति भावः। रामवनवाससमये पादुकायाः पट्टाभिषेको द्रष्टव्यः॥ ४३॥

**गावो यत्र निरूप्यमाणविलसद्रूपानुगच्छध्द्दः**
**सोत्कण्ठा विचरन्त्यहो सुमनसां यद्वाऽप्यजानां गवाम्।**
**शीर्षेषु प्रतिभाति निर्मलदशां त्वद्भत्युपायात्मता**
**यस्मिन्नेव विभाति तेन सदृशं लक्ष्मीश किं वर्तते॥ ४४॥**

इदमपि विरुद्धभाषणम्। एतादृशं न जानामीत्यत आह। हे लक्ष्मीश लक्ष्मीपते सुमनसां देवानां विदुषां च पुष्पाणां च। स्त्रियः सुमनसः पुष्पमित्यमरः। निरूप्यमाणं युक्तिभिर्निर्णीयमानं विलसत् प्रकाशमानं रूपं यत् तदनुगच्छन्ति हृन्दि हृदयानि यासां तास्सत्यः। स्वान्तं हृन्मानसं मन इत्यमरः। निरूप्यमाणं विलसच्च रूपं यासां ताः अनुगच्छन्ति जनानां हृदयानि यासां ताश्च सुशब्दतया रूपनिष्पत्तियोगाः अत एव मनोहराश्चेत्यर्थः। सुमनःपक्षे भायुक्ततया मनोहराश्चेत्यर्थः। उत्कण्ठया अभिलाषया(षेण) सहिताः सोत्कण्ठास्सत्यः यत्र यन्मकुटे विचरन्ति संचरन्ति मन्मकुटं स्तुवन्तीत्यर्थः। अन्यत्र प्रकाशयन्तीत्यर्थः। अहो आश्चर्यम्। यच्च मत्किरीटम् अजानां छागानां गवां धेनूनां च वाचामित्यर्थः। अन्यत्र पूजार्हत्वात्(?) शीर्षेषु शिरस्सु प्रतिभाति प्रकाशते। नजायन्त इत्यजानां नित्यानां गवां वाचां वेदानां शीर्षेषु प्रतिभाति वेदान्तवेद्यमित्यर्थः। निर्मला मलरहिता

दृक् ज्ञानं येषां तेषां सम्यक् परिशीलकानां इत्यर्थः । त्वं गतिः कर्ता यस्य सः यस्मिन् त्वत्कर्तृकगमने त्वां प्रति गतिः प्राप्तिः त्वत्कर्मकप्राप्तौ च उपायभूतं साधनम् आत्मा स्वरूपं यस्य सः तस्य भावः उपायात्मता यस्मिन्मन्मकुटे विभाति प्रकाशते तेन मन्मकुटेन सदृशं समानं किं वर्तते न किंचिदपीत्यर्थः । किमिति प्रश्ने ॥ ४४ ॥

**गेहादेर्मनुजास्त्रिविष्टपसदस्तेषां पयोजासनः**
**तेषां तस्य च वेंकटाचलपते श्रीशस्य (ते श्रीश) पादद्वयम् ।**
**यत्तस्यापि हि पादुकामणिमयं संरक्षकं पुंमणि-**
**व्याकीर्णं तदनन्यरक्षककथं मां सर्वदा रक्षतु ॥ ४५ ॥**

इदमत्यन्तविरुद्धभाषणमित्याशङ्कायां तद्विवृण्वन् तस्य भगवतः चरणापेक्षयाऽप्युत्कृष्टत्वमुपपादयति—गेहादेरिति । हे वेंकटाचलपते गेहादेः गृहादेः । गृह-गेहोदवसितवेश्मसद्मनिकेतनमित्यमरः । मनुजा मनुष्या रक्षका इत्यर्थः । तेषां मनुजानां त्रिविष्टपे स्वर्गे सीदन्तीति त्रिविष्टपसदो देवाः रक्षकाः । तेषां देवानां पयोजं पद्ममासनं यस्य सः चतुर्मुखः रक्षक इत्यर्थः । हे श्रीश ते तव पादद्वयं तस्य च चतुर्मुखस्य च संरक्षकम् । सर्वेषामपि शिरोधार्यत्वात् सर्वावयवेषु सत्स्वपि आश्रयणयोग्यत्वात् विष्ण्वधिष्ठानकत्वाच्चेति भावः । तस्यापि पादद्वयस्यापि [संरक्षकं] पादुकामणिमयं पादुकाश्रेष्ठरूपम् । स्वार्थे मयट् । पुंमणयः हीराः पुरुषश्रेष्ठाश्च तैर्व्याकीर्णं व्याप्तम् । न विद्यते अन्यो रक्षकोऽस्तीति कथा यस्य तत् रक्षकान्तररहितमित्यर्थः । तत् वस्त्विति शेषः । मां सर्वदा सर्वकालेषु रक्षतु लोक-रक्षणहेतुभूतपादद्वयस्यापि रक्षकत्वात् पादुकायाः सर्वोत्कृष्टत्वमिति भावः ॥ ४५ ॥

**स्तोत्रं गोत्रापतीनां न कुरु मुख मुधा स्वाय ते ज्ञा यदि स्युः**
**नो जानन्त्युक्तिशक्तिं त्रिचतुरपदधीलोलवाचो यदि स्युः ।**
**दुर्वाराखर्वगर्वाः परिभवचतुरास्सिद्धयो यद्यलभ्याः**
**नात्मश्लाघां सहन्ते न तव फललवस्तद्भज श्रीनिवासम् ॥ ४६ ॥**

राज्ञां कवितानभिज्ञत्वात् श्लाघानर्हत्वात् तव फललेशो नास्तीत्याह—हे मुख

हे वक्त्र स्वाय धनाय गोत्रापतीनां राज्ञां मुधा व्यर्थं स्तोत्रं न कुरु राजविषयकस्तुतिं न कुर्वित्यर्थः। गोत्रापतयः जानन्तीति ज्ञाः ज्ञानवन्तः स्युर्यदि ते प्रभवः। [" उक्तिशक्तिं कवितासामर्थ्यं " न जानन्ति। अथ यदि त्रिचतुरपदलोलवाचः स्युः कवने अत्यल्पपरिचयवन्तो भवेयुः] वारयितुमशक्यो दुर्वारः खर्वः स्वल्पः स न भवतीत्यखर्वः किंच गर्वोऽहङ्कारो येषां ते दुर्वाराखर्वगर्वाः। परिभवे तिरस्कारे चतुराः समर्था भवन्तीति शेषः। यदि यद्यपि सिद्धयः कार्यसिद्धयः अलभ्याः दुर्लभाः। कथञ्चिल्लभ्याश्चेदपि आत्मश्लाघां तद्विषयकश्लाघां [न] सहन्ते अयं पण्डित इति श्लाघां न कुर्वन्तीत्यर्थः। अतस्तेष्वपि विषयेषु तव फललवः फललेशोऽपि नास्ति। तत् तस्मात्कारणात् श्रीनिवासं वेंकटाचलपतिं भज सेवस्व भज सेवायामिति धातुः ॥ ४६ ॥

**नो गच्छेः कविते सुते क्षितिपतिं त्वं चन्दनद्रुं धने**
**गन्धे लोलतया ससंशयबुधक्रूराहयस्तत्र हि।**
**अन्योन्यैक्यगलत्कुदूषणविषाः साध्वोषधिस्पर्शतोऽ-**
**प्यग्रे त्वां बत मारयेयुरचिरात् तत् पत्रिपत्रं भज ॥ ४७ ॥**

संप्रति कवित्वं क्षितिपतिं प्रति नो गच्छेरिति वारयति। हे कविते सुते कविताकन्यके त्वं भवती क्षितिपतिं राजानं प्रति नो गच्छेः। राजानमेव चन्दनद्रुं चन्दनवृक्षं धन एव गन्धे परिमले। विमर्दोत्थे परिमले गन्धो जनमनोहर इत्यमरः। लोलतया आशया। लोलश्चालसतृष्णयोरिति निघण्टुः। नो गच्छेः न प्राप्नुहि। गमने दोषमाह—क्रूरेति। तत्र हि चन्दनवृक्षे हि संशयैस्सह वर्तन्त इति ससंशयाः किञ्चिज्ज्ञानेन गर्विताः ते च ते बुधाश्च विद्वांसश्च त एव क्रूराहयः क्रूरसर्पाः अन्योन्यैक्येन परस्परैक्येन गलन्ति प्रसरन्ति कुदूषणान्येव कुत्सितदूषणान्येव विषाणि येषां ते तथोक्ताः। युक्ताः(?) साधव एव सत्पुरुषा एव ओषधयः तेषां स्पर्शतोऽपि स्पर्शादपि अग्रे पुरत एव अचिराच्छीघ्रं त्वां मारयेयुः मारणं कुर्युः बतेति खेदे। तस्मात्पूर्वमेव [स-]संशयबुधक्रूराहिस्पर्शात्पूर्वमेव पत्रिपत्र पक्षिवाहनं भज। पत्त्र वाहनपक्षयोरिति निघण्टुः। मारयेयुरित्यनेन कार्यहानिं

कुर्युरिति भावः । विषदष्टानां गारुडध्यानद्योतनार्थं पतिपत्नमित्युक्तम् ॥ ४७ ॥

**बोद्धारोऽपि समिद्धमत्सरतया नाद्धावहित्थाचणाः**
**शुद्धोक्तिष्वविशुद्धबुद्धिजननश्रद्धालुतात्युद्धताः ।**
**सद्धीकानपि विद्धयन्ति कविते श्रद्धत्स्व ते(मे)ऽद्धावचोऽ**
**बद्धक्ष्मेशगुणा जगद्धवपदे नद्धा समृद्धा भव ॥ ४८ ॥**

अभिज्ञा अपि प्रभुसमीपे मात्सर्याद्वञ्चयन्तीत्याह बोद्धारोऽपीति द्वयेन ॥ हे कविते किञ्च बोद्धारोऽपि ज्ञानवन्तोऽपि समिद्धो दीप्तो मत्सरो मात्सर्यं येषां तेषां भावस्तत्तया समिद्धमत्सरतया अद्धा सत्यं न भवतीति नाद्धा असत्यमित्यर्थः । नशब्देन नञर्थेन सुप्सुपेति समासः । तस्य ('असत्यस्य') अवहित्था आकार-गोपनं तेन चणास्समर्थाः चणप्प्रत्ययः । अवहित्थाऽऽकारगुप्तिरित्यमरः । स्वदो-षान्यगोपेनेद्धा (गोपनसमर्था) इत्यर्थः । शुद्धासु परिशुद्धासु उक्तिषु वाक्येषु विषये अविशुद्धा दुष्टा या बुद्धिः इयमुक्तिरयुक्तेति बुद्धिः तस्या जनने प्रभोरुत्पादने श्रद्धा आसक्तिरेषामस्तीति श्रद्धालवः तेषां भावः श्रद्धालुता तया अत्युद्धताः अति-धूर्तास्सन्तः । सती योग्या अवञ्चिकेत्यर्थः धीः बुद्धिर्येषां तान्; स्वार्थे कः । विद्धयन्ति विद्धान् कुर्वन्ति येनकेनाप्युपायेन राज्ञां स्वविषये स्वारस्यं ("कविता-विषये अस्वारस्यं") उत्पादयन्ति । मे मम अद्धावचः सत्यवाक्यं श्रद्धत्स्व मद्वाक्ये आदरं कुर्वित्यर्थः । बद्धा न भवती(न्ती)त्यबद्धा असंयोजिता(:) क्ष्मेशस्य राज्ञः गुणा यस्यास्सा अबद्धक्ष्मेशगुणा जगतां लोकानां धवः प्रभुः विष्णुः तस्य पादे पादपद्मे नद्धा सती बद्धा सती पादं प्रतिपादयन्ती सती समृद्धा ऐहिकामुष्मिकस-मृद्धिमती भव ॥ ४८ ॥

**विद्वद्द्वेषभृतो मुधापदगणाः प्रोच्चैस्स्वरा निस्त्रपाः**
**संकेतेन परस्परं स्वविजये साक्षित्वमप्याश्रिताः ।**
**सद्बुद्धीनपि वञ्चयन्ति विबुधान् भूपान्तिके नास्तिका**
**विद्याविर्त्तविघातुका भुवि कृते लक्ष्मीशमेवाश्रय ॥ ४९ ॥**

पुनरपि मुखान्तरेण शिक्षयति—विद्वदिति ॥ हे [कृते] कविते विद्वद्भिः

द्वेषः विरोधः (तं) बिभ्रतीति विद्वद्द्वेषभृतः । विदुषां वेषः । [तं बिभ्रतीति च] मुधा व्यर्थं पदानां गणो वाक्यानां समूहः येषां ते मुधापदगणाः । उच्चैरुच्चरित-व्यमित्यादिप्रकारेण प्रकर्षेण उच्चैः उन्नतः स्वरः येषां ते प्रोच्चैस्स्वराः । निर्गता नष्टा (त्रपा)लज्जा ह्रीर्येषां ते निस्त्रपाः 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यत' इत्यमरः । परस्परमन्योन्यम् संकेतेन तवाहं साह्यं करोमि ममापि त्वया कर्तव्यमिति संकेतेन स्वविजये स्वेषां विजये साक्षित्वमपि साक्षिभावमपि आश्रिताः । किंच भूपान्तिके राजसमीपे नास्तिकाः * 'वादेन ब्राह्मणं जित्वा कङ्कगृध्रोपसेवित' इति श्लोकं ज्ञात्वा निरस्तपरलोकाः दृष्टातिशयाः सद्बुद्धीन् योग्यान् बुधान् विदुषः बाधयन्ति । वित्तैव वित्तं द्रव्यं तस्य विघातुकास्सन्तः । अतः लक्ष्मीशं वेंकटाचलपति-मेव आश्रय सर्वोपद्रवनिवर्तकत्वादिति भावः ॥ ४९ ॥

गौर्गा गवा गवे गोर्गोर्गवि गौर्यस्य पाति यः ।
वराय पीडकान् व्यापान् दत्ते तं श्रीनिधिं भज ॥ ५० ॥

यस्य श्रीनिधेः गौर्दृष्टिः गवा दृष्ट्या रश्मिना वा कटाक्षेणेत्यर्थः । गां भुवं भूमिं पाति रक्षति । यः श्रीनिधिः गवि दिशि दिक्ष्वित्यर्थः । व्यापान् गोः स्वर्गस्य पीडकान् असुरानित्यर्थः । गोर्वज्रादपि वराय श्रेष्ठाय गवे बाणाय दत्ते स्व-बाणनिहतान् करोतीत्यर्थः । तं श्रीनिधिं भज स्तुहीत्यर्थः । हे गौरिति संबुद्धिः । "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां भूम्नि गौ"रित्यमरः । "गौर्नाके वृषभे चन्द्रे वाग्भूदिग्धेनुषु स्त्रियाम् । द्वयोस्तु रश्मिदृग्बाणस्वर्गवज्राम्बु-लोमसु" इति रत्नमाला । "गौर्नाऽऽदित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्ग वज्राम्बुबाणदृङ्नेत्रलोमसु" इति हलायुधः ॥ ५० ॥

वृषाचलेशितुः पदाश्रिताः कुभृन्मुदाऽऽपत-
त्फलादिवन्महाफलार्थिनोऽप्यवान्तरं फलम् ।

अकाङ्क्षितामपि श्रियं प्रयान्ति शेषवृत्तिस-
त्फला परेरितां महीं पुरेव तस्य पादुका ॥ ५१ ॥

श्रीशपदाश्रिताः मखयाजी पशुपुत्राद्यवान्तरफलमिव भूपदत्तग्रामाद्यवान्तर-
फलमपि लभन्त इत्याह—वृषेति ॥ वृषाचलेशितुः श्रीनिवासस्य पदाश्रिताः पाद-
पद्ममाश्रिताः महत् अधिकं फलं मोक्षरूपफलम् अर्थयन्त इति महाफलार्थिनोऽपि
अवान्तरफलम् अवान्तरफलरूपां श्रियं तुच्छत्वादप्रार्थितामित्यर्थः । ज्योतिष्टोममध्ये
पशुपुत्राद्यवान्तरफलवत् अनपेक्षितां श्रियं संपदं कुभृतो भूभृतः, 'गोत्रा कुः पृथिवी
पृथ्वी'त्यमरः । मुदा संतोषेण आपतत् प्राप्तं यत्फलं ग्रामादिफलं यथातथा[1]
शेषवृत्तिरिव सत्फलं प्रशस्तफलं यस्यास्सा तस्य हरेः पादुका पादरक्षा पुरा त्रेतायुगे
तदीरितां तेन रामरूपेण हरिणा इरितां प्रेरितां दत्तामित्यर्थः । महीमिव भूमिमिव
प्रयान्ति लभन्ते ॥ ५१ ॥

आराद्वेगादरिष्टं भवति बहुतरं यत्पदाब्जानतानां
सव्यौ भागौ यदीयौ निरवधिकरुची चारुभाभ्यां च माभ्याम् ।
विभ्राजत्पुष्पवद्धापरिहसनचणे यत्कराम्भोजहेती
श्रीनाथः श्रेयसी सोऽप्रतिमबलभवासक्त्यधीने करोति ॥ ५२ ॥

भगवानेव स्वपादासक्तानां संसारनिवृत्तिं कृत्वा मोक्षं ददातीत्याह—आरा-
दिति ॥ यस्य तव पादाब्जे पादपद्मे आनतानां नमस्कुर्वतां वेगात् बहुतरमधिकम्
अरिष्टमप्रियं दुःखं वा आरात् दूरे भवति; यत्पदाब्जे अनतानामनमस्कारिणाम्
अरिष्टमप्रियम् आरात् समीपे भवति । यदीयौ यत्संबन्धिनौ सव्यौ भागौ दक्षिणवाम-
भागौ । सव्यं दक्षिणवामयोरिति निघण्टुः । चारु सुन्दरं भाः कान्तिः ययोस्ते
ताभ्यां चारुभाभ्यां माभ्यां श्रीभूमिदेवीभ्यां; 'मा विश्वा पृथिवी क्षमे'ति विश्व-
प्रकाशः । 'इन्दिरा लोकमाता मा क्षीराब्धितनया रमे'ति चामरः । निरवधिका
अवधिरहिता रुचिः कान्तिर्ययोस्तौ निरवधिकरुची अत्यन्तकान्तियुक्तावित्यर्थः ।

1. "कुभृतो भूपस्य मुदा आपतता फलादिना तुल्यम्; ग्रामादिमहाफलार्थिभ्यः तद्यातुकानन प्रभुणा मध्ये प्रीत्या दत्तफलादितुल्यं यथा तथा" इत्यन्यत्र पाठः ।

यस्य भवतः कराम्भोजयोः हस्तपद्मयोः विद्यमाने हेती चक्रशङ्खरूपे आयुधे विभ्राजन्तौ विशेषेण भ्राजमानौ यौ पुष्पवन्तौ सूर्यचन्द्रौ तयोर्भासः कान्तयः तासां परिहसने परिहासे चणौ समर्थौ तदतिरिक्तकान्ती इत्यर्थः । अनेन विरोधिनिरासक-परिकरसंपत्तिः सूचिता । उक्तं हि भट्टमूर्तिना- - *पुष्पवद्बिम्बं लिविति । स श्रीनाथः वेंकटाचलपतिः अप्रतिमं समानरहितं बलं सामर्थ्यं यस्य सः सचासौ बलवांश्च (भवश्च) तस्मिन् [आ]सङ्गो यस्य सः अप्रतिमबलवत्स(-भवास-)ङ्गी [तस्मिन् असङ्गो यस्य सोऽपि अप्रतिमबलभवासङ्गी] सन् । तयोः श्रेयसी । (सुकृत) मोक्षरूपश्रेयसी अधीने करोति । [संसारसङ्गिने स्वर्गपशुपुत्रादिरूपं श्रेयो ददाति । तदसङ्गिने] मोक्षरूपश्रेयो ददातीत्यर्थः ॥ ५२ ॥

> वनचर राम पुष्टवरगो द्रुहिणार्यतनो
> विरचितसूत्रवेदमयकाव्यपुराणतते ।
> परखपयोधिजीवशुभदेशनिवासरते (-पर)
> मयि च वसस्यहो सकृप वत्सल माधिपते ॥ ५३ ॥

व्यूहपञ्चके वर्तमानस्त्वम् अत्यन्तनिकृष्टे मय्यपि वर्तस इत्याह— वनेति ॥ वनं जलं कान्तारं च । 'जीवनं भुवनं वनम्,' 'गहनं काननं वनम्,' 'कान्तारं वर्त्म दुर्गम'मित्यमरः । वनचरशब्देन वने उदके अरण्ये च चरन्ति संचरन्तीति वनेचराणां मत्स्यकूर्मवराहनरसिंहानां ग्रहणम् । हे वनचर ! हे राम ! रामशब्देन परशुरामदाशरथिबलरामाणां ग्रहणम् । पुष्टा संपूर्णा वरा श्रेष्ठा प्रशस्ता वा गौर्वाक् वेदो यस्य तस्य संबुद्धिः पुष्टवरगो साङ्गवेदाध्ययनशीलेत्यर्थः । वामनब्रह्मचारिन्नित्यर्थः । पुष्टा वरा गावः धेनवो यस्येति गोपालकृष्णेत्यर्थः । पुष्टो वरः प्रशस्तो गौः पशुरश्वो यस्येति अश्वसादिन् कल्क्यवतारेत्यर्थः । अपशवो वा अन्ये गो अश्वेभ्य इति श्रुतेर्गवाश्वानां प्रशस्तपशुत्वम् । द्रुहिणार्यतनो द्रुहिणस्य धातुः आर्या पूज्या तनुर्यस्य तस्य संबुद्धिः । धातुर्वेदोपदेष्टृत्वं हयग्रीवरूपेणेत्यर्थः । विरचिता कृता सूत्राणां ब्रह्मसूत्राणां वेदमयानां वेदप्रचुराणां भारतात्मककाव्यानां विष्णुपुराणाद्य-ष्टादशपुराणानां ततिः समूहो येन तस्य संबुद्धिः । अनेन व्यासावतारोक्तिः । परं तत् खं परमाकाश इत्यर्थः । परमपदमित्यर्थः । पयांस्यस्मिन् धीयन्त इति पयोधिः

क्षीराब्धिः । जीवाश्चेतनाः । शुभदेशाः श्रीरङ्गादिदिव्यदेशाः, तेषां द्वन्द्वः, तेषु निवासे स्थितौ पर आसक्तेति संबुद्धिः । कृपया दयया सहितस्सकृपेति संबुद्धिः । वत्सला गौस्तद्वद्वात्सल्ययुक्तेति संबुद्धिः । माया लक्ष्म्याः अधिपते भर्तः इति संबुद्धिः । मा न विद्यते अधिपतिर्यस्येति वा संबुद्धिः । अत्र माशब्दस्य नञर्थकत्वम् । मयि च मय्यपीत्यर्थः । चकारस्य अप्यर्थकत्वमव्ययानामनेकार्थत्वात् । मय्यपीत्यनेनात्यन्तनिकृष्टत्वं द्योत्यते । वससि वर्तसे । अहो इत्याश्चर्यम् ॥ ५३ ॥

**उद्यत्सूनसमीपभाक् परभृता दष्टं द्वितीयक्षण-**
**प्राप्तामार्दवमिद्धसूनजयकृद्दन्तावलीसङ्गिनः ।**
**लक्ष्म्यास्वाद्यरसस्य नित्यमृदुतारुण्यस्य चाटीकते**
**शेषाद्रीश तवाधरस्य किमु भासंपलवं पल्लवम् ॥ ५४ ॥**

तवाधरस्य पल्लवमपि न समानमित्याह—उद्यदिति हे शेषाद्रीश वेंकटाचलपत उद्यत् जायमानं यत्सूनं पुष्पं तस्य समीपं सान्निधानं प्राप्नोतीति उद्यत्सूनसमीपभाक् । परैर्बिभर्तीति [परभृत् तेन] परभृता कोकिलेन दष्टं खादितं द्वितीयक्षणे दष्टानन्तरक्षणे प्राप्तममार्दवं मृदुत्वाभावो यस्य तत् । पलवं किसलयः । पलवोऽस्त्री किसलयमित्यमरः । कर्तृ । इद्धं प्रकाशमानं यत्सूनं पुष्पं तस्य जयं करोतीति या दन्तावलिर्दन्तपङ्क्तिः तया सङ्गोऽस्यास्तीति इद्धसूनजयकृद्दन्तावलीसङ्गिनः, लक्ष्म्या श्रिया आस्वादितुमनुभवितुं योग्य आस्वाद्यः रसः यस्य तस्य, नित्यं सर्वदा मृदोर्भावः मृदुता (अ)रुणस्य भावस्ता (आ)रुण्यं यस्य तस्य । तव भवतः अधरस्य अधरोष्ठस्य भासः कान्त्याः संपदः लवं लेशमपि आटीकते किमु अङ्गीकरोति प्राप्नोति किमित्यर्थः । न प्राप्नोत्येवेति भावः ॥ ५४ ॥

**गौर्यस्यामरवैरिनाशनपटुस्तत्कर्णनाथाचलो**
**धामैतान्निधिभानुकुञ्चिदलयुग्गेहाविहारास्पदम् ।**
**वत्सं तत्पदवैरिहेतिकपटग्राहिच्छिदावर्णितः**
**कामस्तच्छतजित्तनुस्तदितरा श्रीः पातु देवस्स नः ॥ ५५ ॥**

वत्सासुरादिनिवर्तकः कृष्णः पात्वित्याह—गौरिति ॥ यस्य

गौश्शरः अमरवैरिणां राक्षसानां नाशने ध्वंसने पटुस्समर्थः यस्य धाम स्थानं तन्नेत्रं कर्णः श्रवो यस्य सः चक्षुःश्रवाः सर्पः तेषां नाथः शेषः सचासावचलश्च शेषाचल इत्यर्थः । तच्छब्दो गोवाचकः । गोशब्दान्न बाणो ग्राह्यः किंतु नेत्रपरः । यस्य वत्सं वक्षः । अत एतच्छब्दो धामपरः । एतस्य धाम्नः तेजसः निधिः सूर्यः । तस्य भानुः किरण एव कुञ्ची कवाटोद्घाटनी । यस्य तद्दलं पद्मरूपदलं (-दलरूपं) तेन युज्यत इति पद्मं गेहो यस्यास्सा तस्याः श्रियो विहारस्य विहरणस्य आस्पदं स्थानम् । यस्य काम इच्छा संकल्प इत्यर्थः । तत्पदं वत्सपदं, वत्सस्तर्णक इति निघण्टुः । तत्पदं चिह्नं यस्य सः । तस्य वैरी शत्रुः वत्सासुर इत्यर्थः । तेनैव वत्सासुरहेतिना आयुधेन कपटं व्याजं गृह्णातीति कपटग्राहिणः मिथ्याकपित्थस्य कपित्थासुरस्येत्यर्थः । छिदया छेदनेन वर्णितः स्तुतः । विस्तरस्तु सिद्धाञ्जने द्रष्टव्यन् । यस्य तनुः शरीरं तस्य कामस्य शतं जयतीति तच्छतजित् मन्मथशत-जिदित्यर्थः । यस्य श्रीः संपत् तस्मात् तनोः इतरा अनल्पेत्यर्थः । स देवः वेंकटाचलपतिः पातु रक्षतु ॥ ५५ ॥

कामो यस्य जगज्जनिस्थितिलयव्यग्रस्तनुस्तच्छतो-
त्कृष्टा श्रीरितरा ततो हि हृदयं तन्नित्ययोगोज्ज्वलम् ।
भोगस्तत्पथदूरवर्तिमहिमा तद्वद्वराद्रिः पदं
नित्यं धाम तदेकनम्रसुलभं तद्वान्मुदे सोऽस्तु नः ॥ ५६ ॥

उक्तमेव प्रकारान्तरेण वक्ति-- काम इति ॥ यस्य देवस्य कामस्संकल्पः जगतां जनिर्जन्म स्थितिः पालनं लयः संहारः जगज्जनिस्थितिलया इति द्वन्द्वः तेषु व्यग्रः त्वरावान् । यस्य तनुः शरीरं नाम तच्छतात् कामशतात् उत्कृष्टा । यस्य श्रीः संपत् ततः सूक्ष्मात् इतरा अधिकेत्यर्थः । यस्य हृदयं वक्षः तस्याः श्रियः लक्ष्म्या देव्याः नित्ययोगेन नित्यसंबन्धेन उज्ज्वलं प्रकाशमानं । यस्य भोगस्सुखं तत्पथस्य हृदयपथस्य चित्तमार्गस्य दूरवर्ती दूरस्थितः महिमा अतिशयो यस्य सः । मनसोऽप्यवेद्यमहिमे-त्यर्थः । यस्य पदं स्थानं तद्वान् भोगवान् फणवांश्चासौ वराद्रिः श्रेष्ठाद्रिश्चेति विशेषणसमासः । यस्य नित्यं शाश्वतं धाम परमपदं तदेकनम्राणां पादानतानां

सुलभं, तद्वान्नित्यधामवान् नित्यतेजश्शालीत्यर्थ: । स देव: न: मुदे सन्तोषाय अस्तु भवत्वित्यर्थ: ॥ ५६ ॥

त्वत्कैङ्कर्यार्थदिव्यामिततनुजननीं श्रीश शक्तिं न कुर्वन्
वित्ताशां वर्धयेश्चेत्सुचिरमनुसृतैर्नैकदेश्यैर्धनाढ्यै: ।
सत्पर्वण्येव दत्तं किमपि परिमितं साम्बु कृच्छ्राद्ग्रहीतुं
वह्नीर्मे पार्थिवीर्वा सपदि दिश तनूर्वैधहैन्येऽपि मान्या: ॥ ५७ ॥

त्वत्कैङ्कर्यार्थमप्राकृततनू: प्राकृततनूर्वा देहीत्याह—त्वदि ॥ हे श्रीश लक्ष्मीपते तव कैङ्कर्यं किङ्करभाव: तदेव प्रयोजनं यासां ता: । * परमेष्ठी पुमान्विश्वो निवृत्तस्सर्व एव हीत्याद्युक्तरीत्या(?) दिव्या: प्रकृतिरहिता: पञ्चोपनिषत्स्वरूपा: अमिता अनन्ता यास्तनव: शरीराणि ता जनयति उत्पादयतीति तां शक्तिं सामर्थ्यं मे मम * स एकधा भवति द्विधा भवतीत्यादिश्रुत्युक्तरीत्या अनेकशरीरपरिग्रहरूपसामर्थ्यं न कुर्वन् न दास्यन् वित्ताशां द्रव्येच्छां वर्धयेश्चेत् वृद्धिं करोषि चेत् मया सुचिरमनेककालम् अनुसृतै: एकदेश्या: ते न भवन्तीति नैकदेश्या: अनेकदेशस्था: । सुप्सुपेति समास: । धनाढ्यै: धनिकै: सत् प्रशस्तं च तत् पर्व च सत्पर्व तस्मिन्नेव उपरागादिष्वित्यर्थ: । दत्तं दापितं किमपि परिमितम् अत्यन्तस्वल्पमित्यथ: तदपि साम्बु उदकमिश्रं किमपि द्रव्यमिति शेष: । सर्वाण्युदकपूर्वाणि दानानीत्युक्ते: । कृच्छ्रात् कष्टात् ग्रहीतुं स्वीकर्तुमित्यर्थ: । द्वारनिरोधपरिहारपूर्वकमिति भाव: । वैधहैन्येऽपि विधिप्रोक्तस्नानसन्ध्यादिकर्मपरित्यागेऽपि मान्या: पूज्या: [वह्नी:] पार्थिवी: पृथिवीविकारा: तनू: शरीराणि सपदि दानसमय एव दिश वितर । अन्यथा एककालीनानेकदातव्यभङ्गप्रसङ्ग: । वैधानुष्ठानभयात् द्रव्यपरित्यागे अपरिमिततनू: सद्यो देहि । देहानां चिरस्थायित्वे तत्पोषणार्थमनेकद्रव्यनाश: स्यात् । अत: शीघ्रं त्वत्सायुज्यं देहीति भाव:(?) ॥ ५७ ॥

नागं पुष्करपुष्करह्रदगतं नक्रास्यरुद्धाङ्घ्रिकं
भ्राजत्पुष्करपुष्करं स्मृतजगन्मूलं त्वरक्षो जवात् ।

तं त्वां पुष्करपुष्करायितसमोत्कृष्टं मणीन्द्रप्रभा-
स्फूर्जत्पुष्कर पुष्करप्रभुमहातल्पाश्रये श्रीनिधे ॥ ५८ ॥

गजेन्द्ररक्षणादहं त्वत्पादारविन्दमाश्रित इत्याह—नागमिति ॥ हे श्रनिधे लक्ष्मीनिधे मणीन्द्राणां रत्नश्रेष्ठानां प्रभाभिः कान्तिभिः स्फूर्जत् प्रकाशमानं पुष्करं खड्गो यस्य तस्य संबुद्धिः । पुष्करप्रभुरनन्तः महातल्पो यस्य तस्य संबुद्धिः । रलयोरभेदात् पुष्करं पुष्कलं पुष्करं जलं यस्य सः सचासौ ह्रदश्च जलाशय इत्यर्थः । तत्र गतम् । नक्रः मकरः तस्य आस्ये मुखे रुद्धौ बद्धौ अङ्घ्री यस्य तम् । * गज आकर्षते तीरे ग्राह आकर्षते जले । तयोर्युद्धं समभवद्दिव्यवर्षसहस्रकम् ॥ इत्युक्तेः । भ्राजत् प्रकाशमानं पुष्करं पद्मं यस्य तादृशं पुष्करं हस्ताग्रं यस्य तं घूर्णमानहस्तमित्यर्थः । स्मृतं ध्यातं जगन्मूलं जगत्कारणं येन तं नागं गजेन्द्रं जवात् वेगात् यस्त्वमिति शेषः । रक्षितवानसि रक्षामददाः । पुष्करपुष्करायितौ गगनारविन्दायितौ तद्वदप्रसिद्धावित्यर्थः । समोत्कृष्टौ समातिशयौ यस्य तं त्वामाश्रये अहमिति शेषः । "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले । व्योम्नि खड्गे फले पद्मे सर्पौषधिविशेषयो"रित्यमरः । विस्तरस्तु सिद्धाञ्जने द्रष्टव्यः ॥ ५८ ॥

दीनं मां कमलासमाश्रित नतं त्राहीति वाचं मम
श्रुत्वा किं न करोषि सुन्दर शिरःकम्पं समन्दस्मितम् ।
मद्दीनत्वतमश्छटाप्रतिभटस्फूर्जत्किरीटाग्रणी-
प्रत्युप्तोपलफालफल्यचपलामालासमुद्भासितम् ॥ ५९ ॥

मद्याच्ञां श्रुत्वाऽपि किं न करोषीत्याह—दीनमिति । हे सुन्दर सौन्दर्यविशिष्ट कमलया लक्ष्म्या समाश्रित दीनमुपायान्तररहितं नतं नमस्कुर्वन्तं मां त्राहि रक्षस्वेति मम वाचं मद्याच्ञां श्रुत्वा मद्दीनत्वं मद्दैन्यं तदेव तमश्छटा तमस्समूहः [तस्याः]प्रतिभटाभिर्विरोधि[नी]भिः स्फूर्जन्ति प्रकाशमानानि किरीटाग्रणीषु मकुटश्रेष्ठेषु प्रत्युप्तानि खचितानि उपलानां रत्नानां फालफल्यैरेव दलदलायमानैरेव(-यितैरेव) चपलामालाभिः विद्युत्पङ्क्तिभिः । चञ्चला चपला विद्युदित्यमरः । समुद्भासितं सम्यक् प्रचितं समन्दस्मितम् ईषत्स्मितसहितं यथातथा शिरःकम्पं किं न करोषि

किमर्थं न करोषीत्यर्थः । मद्रक्षणमवश्यं कर्तव्यमिति भावः ॥ ५९ ॥

**चित्रं रमाधव यशोमुक्ता रन्ध्रोज्झितास्तवानन्तैः ।**
**परिगुम्फिता गुणौघैः सुदृशां हृदयंगमा विभान्ति[1] ॥ ६० ॥**

यशोमुक्ताः कल्याणगुणैः साकं रन्ध्रोज्झिता भान्तीत्याह—चित्रमिति ॥ हे रमाधव हे लक्ष्मीपते रन्ध्रैः छिद्रैः उज्झिता रहिताः दोषरहिताश्च तव भवतः यशोमुक्ताः कीर्तिमुक्ताः अनन्तैरपरिमितैः अग्ररहितैश्च तव गुणानां दयादीनामोघैः समुदायैः तन्तुसमूहैश्च परिगुम्फिता[:] परितो मिश्रिता[:] सुदृशां स्त्रीणां विदुषां च हृदयंगमाः मनोहराः वक्षस्स्थलभाजश्च विभान्ति विशेषेण प्रकाशन्ते । चित्रमाश्चर्यम् ॥ ६० ॥

**अनर्घ्यफलदायके प्रणतिमात्रसाध्ये त्वयि**
**स्थितेऽपि धनकाङ्क्षया चिरमुपास्यमानार्थिनः ।**
**मदान्धतदुपेक्षया धनलवं च नोपश्यतो-**
**प्यहो तदुपसेविनी भवति धीर्मम श्रीनिधे ॥ ६१ ॥**

समस्तफलदायके भगवति सति क्षुद्रप्रभुसेवा ममाधिकेत्याह—अनर्घ्येति ॥ हे श्रीनिधे लक्ष्मीनिधे अनर्घ्यमियत्तानवच्छिन्नं यत्फलं मोक्षरूपफलं तद्ददातीति अनर्घ्यफलदायकः । तस्मिन् प्रणतिमात्रेण साध्ये साधनीये त्वयि भवति स्थितेऽपि विद्यमानेऽपि धनकाङ्क्षया द्रव्याकाङ्क्षया चिरम् अनेककालादारभ्य उपास्यमानाः सेव्यमानाः अर्थिनो धनवन्तो येन तस्य मदान्धानां धनमदान्धानां तेषां धनिनामुपेक्षा तदुपेक्षा तिरस्कारतर्जनभर्जन('भर्त्सन' 'गर्जन' वा) रूपा अनिर्वचनीयेति भावः । धनलवं च धनलेशमपि नोपश्यत इति समस्तं पदम् । मम तदुपसेविनी धनिकसेविनी धीर्बुद्धिः भवति अहो आश्चर्यमित्यर्थः ॥ ६१ ॥

**सेच्छं मामवितुं पदे तव सुखे वित्ते च दुःखात्मके**
**त्वं शास्त्रेण दृगादिना च सुगुणं दोषं च मे दर्शयन् ।**

---

1. भान्तीत्येव अवतारिकायामिव पाठेन भाव्यम् । अन्यथा वृत्तदोषः ।

ज्ञात्वाप्यर्थिनिषेविणे विघटयन् लाभं पुनश्चार्थभाक्-
काङ्क्षस्योद्धरणाभ्युपायमधिकं श्रीभृद्विभो पश्यसि ॥ ६२ ॥

इदानीं मद्रक्षणोपायं पश्यसीत्याह—सेच्छमिति ॥ श्रीभृत् लक्ष्मीभृत् हे विभो हे प्रभो तव भवतः पदे पादपद्मे इच्छया सहितं सेच्छं, सर्वमुक्तिप्रसङ्गपरिहारार्थमिदं विशेषणम् । माममवितुं रक्षितुं सुखे सुखकरे दुःखे दुःखात्मके दुःखस्वरूपे वित्ते च द्रव्ये च त्वं भवान् शासनाच्छास्त्रमिति वेदरूपशास्त्रेण दृगादिना दृष्ट्यादिना च अर्थिनः द्रव्यवतः निषेवन्त इत्यर्थिनिषेविणः द्रव्यवदनुसरणोद्युक्तस्य पदेपदे अर्थभाक् द्रव्यभाक् काङ्क्षा मनोरथो यस्य मे मम सुगणं शोभनगुणं दर्शयन् दोषं ज्ञात्वाऽपि विघटयन् निवारयन् उद्धरणस्य रक्षणस्य अभ्युपायमधिकं लाभं पश्यसि[1] ॥ ६२ ॥

शस्त्रक्षाराग्निकर्माण्यतिहितमनसा सूनवे त्वं पितेवा-
नन्त्ये दुःखानि कुर्वन् नृपसुतरचिताकृत्यदण्डागुरूणि ।
दत्त्वा हेतून् गतेरप्यवसि हिततमं त्वामुपेक्ष्योत्कटाघ-
व्याप्त्या दुःखैकभाजो वरकृप सुमतिं देहि मे श्रीनिवास ॥ ६३ ॥

लोके पित्रादिकं स्वपुत्राय शस्त्रक्षारादिकं यथा करोति तद्वदेव मां निष्कलङ्कं कृत्वा रक्षसीत्याह—शस्त्रेति ॥ हे श्रीनिवास हे लक्ष्मीनिवास त्वं भवान् अतिहितमनसा अत्यन्तप्रेमयुक्तमनसा शस्त्रं च क्षारं च अग्निकर्म च द्वन्द्वः शस्त्रक्षाराग्निकर्माणि पितेव जनक इव सूनवे पुत्राय आनन्त्ये नमनशीलाय दासायेत्यर्थः । [लघुर्]दण्डः प्रपन्नस्य राजपुत्रापराधा(ध)[वदित्या]दिप्रकारेण नृपसुतेन राजपुत्रेण रचितं यदकृत्यमपराधः तस्य दण्डः तद्वदगुरूणि अनधिकानि दुःखानि

1. 'त्वयाऽहं रक्षितो भवेयमितीच्छामि'। तथा इच्छतो मे अवनाय त्वं सुखात्मके तव पदे शास्त्रेण सुगुणं दर्शयसि । दुःखात्मके वित्ते च प्रत्यक्षादिना दोषं दर्शयसि । एवं त्वया दर्शितं गुणं दोषं च ज्ञात्वापि अहं धनिकानेव निषेवे । त्वं तु मदवनायैव तत्र मे वित्तस्य लाभं विघटयसि । तथापि पुनरपि अर्थविषयिण्येव कांक्षा भवति । तद् दृष्ट्वा त्वं अस्योद्धरणाय गुणदोषदर्शनापेक्षया अधिकः कश्चिदुपायः कर्तव्य इत्यालोचयसि' इति अस्य श्लोकस्य भावो भाति ।

कुर्वन् गते: त्वत्प्राप्ते: हेतून् भक्तिप्रपत्त्यादिरूपकारणानी(नि) वास्य(स्व) प्रदक्षिणादिकं वा दत्त्वा संकल्प्य अवसि रक्षसि। हिततमम् अत्यन्तहितं त्वामुपेक्ष्य अनादृत्य हे वरकृप श्रेष्ठकृप उत्कटानामधिकानाम् अघानां पापानां व्याप्त्या व्यापकत्वेन दु:खैकं दु:खमेव भाज: भजमानस्य मे मम सुमतिं शोभनमतिं देहि ॥ ६३ ॥

रूपेणाललितेन मन्दविभवैरक्षैरनन्यस्थया
वृत्त्या चाचलता मया सकमल त्वं सूत्रधारो हरे।
रम्यप्राणिसुभूमिके बहुरसै: पूर्णे जगन्नाटके
चित्रं हास्यरसं किरस्यलघुभिर्वेद्यं हि सामाजिकै: ॥ ६४ ॥

तव हास्यरस: नित्यसूरिभिर्ग्राह्य इत्याह—रूपेणेति ॥ हे सकमल सलक्ष्मीक हे हरे सूत्रधार: त्वम् अललितेन असुन्दरेण रूपेण आकारेण मन्द: क्षीण: विभवोऽतिशयो येषां तै: अक्षैरिन्द्रियै: चक्षुरादिभि: अन्यस्था अन्यनिष्ठा न भवतीत्यनन्यस्था तया वृत्त्या व्यापारेण मया अचलता चाञ्चल्यरहितेन अनपेतेनेत्यर्थ:। मया सह[1] रम्या: सौन्दर्यविशिष्टा: प्राणिनो जीवा: सुभूमिका: शोभनवेषा: यस्मिंस्तस्मिन् बहुरसै: शृङ्गारादिरसै: पूर्णे संपूर्णे जगन्नाटके जगदाख्यनाटके अलघुभि: पूर्णै: गुरुभिरित्यर्थ:। * यत्रर्षय: प्रथमजा ये पुराणा:, सदा पश्यन्ति सूरय: इत्याद्युक्त:(क्तै:) सामाजिकैरनन्तगरुडविष्वक्सेनादिभि: वेद्यं ज्ञातव्यम्। इतरैर्ज्ञातुमशक्यत्वात् ब्रह्मरुद्रादिकर्मदेवैरिति भाव:। हास्यरसं किरसि व्याप्तीकरोषि[2]। चित्रमाश्चर्यम् ॥ ६४ ॥

चित्ताकर्षिगुणं भुजङ्गजयकृद्दोषं प्रदानस्पृहा-
दीनारिप्रकाराग्रनर्तितसुं भक्तैकसक्ताशयम्।

---

1. "मया चित्रं हास्यं [इत्युत्तरत्र] ... सम्बन्ध:"।

2. "प्राणिभूमिका: शृङ्गारादिरसपूर्ण (रि) का:। अहं तु हास्यरसपूरक इत्यर्थ:" इत्यन्यत्र स्थितं भाववर्णनं शोभनम्।

उद्वेल्लत्कनकाचलादरमितं वैकुण्ठगोष्ठ्यस्पृहां
सर्वाशानिलयात्मकं नतनिधे त्वत्तुल्यमीक्षस्व माम् ॥ ६५ ॥

त्वत्तुल्यं मामीक्षस्वेत्याह—चित्तेति ॥ नतानां नमस्कुर्वतां दासानामित्यर्थः। निधे निधिभूतेति संबुद्धिः। चित्तं चेतः आकर्षन्तीति चित्ताकर्षिणः। चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः इत्यमरः। चित्ताकर्षिणो गुणाः सौन्दर्यादयः अन्यत्र चित्ताकर्षिणः मनःकर्षणपराः शब्दादिविषया यस्य ते(तं) त्व(त)देकवश्य-मित्यर्थः। 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तु'ष्वित्यमरः। भुजैर्गच्छन्तीति भुजगाः सर्पाः तेषां जयं कुर्वन्ति दोषो बाहवो यस्य तम्। भुजङ्गशब्देन कद्रा(द्रु)नुचरशङ्खचूडश्चोच्यते(?)। 'भुजङ्गो विटसर्पयो'रिति निघण्टुः। मत्पक्षे भुजङ्गजयकृद्दो(तः दो)षाः पापाः(नि) यस्य तम्। सर्पादपि क्रूरा इत्यर्थः प्रकर्षेणातिशयेन खण्डयन्तीति[प्रदानाः।] दो अवखण्डन इति धातुः। स्पृहया इच्छया दीना अशक्ता न भवन्तीत्यदीनाः ते च ते अरयः शत्रवः तेषां प्रकराः समूहाः तेषामग्रे पुरतः नर्तिताः शोभना गावः बाणाः यस्य तम् अनायसेन शत्रुनाशकमित्यर्थः। अन्यत्र प्रदानस्पृहया दातृत्वापेक्षया दीनाराः सुवर्णमुद्रिका एषां सन्ति इति दीनारिणः। तेषां प्रकराणां समूहानाम् अग्रे पुरतः नर्तिताः स्तुत्यर्थं प्रतिपादिताः शोभना अलंकारादियुक्ता गावः वाचो यस्य तम्। भक्तेषु स्वाश्रितेषु एकं मुख्यं यथा तथा सक्त आशयो यस्य तम्। अन्यत्र भक्ते अन्ने एकं यथातथा सक्त आशयो यस्य तम्। 'भिस्सा स्त्री भक्तमन्धोऽन्न'मित्यमरः। उद्वेल्लन् उज्जृम्भन् कनके सुवर्णे अचलो निश्चल आदरो यस्य तम्। वैकुण्ठगोष्ठ्यां वैकुण्ठलोकस्य गोष्ठ्याम् अस्पृहामनिच्छाम् इतं प्राप्तम्। * मायावी परमानन्द[1] इत्यादिवदिति भावः। अन्यत्र वैकुण्ठप्राप्तीच्छारहित इ(मि)त्यर्थः। सर्वास्समस्ता दिशो निलया आश्रया यस्य तादृशः आत्मा स्वरूपं यस्य तं विभुमित्यर्थः। यद्वा आशाशब्देन दिगन्तर्वर्तिपदार्थश्चोपलक्ष्यते। ततश्च सर्वाधारभूत इ(मि)त्यर्थः। अन्यत्र सर्वाशानां बहुमनोरथानां निलय आधार आत्मा मनो यस्य तं मां त्वत्तुल्यं

---

1. "मायावी परमानन्दस्त्यक्त्वा वैकुण्ठमुत्तमम्। स्वामिपुष्करिणीतीरे रमया सह मोदते"

त्वत्सदृशम् ईक्षस्व। ईक्ष दर्शनाङ्कयोरिति धातुः। विशेषणसाम्यात् सदृशं विद्धीत्यर्थः। यथा त्वत्सदृशः स्यां तथा कुर्यित्यर्थः॥ ६५॥

**श्रीभृत्पुण्यजनान्निहन्ति तव गौस्तान्नेक्षते मे पुनः**
**त्वं चेज्जिह्मगभोगसङ्गतिरतोऽहं चेत्तपस्वी महान्।**
**अव्यक्तारिदरोऽसि वेद्मि न परं लोकं कुतस्तद्भयं**
**भेदे त्वत्सदसन्मयात्परमसद्रूपस्य साम्यं क्रमे॥ ६६॥**

परमनिकृष्टस्य मम कथं साम्यापत्तिरित्याह—श्रीभृदिति॥ हे श्रीभृत् तव गौर्बाणः पुण्यजनान् राक्षसान् पुण्यात्मनो दक्षादींश्च निहन्ति हिनस्तीत्यर्थः। दक्षाध्वरे रुद्राद्यन्तर्यामितयेत्यर्थः। * लोकवत्तु लीला कैवल्यमित्युक्तेः। मे पुनः मम तु, गौरित्यनुवर्तते। वाग्बाणस्तु तान् पुण्यजनान् पुण्यात्मनः न निहन्ति न प्रसरतीत्यर्थः। यद्वा तान् सुकृतिनः नेक्षते न स्तौतीत्यर्थः। देशिकादिवदिति भावः। त्वं चेत् भवांश्चेत् जिह्मं कुटिलं यथातथा गच्छतीति जिह्मगः सचासौ भोगश्च सर्पः तस्य सङ्गतौ सहवासे रतः आसक्तः। यद्वा स्त्र्यादिभ्यो भोगसङ्गरतः। अहं चेत् अहं पुनः तपस्वी मुनिर्दीनश्च। मुनिदीनौ तपस्विनाविति निघण्टुः। त्वम्, अव्यक्तमरिदरम् अरिभयं येन सः। यद्वा अव्यक्तौ अरिदरौ शङ्खचक्रौ(?) येन सः। अहं परं लोकं शत्रुजनं लोकान्तरं च न वेद्मि न जानामीत्यर्थः। तद्भयं शत्रुभयं परलोकभयं च कुतः? नास्त्येवेत्यर्थः। त्वत् त्वत्सकाशात् समीपात् सदसन्मयात् समीचीनासमीचीनस्वरूपात् परममुत्कृष्टं सत् योग्यं रूपं यस्य तस्य अन्यत्र परमत्यन्तमसद्रूपम् अयोग्यस्वभावो यस्य तस्य मे मम पूर्वोक्तधर्म(मैः)वैलक्षण्ये सति साम्यं सामानाधिकरण्यं(सादृश्यं) क्व कुतः? नास्त्येवेत्यर्थः। एवं परमनिकृष्टस्य मम कथं त्वत्साम्यापत्तिरिति भावः॥ ६६॥

**मद्दोषव्रजमाश्रयव्ययकरं लक्ष्मीधर त्वद्गुण-**
**व्रातं लोकहिते रतं च मनसा जानन् भयाभीतिभाक्।**

दावव्याप्तमुखद्रुकोटरगतस्वाभीष्टवातापत-
द्वर्षत्सन्निहिताम्बुभृद्गणशुकन्यायेन वर्ते हरे ॥ ६७ ॥

दवानलव्याप्तशुकन्यायेन जीवामीत्याह—मद्दोष इति ॥ हे हरे हेलक्ष्मीधर मम दोषाणां पापानां व्रजं समूहम् आश्रयभूतस्य आत्मनः व्ययकरं नाशकरम् । "स्वदोषानुसन्धानं भयहेतु"रित्युक्तेः । त्वद्गुणव्रातं तव गुणानां कल्याणगुणानां व्रातं समूहं लोकहिते जनहिते रतमासक्तमिति, 'भगवद्गुणानुसन्धानमभयहेतुरिति च' [उक्तेः] मनसा जानन् अध्यवसायाभावात्(-यं कुर्वन्) भयम् अभयं भयाभावं च भयाभीती तद्वाक् प्राप्तस्सन् दावेन दावानलेन व्याप्तमाक्रान्तं मुखं पुरोभागो यस्य तादृशं यत् द्रुकोटरं वृक्षस्थदीर्घकोटरं तस्मिन् गतः प्राप्तः यः शुकः[1] तस्याभीष्टः यो वातः तेनापतन्नागच्छन् वर्षन् वर्षमाणः सन्निहितः समीपमागतः अम्बु भृतां मेघानां गणस्संघो यस्य सः । सचासौ शुकश्च तस्य न्यायेन वर्ते वर्तामी (स्थितोऽस्मी)त्यर्थः ॥ ६७ ॥

आचक्राम जगन्ति ते पदमिति स्यात्किंवदन्ती मृषा
नैवं चेन्मितमावृणोतु मम हृद्भूयोऽपि नैव त्यजत् ।
स्थाल्यन्धःकणनीतितोऽर्थयुगथो निश्चीयते सा मया
सर्वे श्रीभृदवेत्य शक्तिममितां त्वामाश्रयेयुस्ततः ॥ ६८ ॥

तल्लोकाक्रमणं स्थालीपुलाकन्यायेनाह—आचक्रामेति ॥ हे श्रीभृत् ते तव पदं पादपद्मं कर्तृ, जगन्ति भुवनानि आचक्रामेति आववारेति किंवदन्ती लोकाप(लोक)वादः । 'किंवदन्ती जनश्रुति'रित्यमरः । मृषा मिथ्या स्यात् मृषा भवतीत्यर्थः । एवं न चेत् मृषा न चेत् सा सत्या चेदित्यर्थः । ते पदं मितमल्पं मम हृत् चित्तं भूयोऽपि पुनः नैव त्यजत् नैव परित्यजत् सदेव आवृणोतु आक्रामतु । पुनरत्यागः सर्वेषां प्रदर्शनार्थम् । एवमपि चित्ता("एवं अल्पमश्चित्ता") क्रमणे सति अथो अनन्तरं स्थाल्यां पात्रविशेषे अन्धः[कणः] अन्नकणः तस्य

---

1. स्वाभीष्टेत्यत्र स्वशब्दार्थोऽयम् । "... कोटरगतः स्वाभीष्टः...... अम्बुभृद्गणो जलदसङ्घो यस्य तादृशश्च यः शुकः तन्न्यायेन" इत्यन्यत्र ।

नीतित: न्यायादित्यर्थ: । जगत्याचक्रामेति जनश्रुति: अर्थयुक् अर्थेन सहिता निश्चीयते । तत: अनन्तरं सर्वेऽपि समस्ता अपि ते जना: अमितामियत्तारहितां शक्तिं जगदाक्रमणशक्तिमवेत्य दृष्ट्वा त्वामाश्रयेयु: आश्रयणोद्युक्ता भवेयुरित्यर्थ: । रक्षणापेक्षयेति भाव: ॥ ६८ ॥

कुल्यायां सगरात्मजै: कररुहैरुत्पादितायां क्वचित्
सेतुं किञ्चिदकारयो वनचरै: पूर्वं किलैतत्कियत् ।
उत्ताराय भवाम्बुधेरपजने रत्नैर्गुणैस्तैर्हरे
सेतुं मे प्रतिपाद्य दर्शयसि चेच्छक्तो विनिर्णीयसे ॥ ६९ ॥

पूर्वं वनचरैस्समुद्रे सेतुं कृतवानहमिति मा संतुष्यथा: । इदानीं भवाम्बुधौ सेतुं कृत्वा मां रक्षसि चेत् शक्त इति निश्चिनोमीत्याह—कुल्येति ॥ गरेण गरलेन सहितस्सगर: तस्यात्मजा: पुत्रास्तै: । करे रोहन्ति हस्ते रोहन्तीति कररुहा नखा इत्यर्थ: । तैरुत्पादितायां खनितायां कुल्यायां कृत्रिमसरिति । भवाम्बुध्यपेक्षया कुल्याप्रायत्वमस्येत्यर्थ: । पूर्वं त्रेतायुगे यस्त्वं(यत् त्वं)(?)वनचरै: सुग्रीवादिभिर्वानरै: क्वचित् क्वचित्स्थले किञ्चित् किञ्चिन्मात्रं सेतुमकारय: किल कृतवान् किल । किलेति वार्तायामलीके वा । एतत् किञ्चन्मात्रसेतुकारयितृत्वं कियत् कियन्मात्रम् । अपगता निरस्ता जनिर्जन्म यस्य तस्य अनादेर्भवाम्बुधे: संसारसमुद्रान्ममोत्ताराय उत्तारणाय हे हरे ते तव गुणैरेव रत्नै: सेतुं प्रतिपाद्य कृत्वा दर्शयसि चेत् शक्त: समर्थ इति विनिर्णीयसे विशेषेण निश्चीयसे । तदा निश्चिनोमीत्यर्थ: ॥ ६९ ॥

अप्रकृतिबद्धमपि सु-
प्रत्ययमनवद्यमपि लसद्दोषम् ।
कमलाप्रियमपि कुपतिं
गिरिस्थ(स्थित)मपि श्रये नियन्तारम् ॥ ७० ॥

वेंकटाचलवासिनं त्वां श्रय इत्याह—अप्रकृतीति ॥ जीववत् जीवस्येवेति

वतिः । प्रकृत्या प्रधानेन बद्धत्वं नास्तीत्यप्रकृतिबद्धमपि सुप्रत्ययं भगवत्पक्षे सुज्ञानश्चेति विरोधपरिहारः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतु'ष्वित्यमरः । अवद्यं दोषः तन्नास्तीति अनवद्यं तस्य दोषवत्त्वं विरोधः । लसद्दोषं लसद्बाहुमि[त्य]र्थात् परिहारः । कमलाप्रियमपि लक्ष्मीप्रियमपि कुपतिं कुत्सितपतिमिति विरोधः । भूपतिमित्यर्थात्परिहारः । गिरिस्थमपि गिरि वाचिस्थ(स्थित)मपि नियन्तारं नियामकं [" आज्ञावर्तिनः" न " नियतृत्वम् "] विरोधात् । गिरौ वेंकटाचले स्थितमित्यर्थात् परिहारः । एवं भूतं त्वां श्रये आश्रये ॥ ७० ॥

सुरासुरार्याञ्चितपार्श्वराका-
विलक्षणेन्दूपमितं रमेश ।
एकैकमुक्ताफलकर्णभूषं
मुखं मुहुस्ते कुरुते मुदं मे ॥ ७१ ॥

ते मुखं मम संतोषं करोतीत्याह—सुरासुरेति । हे रमेश लक्ष्मीश सुरासुराणां देवासुराणामार्यौ पुरोहितौ गुरुशुक्रौ ताभ्यामञ्चितमुद्भासितं पार्श्वद्वयं[1] यस्य सः । सचासौ राकायां पूर्णिमायां यो विलक्षण इन्दुश्चन्द्रः अप्रसिद्धचन्द्र इत्यर्थः । तेनोपमितं निदर्शनीकृतम् । एकैकमुक्ताफले एकैकमुक्तास्वरूपे कर्णभूषे कर्णभूषणे यस्य तत् ते मुखं मे मम मुहुः पौनःपुन्येन मुदं संतोषं कुरुते करोतीत्यर्थः ॥ ६१ ॥

दुर्वारोग्रमहाघजालयुगसौ किञ्चित् कथञ्चित्कचित्
कुर्याच्चेच्छरणागतिं कथममुं रक्षिष्य इत्यात्तभीः ।
अभ्यस्तं शरणागतावनवचः कृत्वाऽप्रचितं गिरौ
दुर्गे श्रीश फणीशभृद्विषभिषग्वेषी निगूढोऽसि किम् ॥ ७२ ॥

मद्रक्षणभिया त्वया गिरौ लीनं किमित्याह—दुर्वारेति ॥ हे श्रीश, फणीशभृत् नागाभरणः अत एव धृतभिषग्वेषः धृतवैद्यवेषः त्वं दुर्वाराणां

1. उद्भासिते पार्श्वे इति द्विवचनतात्पर्यमेवं प्रकाशितम् ।

निवारयितुमशक्यानामुग्राणां क्रूराणां महाघानां महापापानां जालं समूहः तेन युज्यत इति युक् युक्त इत्यर्थः। असौ चेतनः जीवः कचित् *'स्थिते मनसि सुस्वस्थ' इत्यादिप्रकारेण स्वस्वस्थकाले कथञ्चित् अतिप्रयासेन शरणागतिं शरणवरणं कुर्याच्चेत् करिष्यति चेत् अमुं शरणागतं कथं रक्षिष्ये केन प्रकारेण रक्षिष्य इति आत्तभीः स्वीकृतभीस्सन् अभ्यस्तं पुनः पुनरुक्तं शरणागतानां भरन्यासनिष्ठानामवने रक्षणे रक्षणविषये यद्वचः यद्वाक्यं तत् अभ्रे आकाशे चित्रम् आकाशलिखितं कृत्वा दुर्गे गन्तुमशक्ये गिरौ पर्वते निगूढः प्रच्छन्नस्सन् असि किम् आसीत्कि(आस्से कि)मित्यर्थः॥ ७२॥

गिरिच्छलबिलेशयप्रवरमूर्धनैल्यस्फुर-
न्मणिर्नरपतन्मृगक्रिमिदृशां च वीक्ष्यस्सदा।
यदीक्षितनतस्पृहः कृतविलम्बनो वर्तसे
तदा त्वनृतमद्गिरा समयभाक् त्वमेवात्र माम्॥ ७३॥

नाहं भीतः। सर्वमुक्तिप्रसङ्गपरिहारार्थं *'रक्षापेक्षां प्रतीक्षते' इति श्लोकसार्थक्याय प्रतीक्षामी(?)त्याह—गिरीति॥ हे श्रीश गिरिच्छलस्य पर्वतव्याजस्य बिलेशयप्रवरस्य सर्पश्रेष्ठस्य मूर्धनि शिरसि भवं मूर्धन्यं तस्मिन् (विद्यमानः) नैल्येन नीलमणित्वेन स्फुरन् प्रकाशमानो यो मणिरिन्द्रनीलमणिरित्यर्थः। द्रुहिणयजनेत्यादिवत्[1]। त्वं भवान् नराः मनुष्याः पतन्तः पक्षिणः मृगा व्याघ्रादयः क्रिमयः कीटाश्चेति द्वन्द्वः। तेषां दृशां दृष्टीनां सदा सर्वकालेऽपि वीक्ष्यः वीक्षायोग्यः ईक्षिता दृष्टा नतानां प्रपन्नानां स्पृहा येन सः कृतविलम्बनः कृतालस्यः वर्तसे यदि तिष्ठसि चेत् तदा तस्मिन् काले अनृतमद्गिरा लोकवञ्चनार्थं शरणागतोऽस्मीत्युक्तया[मम गिरा]समयभाक् सर्वमुक्तिपरिहाराय मच्छरणवरणोक्तिमवलम्बकः (-म्वं कृत्वा) त्वमेव माम् अव रक्षेत्यर्थः॥ ७३॥

---

1. "शेषस्य मूर्धनि विद्यमाना नीलमणिरित्यर्थः। 'द्रुहिणयजनवेद्यां श्यामलो हव्यवाहः' इतिवत्" इत्यन्यत्र। '[द्विरदशिखरिसीम्ना सद्मवान् पद्मयोनेस्तुरगसवनवेद्यां श्यामलो हव्यवाहः' इति श्रीनिगमान्तदेशिककृतौ वरदराजपञ्चाशति प्रथमश्लोकस्य पूर्वार्धम्।

भीकरकाञ्चनलोचन-
घूकदिवाकरमभीरुमनेकम्[1] ।
नाकपशोकविमोक
श्रीकर सूकरविभो नौमि त्वाम् ॥ ७४ ॥

सूकराद्यनेकावतारं त्वां नमामीत्याह—भीकरेति ॥ नाकपस्य स्वर्गपालकस्य शोकं दुःखं विमोचयति । नाशयतीति श्रीकर लक्ष्मीकर सूकरविभो वराहावतार । भीकरः भयङ्करः यः काञ्चनलोचनः हिरण्याक्षः स एव घूकः दिवान्धः तस्य दिवाकरं सूर्यम् अभीकं भयरहितम् एकं कारणावस्थायामेकस्वरूपमित्यर्थः । तद्भिन्नमनेकं कार्यावस्थायामनेकं महीमहीधरादिरूपेणानेकविधमित्यर्थः । एतादृशं त्वां भवन्तं नौमि नमस्करोमीत्यर्थः ॥ ७४ ॥

दुस्त्यजफलीकरण सु-
श्रीः कनकाद्रिस्थितोऽपि वित्तार्थी ।
पुरतो निपतितमशरण-
मनवधिकार्तस्वरं त्यज न मां त्वम् ॥ ७५ ॥

यदाकदाऽपि मां न त्यजेत्याह—दुस्त्यजेति ॥ दुःखेन[त्यज्यते दुस्त्यजं] त्यक्तुमशक्यं फलीकरणं येन तस्य संबुद्धिः । फलीकरणं तण्डुलतुषाः । अत्यन्त-लुब्ध इति भावः । शोभनाः श्रियो यस्येति संबुद्धिः । कनकस्य कनकमयस्य(ये?) अद्रौ पर्वते स्थितोऽपि वित्तार्थी द्रव्यार्थी पुरतः अग्रतः निपतितं दण्डवदिति भावः । अशरणं रक्षकान्तरशून्यम् अनवधि अवधिरहितं कार्तस्वरं सुवर्ण(र्णं)['मां'] लक्ष्मीस्वरूपं, कार्तस्वरविशेषणम् । अनवधिक आर्तस्वरो यस्य तं मामिमं दासं च न त्यज त्यागं न कुरु ॥ ७५ ॥

1. अत्र वृत्तभङ्गः । 'अभीकरमनेकम्' इति पठित्वा 'अभीकरं अभयदम्' इति व्याख्याने तस्य परिहारो भवति । उत्तरार्धेऽपि नौमीत्यत्र नमामीति युक्तम् । यद्वा गीत्यार्यायामपि षष्ठो गणो एकलघुमात्ररूप इति मतेनेदम् ।

**मा ते स्ताद्रुडदेयतान्तसुम मय्यर्थित्वतस्तज्जग-**
**त्संसर्गान्नतु मत्स्वभावजनितं नायाचथाः किं बलिम् ।**
**वित्तार्थी कनकाद्रिभागसि ततो याच्ञानिवृत्त्युज्झितं**
**लोकं मां नय वीतदेहिवचनः स्यां किङ्करस्ते सदा ॥ ७६ ॥**

याच्ञाज्ञस्य तव मद्याच्ञाकरणं युक्तमित्याह ॥ अदेयं दानानर्हं तान्तं म्लानं सुमं पुष्पं यस्येति संबुद्धिः । म्लानपुष्पमपि न ददासीति लौभ्यातिशयकथनम् । कुसुमानां कूपनिक्षेपादितरेषामदानाच्चेति भावः । अर्थित्वतः याचकत्वाद्धेतोः मयि दासभूत इत्यर्थः । ते तव रुट् प्रतिघा । 'प्रतिघारुट्क्रुधौ स्त्रिया,' मित्यमरः । मा स्तात् माऽस्तु । तत् याचकत्वं जगत्संसर्गात् लोकसंपर्कादागतं प्राप्तमित्यर्थः । मत्स्वभावेन जनितमुत्पादितं न भवतीत्यर्थः । जीवस्य ज्ञानानन्दादिस्वरूपत्वात् याचकत्वाभावः । प्रत्युत त्वय्येव वर्तत इत्याह त्वं चेति[1] । त्वं बलिं वैरोचनिं नायाचथाः किम् न याचितवानसि किम्? याचितवानेवेत्यर्थः । तर्हि देवकार्यार्थं न स्वार्थं याच्ञेत्याह—वित्तेति । त्वं कनकाद्रिभागपि वेंकटाचलभागपि वित्तार्थी द्रव्यार्थी असि वरदानादिद्वारा धनं काङ्क्षस इत्यर्थः । तत जगत्संसर्गकृतत्वाद्धेतोः । याच्ञानिवृत्तिभ्यां याच्ञापुनरावृत्तिभ्यामुज्झितं त्यक्तं वैकुण्ठं मां नय । * न च पुनरावर्तत इति श्रुतेः । वीतं विगतं देहीति वचनं प्रदिशेति वचनं कर्मकृतदेहवानिति वचनं च यस्य तादृशस्सन् ते तव सदा सर्वकालेऽपि किंकरः दासः स्यां भवामीत्यर्थः ॥ ७६ ॥

**भक्तैस्स्वार्थपरैरकार्युपकृतिः का वेति तान् रक्षसि**
**त्वद्वात्सल्यदयाक्षमाद्युपचयव्यग्रं परार्थे रतम् ।**
**कस्मान्नावसि मामघौघनिरतं स्वीयं प्रभो श्रीनिधे**
**घण्टाकर्णमुखावनादपि यशो मद्रक्षणे स्यान्महत् ॥ ७७ ॥**

इतः परं घण्टाकर्णमुखरक्षणादपि मद्रक्षणमेव तव यशस्करमित्याह—भक्तैरिति ॥ श्रीनिधे स्वार्थः स्वप्रयोजनं परो येषां तैः मोक्षं लब्धुकामैरित्यर्थः ।

1. इदं श्लोके नास्ति ।

भक्तैः [का वा कियती][1] उपकृतिरुपकारः अकारि व्यधायि पापक्षयादिभिरित्यर्थः। अन्यथा रक्षणे बह्वायासः स्यात [इति तान्] मनःपरिपाककाले अत्यन्तं रक्षसि। रक्षणं करोषीत्यर्थः। हे प्रभो तव वात्सल्यं वत्सलत्वम्। दोषादर्शित्वं वात्सल्यमिति निगमान्तगुरवः। दोषभोग्यत्वतिति लोकाचार्याः। दया कृपा। [पर-]दुःखदुःखित्वं दयेति लोकाचार्याः। परदुःखासहिष्णुत्वं दयेति निगमान्तगुरवः। क्षमा शान्तिः। आदिशब्देन महतो मन्दैस्सह नीरन्ध्रेण संश्लेषः सौशील्यम्। आदयो येषां गुणानामित्यर्थः। उपचये वृद्धौ व्यग्रं त्वरमाणं परस्य उत्कृष्टस्य तवार्थे प्रयोजने रतमासक्तम् अघेषु पापेषु एकं मुख्यं यथातथा निरतं निष्ठं स्वीयं त्वद्दासं मां कस्मात् कुतो वा हेतोः नावसि न रक्षसि। मद्रक्षणात्तव वात्सल्यादयः प्रकाशन्त इत्यर्थः। त्वद्रक्षणे किं फलम्। आह—घण्टाकर्णेति। घण्टाकणमुखानां घण्टाकर्णप्रभृतीनाम् अवनात् रक्षणादपि मद्रक्षणे महत् अधिकं यशः कीर्तिः स्यात्; अन्धकारे हि दीपस्य प्रकाशः। तथा मद्रक्षणात्तव प्रकाशः। भक्तास्तु स्वार्थपराः अहं तु त्वत्कार्यैकपरः। मया पापे कृते वात्सल्यादिगुणाः प्रकाशन्त इत्यर्थः॥ ७७॥

**श्रीनाथ स्वापहारान्मयि तव रुडभूद्दण्डयस्येतमस्मात्**
**मां त्वत्क्रूरप्रकृत्या स्वविभवपरया प्रेरिता धीर्ममेत्थम्।**
**चक्रे नाहं तदेनां निगलय तु पदे स्वं हृतं ते गृहाण**
**त्वं दूरे मे कुरुष्व प्रकृतिमपि पुनर्नापहारः प्रसीद॥ ७८॥**

त्वदीयां प्रकृतिं दूरीकुरुष्वेति प्रार्थयते—श्रीति॥ हे श्रीनाथ तव एतस्मात् स्वापहारात् तव द्रव्यभूतात्मापहारात्। आत्मापहारः* त्वं मेऽहं मे कुतस्तत्तदपि कुत इद'मितिवत् स्वतन्त्रोऽहमिति बुद्धिः। *योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यत इत्युक्तेः[2]। मयि तव रुट् क्रोधोऽभूत्। एतं मां दण्डयसि

1. का वा उपकृतिरकारीति मत्वा तान् रक्षसि। तैर्न काचिदुपकृतिस्ते कृता। तस्मात् तद्रक्षणं न तव यशसे। इति युक्ततरम्।

2. 'किं तेन न कृतं पापं चोरेणात्मापहारिणा'॥ इत्युत्तरार्धम्।

दुःखं दापयसीत्यर्थः। स्वस्य विभवः संसाराभिवृद्धिः परा प्रधाना यस्यास्सा [तदा] तव दुष्टया प्रकृत्या मूलप्रकृत्या। अनेन प्रकृतेर्भगवत्कार्यसाधकत्वात् मन्त्रित्वं गम्यते। प्रेरिता नियमिता मम धीः धर्मभूतज्ञानमित्यर्थः इत्थं चक्रे एवं चक्रे आत्मापहारं चक्र इत्यर्थः। अहम् आत्मपदार्थोऽहं न कृतवानित्यर्थः। तत् तस्मात्कारणात् एनां मम धियं ते पदे स्थाने चरणे निगल्य तु बन्धनं करोतु ('कुर्वेव')। निगल बन्धन इति धातुः। तुरवधारणे। तुःस्याद्भेदेऽवधारण इति निघण्टुः। हृतमपहृतं ते तव स्वं स्वत्वभूतं मामित्यर्थः। त्वं गृहाण गृह्णीष्वेत्यर्थः। आत्मसमर्पणं करोमीति चार्थः। त्वत्संबन्धिनीं प्रकृतिमपि दुष्टमन्त्रिणं मे मम दूरे कुरुष्व प्रकृतिसंबन्धं निवर्तयेति चार्थः अपहारः आत्मापहारः पुनर्न [यथा] भवति तथा प्रसन्नो भवेत्यर्थः। प्रकृतित्यागे स्वातन्त्र्यधीर्न भवति, तदभावे आत्मापहारो[न] भवतीति भावः॥ ७८॥

**रत्नैरितराप्रमेयपटुतैस्त्रासादिदोषोज्झितैः**
**शुद्धैः काञ्चनभूषणालिममिताम्मुद्भासयद्भिः परम्।**
**त्वत्सायुज्यमुपागतैस्तव वपुर्हारैर्जरीजृम्भ्यते**
**विष्णो त्वत्पदमप्रमेयमहिम श्रीनाथ सद्भिर्यथा॥ ७९॥**

वज्राङ्गिसेवाप्रकारमाह—पुंरत्नैरिति॥ हे श्रीनाथ अप्रमेयः महिमा प्रभावो यस्य तस्य संबुद्धिः[1]। हे विष्णो इतरैरन्यैः आयसैः अप्रमेद्या भेदयितुमशक्या पटुता पाटवं येषां तैः। वज्रं वज्रेण भिद्यत इति न्यायात्। ("कामक्रोधाद्यवध्यैश्च") त्रासादिदोषैः पटलादिदोषैः भयादिभिश्च रहितैर्मुक्तैः। 'त्रासो भीमणिदोषे च' त्यमरः। शुद्धैः धवलैः प्रकृतिरहितैश्च अमितामपरिमितामित्यर्थः। काञ्चनभूषणानां सुवर्णभूषणानाम् आलिं पङ्क्तिम् उद्भासयद्भिः प्रकाशयद्भिः सुवर्णखचितभूषणैश्च परमुत्कृष्टं त्वत्सायुज्यं त्वत्साम्यमुपागतैः प्राप्तैः पुंरत्नैः हीरैर्वज्रैः मुक्तस्वरूपपुरुषश्रेष्ठैश्च त्वद्वपुः शरीरं कर्तृ, त्वत्पदं विष्णुपद-

1. एतदनुरोधेन '—महिमन्' इति पठनीयमिति भाति। "अमेयमहिमेति पदविशेषणम्" इत्यन्यत्र। अत्रापि च तथोत्तरत्र योजना दृश्यते।

माकाशः वैकुण्ठश्च अप्रमेयो मानानर्हो महिमा यस्य तत् सद्भिर्यथा नक्षत्रैरिव सत्पुरुषश्रेष्ठैः नित्यमुक्तैरिव च जरीजृम्भ्यते प्रकाशते । अत्र सायुज्यं तावत्समानगुणयोगित्वं न त्वैक्यम् । अन्यथा * आदित्यस्य सायुज्यं गच्छतीत्यादावतिव्याप्तेः । वज्राणि भूषणद्वारा वपुर्निष्ठा मुक्ताश्च परितो वेष्टयन्ति । * अङ्गान्यन्या देवता इत्युक्तेश्च अस्मदुक्तमेव रमणीयम् ॥ ७९ ॥

संख्यावद्भिरपि व्यपेतगणनैर्गन्धोज्झितैरप्यलं
सामोदैर्विगतोग्रतैरपि मनस्संभूतधिक्कारिभिः ।
शेषाद्रीडसदृग्बलैरपि सदा त्वद्दर्शनप्रोज्ज्वलैः
सद्भिस्सेवितमादरात्तव कदा पश्येम पादद्वयम् ॥ ८० ॥

कुलशेखरादिभिः सद्भिस्सेवितं त्वत्पादद्वयं कदा पश्येयमिति प्रार्थयते— संख्यावद्भिरिति ॥ हे शेषाद्रीश्वर व्यपेता रहिता गणना संख्या येषां तैः । संख्यावत्त्वे संख्यारहितत्वं विरुद्धमिति भावः । संख्यावद्भिः पण्डितैरिति परिहारः । संख्यावान्पण्डितः कविरित्यमरः । गन्धः परिमलः आमोदः परिमलः । गन्धरहितत्वे गन्धवत्त्वं विरुद्धम् । गन्धोज्झितैः गर्वोज्झितैः सामोदैः सानन्दैरिति परिहारः ।

"गन्धो गन्धक आमोदे लेशे संबन्धिगर्वयोः ।
मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ॥"

विगतमुग्रत्वं शिवत्वं येषां तैः । मनसस्संभूतो मन्मथः धिक्कुर्वन्ति तिरस्कुर्वन्तीति धिक्कारिभिः । शिवभिन्नत्वे कामदाहकत्वं विरुद्धम् । विगततीक्ष्णत्वैः कामादिदोषरहितैश्चेति परिहारः । दृशोर्नेत्रयोः बलं दृग्बलं दृग्बलेन सह वर्तन्त इति सदृग्बलाः ते न भवन्तीत्यसदृग्बला अन्धाः तैः । अन्धानां त्वद्वीक्षकत्वं विरुद्धम् । असदृक् असदृशं बलं ज्ञानादिबलं येषां तैरिति परिहारः । तत्र दर्शनेन सेवया प्रोज्ज्वलैः प्रकाशमानैः सद्भिः सत्पुरुषैः आदरात् अलमत्यन्तं सेवितं तव पादद्वयं पादयुग्मं कदा पश्येम सेवेम ॥ ८० ॥

हरिणा रिपुकरिणामुरुकरुणावितकरिणा
शरणागतिकरणामरतरुणाऽऽदिमगुरुणा ।
दरिणाऽम्बुजशरणाशरदरुणाम्बुजहरिणा
हरिणा कृतभरणा वयमरुणालिजिदरिणा ॥ ८१ ॥

विष्णुना वयं कृतभरणा इत्याह—हरिणेति ॥ रिपूणां शत्रूणामेव करिणां गजानां हरिणा सिंहेन । उरुकरुणया अधिकदयया अवितः रक्षितः करी गजो यस्य तेन । शरणागतिर्भरन्यासः करणं साधकतमं येषां तेषाम् अमरतरुणा कल्पवृक्षेण । आदिमगुरुणा प्रथमगुरुणा । दरः शङ्खः अस्यास्तीति दरी तेन । अम्बुजं शरणं भवनं यस्यास्सा लक्ष्मीस्सैव शरदरुणाम्बुजं शरत्कालारुणपद्मं तस्य हरिणा सूर्येण । अरुणालीनां सूर्यावलीनां जित् जेतृ अरि चक्रं यस्य तेन हरिणा विष्णुना वयं कृतं भरणं येषां ते कृतभरणाः कृतरक्षणा इत्यर्थः ॥ ८१ ।

तुल्योत्कृष्टविवर्जितो यदि गुणैस्त्वं चेत्त(णैः स्वं ते त) दन्यैरहं
तादृङ्मानतमा त्रयी यदि ततः शुद्धस्य मत्सङ्गतः ।
नावद्यं तव किं भवेदिति पुरा दृष्टं न चेन्मादृशाः
किं दृष्टः क्वचनापि तत्कुरु भवच्छुध्यै विदोषं तु माम् ॥ ८२ ॥

[यदि] मत्स्पर्शात्तव दोषः स्यात्तर्हि मां विदोषं कुर्वित्याह तुल्येति । [गुणैः] तुल्यं च (श्च) उत्कृष्टं च (श्च) तुल्योत्कृष्टे(ष्टौ) अतिशय(?)समानाधिकरणे (-गुणौ), ताभ्यां विवर्जितः तव स्वं चेद्यदि(यदि) धनं यदि ["अहं तदन्यैः दोषैः तुल्योत्कृष्टविवर्जितः"] त्रयी वेदः [1]तादृङ्मानतमा स्वतः प्रमाणतया प्रमाणतमा यदि । वेदविरुद्धपापबृन्दमहमेव करोमीत्यर्थः । ततस्तस्मात् मत्सङ्गतः मत्संसर्गात् शुद्धस्य परिशुद्धस्य तव अवद्यं दोषः न भवेत् किम् न स्यात् किम्—स्यादेवेत्यर्थः । पुरा पूर्वकाले इति एवंप्रकारेण अपरिशुद्धजीवसंसर्गात् दोषवत्त्वं

1. 'अहं दोषैः तादृक् तुल्योत्कृष्टविवर्जितः त्रयी मानतमा यदि ' इति योजनं युक्तम् ।

न दृष्टं चेत् मादृशः मत्सदृक्षः महापापयुक्तः क्वचनापि क्वचिदपि दृष्टः किं न दृष्ट एवेत्यर्थः। मत्सदृशोऽहमेवेति भावः। एवमत्यन्तपापसंसर्गवशात् तवापि दोषः स्यादेवेत्यर्थः। तर्हि किं कुर्म इत्यत्राह—तदिति। तत्तस्मात् भवतः तव शुध्यै मां विदोषं दोषरहितं कुरु कुरुष्व। पयःपानस्य पाषाणधारणवदिति[1] भावः॥ ८२॥

वैकुण्ठे परतैव वैभववती सौशील्यमुख्यास्त्वह-
दीपास्तद्वृषशैलभाङ्नरमृगव्योमाड्द्रुमाद्यैरपि।
सेव्योऽस्यद्य बहुक्षुधस्तव चिरादेते गुणाः प्रस्फुर-
द्वारामितपापराशिममितं संप्राप्य तुष्यन्तु मे॥ ८३॥

एते सौशील्यादयः मे पापराशिमनुभूय तुष्यन्त्वित्याह—वैकुण्ठलोके परतैव परत्वगुण एव वैभवोऽ(-वम)स्यास्तीति वैभववती द्रव्य(?)प्रकर्षवतीत्यर्थः। सौशील्यमुख्याः सौशील्यप्रधानाः गुणा इह लोके अहर्दीपाः दिवारोपितदीपाः अल्पप्रकाशा इत्यर्थः। ततस्तस्माद्धेतोः वृषशैलं वृषाद्रिं भाक् सन् प्रतिपद्यमानस्सन् नरा मनुष्याश्च मृगा हरिणादयश्च व्योम्नि आकाशे अटन्तीति व्योमाटः पक्षिणश्च द्रुमाश्च वृक्षाश्चेति द्वन्द्वः। तैरपि अद्य इदानीं सेव्यः सेवार्हः अन(सि)। चिरात् बहुकालात् तव एते गुणाः सौशील्यादिगुणाः बह्वी अधिका क्षुत् येषां ते बहुक्षुधः मे मम अमितं मानरहितं यथा तथा दुर्वारं वारयितुमशक्यम् अमितं परिमितिरहितं पापराशिं पापसमूहं संप्राप्य लब्ध्वा संतुष्यन्तु संतोषं प्राप्नुवन्तु। सौशील्यमुख्या इत्यत्र मुखे भवं मुख्यं, सौशील्यं मुख्यं येषां ते सौशील्यमुख्या इति स्वार्थे ष्यञ्(?)॥ ८३॥

पदद‍र्शकोरुयोजित-
हस्ताभ्यां निजपदाब्जनम्राणाम्।

---

1. अस्ति आन्ध्रेषु कश्चिदाभाणकः यस्यायमर्थः—'पयसः कृते पाषाणो धर्तव्यः' इति। एकमेव पयोघटं वीवधेन वोढुमिच्छन् वैवधिकः एकस्मिन् पार्श्वे तं घटं पार्श्वान्तरे तत्तुल्यभरं पाषाणं च निधाय वहति। तस्य तत्पाषाणधारणमपरिहार्यम्। तथा प्रकृतेऽपीति।

**भवजलधिरूरुदघ्नः**
**स्यादिति सूचयसि ननु वृषाद्रीश ॥ ८४ ॥**

मत्पादसेविनां मुक्तिरतिसुलभेति हस्तः सूचयतीत्याह--पदेति ॥ हे वृषाद्रीश पदं पादं दर्शयतीति पददर्शकः दक्षिणहस्तः ऊरौ योजितः वामहस्तः ताभ्यां हस्ताभ्यां कराभ्यां निजे ये पदाब्जे स्वकीये पादपद्मे (तयोः) नम्राणां [ते] नमस्कुर्वतां भवजलधिः संसारसमुद्रः ऊरुदघ्नः ऊरुप्रमाणं(णः) स्यात् इति एवं-प्रकारेण सूचयसि ननु सूचनां करोषि किमु। नन्विति प्रश्ने। *मत्पादसेविनां पुंसां विरजा कटिदघ्निका। इतीव दर्शयन् दोर्भ्यामास्ते वेंकटनायकः॥ इत्यादि ॥ ८४ ॥

**चञ्चद्दारमरीचिकाविषयदुर्वीरुद्गदव्याघ्रयुक्-**
**क्रुड्दावावृतिभीमसंसृतिवनीदग्धात्मसंजीवनीम् ।**
**सारासारभवत्कथारससुधां पीतां सदा कुर्वतां**
**शेषाद्रीश सुधा सुधाऽब्धिजनिता सा शर्करा शर्करा ॥ ८५ ॥**

भवत्कथामृतं शृण्वतां सुधा मुधैवेत्याह—चञ्चदिति ॥ हे शेषाद्रीश चञ्चन्तः प्रकाशमानाः ये दारा भार्याः त एव मृगतृष्णिकाः मरीचिकाः। मृगतृष्णा मरीचिकेत्यमरः ताभिः। विषयाः शब्दादयः त एव दुर्वीरुधः दुष्टगुल्माः तैः। वीरुधो गृहगुल्मिन्य इत्यमरः। गदा रोगाः त एव व्याघ्राः तैः। रोगव्याधिगदामया इत्यमरः। युनक्तीति युक् तया। क्रुट् क्रोधः तस्यैव दावस्य दावानलस्य आवृत्या आवरणेन भीमायां भयङ्करायाम्। संसृतिः संसार एव वनी वनसमूहः। वन्या वनसमूहे स्यादित्यमरः। तस्यां दग्धानां भस्मीकृतानां। दह भस्मीकरण इति धातुः। आत्मनां जीवानां संजीवनीं सम्यग्जीवनीमित्यर्थः। सारः सारांशः आसारो धारासंपातो यस्यास्तां भवतः कथारसः रामकृष्णादिवृत्तान्तः स एव सुधा तां सर्वकालेऽपि पीतां पानकर्मीभूतां कुर्वतां सदा शृण्वतामित्यर्थः। सुधा अमृतम् अब्धौ समुद्रे जनिता उत्पादिता। सा सिद्धा सुधा अमृतं सुधा

शिलाचूर्णप्रकृतिकं द्रव्यं ['आन्ध्रभाषायां'] (गत्सु)। सा शर्करा गुडविशेषः। (चीना पञ्चदार)। शर्करा शिलाविशेषः (पिण्डिरायि) ॥ ८५ ॥

**कान्त त्वन्मतिकान्तिशान्तिकरणप्रकान्तविक्रान्त्यस-**
**द्भ्रान्तिध्वान्तदुरन्तदुष्पथगतिश्रान्तिप्रतान्तान्तरम् ।**
**शान्तस्वान्तकृताच्छचिन्तनसुधासिक्तत्वदङ्घ्रिद्वयाः**
**सन्तो मां विनिवेशयन्तु सद(मन)सि स्वीये कटाक्षेण ते ॥ ८६ ॥**

त्वद्भक्तेष्वन्यतमं मां कुर्वित्याह—कान्तेति ॥ हे कान्त हे सुन्दर। पतिरिति वा। कान्तायाः सुन्दरायाः त्वन्मतेः त्वत्स्मृतेः। त्वत्स्मृतीति वा पाठः। कान्तेः प्रकाशस्य शान्तिकरणे शान्तिक्रियायां प्रकान्ता आरम्भिता(ब्धा) विक्रान्तिर्विक्रमणं यस्यास्तस्याः(तया) असद्भ्रान्त्यैव असद्विषयकप्रमैव ("भ्रमेणैव")ध्वान्तेन अन्धकारेण दुरन्तया अन्तरहितया दुष्पथगत्या दुर्मार्गगत्या या श्रान्तिः आयासः तया प्रतान्तं प्रकर्षेण तान्तमान्तरं मनो यस्य तं मां, शान्ते शान्तिगुणयुक्ते स्वान्ते मनसि कृतेन अच्छचिन्तनेन स्वच्छविचारणेनैव सुधया अमृतेन सिक्तमार्द्रीकृतं त्वदङ्घ्रिद्वयं पादद्वयं येषां ते, सन्तः सत्पुरुषाः ते तव कटाक्षेण स्वीये स्वकीये मनसि मां निवेशयन्तु प्रवेशयन्तु ॥

**पाठान्तरम्— एनःकृन्तनसन्ततोल्बणभवद्वृत्तान्तचिन्तासुधा-**
**सन्तुष्यन्तमिमं कुरु श्रितनिधे श्रकान्त चिन्तापह ॥ ८६ ॥**

पाठान्तरे—श्रितानामाश्रितानां निधे श्रीकान्त लक्ष्मीकान्त चिन्तामितरचिन्तां हिनस्ति छिनत्तीति चिन्तापह चिन्तानिरासकेति संबुद्धित्रयम्। इमं माम् एनःकृन्तने पापच्छेदने सन्ततोल्बणस्य सर्वकालोत्कटस्य भवद्वृत्तान्तस्य *जन्म कर्म च मे दिव्यमित्युक्तरहितस्य(जन्मकर्म) ज्ञानस्य चिन्तैव (न्तयैव) विचारणैव (-णयैव) सुधायां(-धया) सन्तुष्यन्तं सन्तोषवन्तं कुरु त्वमिति शेषः ॥ ८६ ॥

किं चामराणि धवलातपवारणानि
सिंहासनानि शयनानि पदासनानि ।
पीताम्बराणि यदि वाऽत्र यथोचितं ते
सर्वोपचारकरणानि वृषाचलेश ॥ ८७ ॥

इतः परं चामराद्युपकरणतां प्रार्थयते—किं चामराणीति ॥ हे वृषाचलेश किं चामराणि चामरवदाचराणि किम्? चामरं भवामि किमित्यर्थः । धवलातपवारणानि धवलातपवारणवदाचराणि किम्? श्वेतच्छत्रं भवामि किमित्यर्थः । सिंहासनानि सिंहासनं भवामि किमित्यर्थः । शयनानि शयनवदाचराणि किम्? शयनं भवामि किमित्यर्थः । पदासनानि पादपीठवदाचराणि पादपीठं भवामि किमित्यर्थः । पीताम्बराणि पीताम्बरवदाचराणि पीताम्बरं भवामि किमित्यर्थः । अत्र कैङ्कर्यविषये यद्वि वा यद्वा एकैकप्रार्थनेन किं प्रयोजनमिति भावः । यथोचितं यथायोग्यं ते सर्वोपचारस्य करणानि साधनानि सर्वाणि च तान्युपचारकरणानि च [तद्वदाचराणि किम्] सर्वोपचारकरणानि भवामी[मि किमि]त्यर्थः । सर्वविधकैङ्कर्यप्रार्थनामात्रेण तृप्त्यभावात् सर्वाणि कैङ्कर्यसाधनान्यपि अहमेव स्यामिति वाचा प्रार्थितम् । अस्मिन् श्लोके सर्वाणि वाक्यानि आचारार्थक्विबन्तोत्तमपुरुषैकवचनानि ॥ ८७ ॥

सिद्धान्तार्थविरुद्धबद्धकुहनाबौद्धप्रबन्धच्छटा-
श्रद्धासिद्धदुरध्वबाधितभवन्निर्धारणाधारणम् ।
मा त्वं मा कुरु मासमाश्रित सुधामाधुर्यमाधुर्यवाग्-
गुम्भे त्वद्गुणयुक्प्रबन्धनिकरे संबन्धयास्मन्मनः ॥ ८८ ॥

त्वद्गुणैकप्रतिपादके श्रीभाष्यादिग्रन्थे मम मनः संबन्धयेति प्रार्थयते—सिद्धान्तेति ॥ त्वं मां सिद्धान्तार्थस्य श्रीरामानुजसिद्धान्तार्थस्य विरुद्धं यथा तथा बद्धायां रचितायां कुहनाः(?) कपटाः बौद्धाः प्रच्छन्नबौद्धाः मायावादिनः ।

*मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते इत्यादि । तेषां प्रबन्धच्छटायां प्रबन्धसमूहे श्रद्धया आसक्त्या सिद्धेन दुरध्वेन विपथेन । व्यध्वो दुरध्वो विपथः कदध्वा कापथस्समा इत्यमरः । बाधिता पीडिता भवतः निर्धारणा नितरां धारणा भवद्विषयकस्वरूपपरिष्कार इति यावत् । तस्याः धारणा स्थापनं यस्य तं मां त्वं भवान् मा कुरु एवंविधं मा कुर्वित्यन्वयः । माशब्दौ द्वितीयानिषेधवाचकौ । हे मासमाश्रित लक्ष्मीसमेत सुधाया अमृतस्य माधुर्यस्य मधुरत्वस्य माया लक्ष्म्याः धुर्यो धुरंधरो वाग्गुम्भो वाग्रचना यस्मिंस्तस्मिन् । तव गुणा वात्सल्यादयः तैर्युज्यन्त इति युजः ते च ते प्रबन्धाश्च श्रीभाष्यादयः तेषां निकरे समूहे अस्मन्मनः समुदायविवक्षया असच्छब्दः अस्माकमित्यर्थः । संबन्धय संबन्धं(द्धं)कुरु ॥ ८८ ॥

वक्षो दक्षिणमीक्ष्यतेऽक्षततटिल्लक्ष्म्या हि लक्ष्म्या जग-
द्रक्षादक्षकटाक्षयाऽक्षयभवत्स्वातन्त्र्यहृद्वीक्षया ।
माता मे सतताश्रितं तव ततो मा त्रासमात्राऽसकृ-
द्गाढप्रेमकृतागसोऽप्यतिशिशोः क्षान्त्यैकरक्ष्यस्य मे ॥ ८९ ॥

लक्ष्मीकटाक्षापहृतस्वातन्त्र्यस्त्वं मां क्षम(क्षाम्य)सीत्याह—वक्ष इति । ते तव दक्षिणं दक्षिणभागस्थं वक्षस्स्थलम् । अक्षता प्रकाशमाना तटितः शम्पायाः लक्ष्मीः शोभेव लक्ष्मीर्यस्यास्तया । जगतां लोकानां रक्षायां रक्षणे दक्षः समर्थः कटाक्षो यस्यास्तया । अक्षयीभवत् प्रवर्धमानं यत् स्वातन्त्र्यं *क्षिपामीति स्वातन्त्र्यं हरतीति हृत् वीक्षा कटाक्षो यस्यास्तया मे मम माता सततमाश्रितं ईक्ष्यते दृश्यते । ततस्तस्मात् कारणात् अतिशिशोः अत्यन्तानभिज्ञस्य असकृत्पुनः पुनः गाढप्रेम्णा पुङ्खानुपुङ्खीकृतानुरागेण कृतम् आगः अपराधो यस्य तस्यापि, तव क्षान्त्यैकरक्ष्यस्य क्षा[न्त्या एकं प्रधानं यथा तथा] रक्ष्यस्य मे मम त्रासमात्रा भयलेशोऽपि मा नास्तीत्यर्थः । लक्ष्मीकटाक्षापहृतस्वातन्त्र्यस्त्वं ममापराधान् क्षम(क्षाम्य)सीत्यर्थः ॥ ८९ ॥

अभ्राम्भोजसुखस्सदैव निरयव्राते स्वतन्त्रश्चरन्
प्राप्तं मद्ग्रहणेच्छया स्थिरसुखं त्वां मत्पुरे दुःखिनम् ।

**रुद्धं चाकरवं परास्ति यदि ते शक्तिर्हरे त्वत्पुरे**
**नोभूयश्च्युतिदे निधेहि सुखदे मां श्रीनिधे सद्विधे ॥ ९० ॥**

जीववशीकरणार्थमेव व्यूहविभवादिरूपेण भगवतो वर्तनमित्याह—अत्रेति ॥ हे सन् प्रशस्तो विधिर्व्यापारो यस्य तस्य सम्बुद्धिः । हे श्रीनिधे हे हरे इति सम्बुद्धित्रयम् । अभ्राम्भोजं गगनारविन्दभूतं सुखं यस्य सः सुखलेशरहित इत्यर्थः । सदैव सर्वदैव निरयव्राते नरकसमूहे स्वतन्त्रः अर्गलरहितश्चरन् संचरन् स्वाभाविकदुःखीत्यर्थः । मम ग्रहणं मद्ग्रहणं तस्य इच्छया मां गृहीतुमिच्छयेत्यर्थः । स्थिरसुखं स्थिरानन्दं त्वां मत्पुरे मच्छरीर इत्यर्थः । दुःखिनं दुखवन्तं रुद्धं बद्धम् अकरवं कृतवानस्मि । अभक्तमनसि भगवतः कण्टकाग्र इव स्थितिरिति भावः । परा उत्कृष्टा ते शक्तिरस्ति [यदि] । भूयश्च्युतिं ददातीति भूयश्च्युतिदं नाशदं तन्न भवतीति नोभूयश्च्युतिदं तस्मिन् त्वत्पुरे वैकुण्ठे सुखदे सौख्यदे मां निधेहि निक्षिपस्व ॥ ९० ॥

**रक्षतु लक्ष्मीशो मां रक्षितरक्षोऽनुजादिहितपक्षः ।**
**कुक्षिसुनिक्षिप्तजगल्लक्ष्मणमुनिदत्तलक्ष्मसल्लक्ष्यः ॥ ९१ ॥**

श्रीरामानुजमुनिना दत्तशङ्खचक्रो वेंकटशो मां रक्षत्वित्याह—रक्षत्विति ॥ रक्षितः संरक्षितः रक्षोनुजो विभीषणः आदिर्येषां तेरक्षोनुजादयो भक्ताः आदिशब्देन प्रह्लादः तेषां पक्षो येन सः । कुक्षौ उदरे [सु]निक्षिप्तं न्यस्तं जगत् येन सः । लक्ष्मणमुनिः रामानुजाचार्यः तेन दत्तं यल्लक्ष्मशङ्खचक्ररूपं तेन सतां भगवच्छास्त्रनिष्ठानां लक्ष्यः ज्ञेयः नोचेत् सात्वता न सेवन्त इति भावः । लक्ष्मीशः श्रियः पतिः मां रक्षतु ॥ ९१ ॥

**शब्दादिदुर्विषयतापकयुग्भवेऽस्मिन्**
**घोरज्वलज्ज्वलनतप्त इवाम्बरीषे ।**
**व्रीहि पुराणमपयः(शं) पटुतोज्झितं मां**
**कालं कियन्तमभिभर्त्स(र्ज)यसे रमेश ॥ ९२ ॥**

कियन्तं कालं भ्राष्ट्रे मामभिभर्त्सयसीत्याह—शब्दादीति ॥ हे रमेश लक्ष्मीश अस्मिन् शब्द आदिर्येषां ते ये दुर्विषयाः दुष्टविषया एव तापका बाधकाः तैर्युनक्तीति युक्, सचासौ भवस्संसारः तस्मिन् घोरं कठिनं यथातथा ज्वलता दहता ज्वलनेन अग्निना तप्ते तप्यमाने अम्बरीषे भ्राष्ट्रे, अपगतं नष्टं [शं सुखं] यस्य तत्(म्) पुराणं प्राचीनम् अत एव पटुतया पाटवेन उज्झितं व्रीहिमिव धान्यमिव मां कियन्तं कालं कियत्पर्यन्तमित्यर्थः । अभिभर्त्स(र्जे)यसे भर्जितं करोषि ॥ ९२ ॥

**केचित्पुण्यदिनेष्वनल्पयतना जिह्वाग्रमात्रे क्षणं**
**स्वाद्वल्पं गदकृच्च वस्तु समुदो यद्भुञ्जते तत्कियत् ।**
**पूर्णा सर्वरसैः समस्तगदभिन्निर्यत्नलभ्यामिता**
**लक्ष्मीनाथकथासमुज्ज्वलसुधा स्वाद्यास्ति(स्तु) मे सर्वदा ॥ ९३ ॥**

केचित्पुण्यदिनेषु बहुप्रयत्नात् यत्किंचिद्रसमनुभवन्ति । वयं तु सर्वरस गदच्छेदकं लक्ष्मीनाथकथामृतमनुभवाम इत्याह—केचिदिति ॥ अनल्पमधिकं यतनं प्रयत्नो येषां ते केचिज्जनाः जिह्वाग्रमात्रे रसनेन्द्रिय इत्यर्थः । क्षणं क्षणमात्रं स्वादु सरसं, तथाऽपि अल्पं स्वल्पं गदकृत् रोगकृत् समुदस्सन्तः सन्तोषयुक्तास्सन्तः यद्वस्तु भुञ्जते अनुभवन्तीत्यर्थः । तद्वस्तु कियत् कियन्मात्रम् न किमपीत्यर्थः । मे मम तु सर्वदा सर्वकालेऽपि सर्वरसैः समस्तरसैः पूर्णा संपूर्णेत्यर्थः । समस्तगदभित् समस्तरोगभित् निर्यत्नेन यत्नराहित्येन लभ्या लब्धुं योग्या अमिता इयत्तारहिता लक्ष्मीनाथस्य नारायणस्य कथा चरितं तया समुज्ज्वला प्रकाशमाना या सुधा सा स्वाद्या आस्वादनार्हा अस्तु भवतु ॥ ९३ ॥

**सौम्यामेककलां शुचि च दधतः सर्वज्ञशब्दं गुड-**
**क्ष्माभृच्छब्दमिवावमत्य निपुणो यत्सेवया प्राप्तवान् ।**
**निर्दोषाः सकलाः कलाः श्रयति तं शब्दं यथार्थं नम-**
**च्छीर्षालंकृतिपादुकोऽस्तु सततं देवस्तुरङ्गाननः ॥ ९४ ॥**

रुद्रो भवत्पादसेवया सर्वज्ञत्वं प्राप्तवान् तं तुरङ्गाननं भज इत्याह— सौम्यामिति ॥ सोमस्य चन्द्रस्येमां सौम्यां शुचिं धवलां परिशुद्धाम् । अप्यर्थ-कश्चकार: । शुचिमपीत्यर्थ: । एका च सा कला च एककला । षोडशांशां(श:) कला । कला तु षोडशो भाग इत्यमर: । एककलामेकविद्यां च । सर्वं जानातीति सर्वज्ञशब्दं गुडक्ष्माभृच्छब्दमिव गुडपर्वतमिव दधत:[1] निपुण: समर्थ: रुद्र इत्यर्थ: । अवमत्य निरर्थकतया तिरस्कृत्य यस्य भगवत: सेवया परिचर्यया निर्दोषा: दोषरहिता: सकलास्समस्ता: कला: प्राप्तवान् लभमान: तं शब्दं सर्वज्ञशब्दं यथार्थं यथातथा श्रयति आश्रयति, नमतां नमस्कुर्वतां शीर्षेषु शिरस्सु अलंकृतिरलंकारभूता पादुका यस्य स: तुरङ्गस्याश्वस्य आननं मुखं यस्य स: देव: हयग्रीव: सततं सर्वदा अस्तु भवतु । मत्क्षेमायेति भाव: । पुरा किल त्रिपुरविजयकाले असुरैर्निराकृतो रुद्र: अहं मरणं प्राप्स्यामीति दक्षिणाभिमुख: प्रायोपवेशं चकार । परब्रह्मभूतो नारायण आगत्य विष्णुपञ्चाक्षरमुपदिष्टवान् । अनन्तरं त्रिपुराणि जितवानिति प्रसिद्धि: । उक्तं हि **शङ्करसहस्रनामभाष्ये**—* यस्य शिष्यो महादेवो दक्षिणा-मूर्तिसंज्ञित: । भारती च तथा शिष्या तं वन्दे तुरगाननम् ॥ इति ॥ ९४ ॥

**यत्पादामृतमादराच्छिरसि यन्नामामृतं चानने**
**बिभ्रत्प्राप शिवत्वमिन्दुमकुट: सर्वज्ञतां चोज्ज्वलाम् ।**
**धाता सोमकनीतवेदनिकर: संप्राप यस्मात्त्रयीं**
**तं शुभ्रांशुविशुद्धवाहवदनं श्रीवेंकटेशं भजे ॥ ९५ ॥**

ब्रह्मरुद्राद्या: यत्पाद्याच्छुद्धा: तं वेंकटेशं भज इत्याह यत्पादेति ॥ इन्दुश्चन्द्र: मकुटे यस्य स: रुद्र: यस्य भवत: पादे पादपद्मे अमृतं गङ्गाम् आदरात् गौरवात्

1. षष्ठ्यन्तं मूले व्याख्याने चानन्वितं भाति । 'शुचिं च हि दधत्' इति प्रथमान्तं युक्तम् । तत्र च सौम्यां शुचिं च एककलां दधत् निपुणो रुद्र: सर्वज्ञशब्दं गुडक्ष्माभृच्छब्दमि-वावमत्य यत्सेवयेत्यन्वयो युक्त: । 'सौम्यां शुचिं च एककलां दधत: स्वस्य सम्बन्धिनं सर्व-ज्ञशब्दं गुडक्ष्माभृच्छब्दमिवावमत्य निपुणो रुद्र: यत्सेवया...' इति वा योजनया स्थितस्य गतिर्वक्तव्या ।

शिरसि मकुटे, आनने मुखे यन्नामामृतं यस्य तव नामामृतं रामनामामृतं बिभ्रत् भरमाणस्सन् शिवत्वं मङ्गलत्वम् उज्ज्वलां सर्वज्ञतां सर्वज्ञत्वं च प्राप प्राप्तवान् । * गङ्गां धृत्वा शिवश्शिव इत्युक्तेः,

हस्तेऽक्षमाला हृदि रामतत्त्वं जिह्वाग्रभागे वररामनन्त्रः ।

यन्मस्तके केशवपादतोयं शिवं महाभागवतं स्मरामि ॥

इत्युक्तेश्च । सोमकेन सोमकासुरेण नीतः प्रापितः वेदनिकरः वेदसमूहः सस्य सः धाता ब्रह्मा यस्मात् हयग्रीवात् त्रयीं वेदं संप्राप प्राप्तवान् । शुभ्रांशुश्चन्द्रः । विधुस्सुधांशुश्शुभ्रांशुः इत्यमरः । तद्वत् विशुद्धः श्वेतः यः वाहः हयः तस्य वदनं मुखं यस्य तं श्रीवेङ्कटेशं भजे सेवामि ॥ ९५ ॥

पूतास्त्वद्वचनाननाः क्षितिरुहः शेषाद्रिशीर्षस्थितान्
आरुह्य क्रतवे तवोडु सुमनोबुद्ध्याऽपचिन्वन्त्यहो ।
तद्बुद्ध्या मुहुरुत्सृजन्ति कुसुमान्युच्चैस्त्वराशालिनः
प्रत्यूषेऽद्य भज प्रबोधममलस्फूर्ते रमावल्लभ ॥ ९६ ॥

भक्तास्त्वां पूजयितुं कुसुमान्यपचिन्वन्तीत्याह---पूता इति ॥ अमला स्वच्छा स्फुर्तिः प्रकाशो यस्य संबुद्धिः । रमावल्लभेति सम्बुद्धिद्वयम् । त्वद्वचनं भगवद्गीता आनने येषां ते गीतापारायणपरा इत्यर्थः । यद्वा त्वां वक्तीति त्वद्वचनं त्वद्विषयकस्तोत्रपारायणपरा इत्यर्थः । अत एव पूताः परिशुद्धाः भक्ता इति शेषः । शेषाद्रेर्वेंकटाचलस्य शीर्षे शिरसि स्थितान् क्षितिरुहः वृक्षान् आरुह्य तव भवतः क्रतवे आराधनाय उडूनि[1] नक्षत्राणि सुमनोबुध्या पुष्पबुध्या अपचिन्वन्ति आवर्जयन्ति । अहो आश्चर्यम् । तद्बुध्या उडुबुध्या उच्चैस्त्वरा[राशालिनः] अधिकत्वराशालिनः कुसुमानि पुष्पाणि मुहुः पदेपदे उत्सृजन्ति त्यजन्ति । प्रबोधम् उन्मीलनम् अद्य प्रत्यूषे भज प्राप्नुहि ॥ ९६ ॥

1. मूले जात्येकवचनमित्यभिप्रायेणाह उडूनीति ।

**सत्तेजांसि सुमानि नन्दनवनादानीय देवाधिपैः**
**त्वत्पादद्वितयेऽर्पितानि सुधियां कुर्वन्ति लक्ष्मीपते ।**
**त्वत्पूजापरतुङ्गवेंकटशिरोरूढद्रुमाग्राश्रित-**
**प्रभ्राजत्सुमबुद्धिभागपचितानीतार्पितोडुभ्रमम् ॥ ९७ ॥**

भक्तैस्त्वत्पादेऽर्पितानि सुमानि उडुभ्रमं कुर्वन्तीत्याह—सदिति ॥ हे लक्ष्मीपते हे रमापते सतां नक्षत्राणां तेजांसि येषां तानि, यद्वा अम्लानत्वात् कल्पवृक्षकुसुमानां योग्यतेजांसि सुमानि पुष्पाणि नन्दनवनात् देवाधिपैर्देवाध्यक्षैः आनीय आहृत्य तव पादद्वितये पादद्वये अर्पितानि समर्पितानि सन्ति सुधियां विदुषां तव पूजापरैः आराधनपरैः तुङ्गः यो वेंकटाचलः तस्य शिरसि मूर्ध्नि रूढाः जाता ये द्रुमाः तेषामग्रेषु अन्तेषु श्रितानि आश्रितानि प्रभ्राजन्ति प्रकर्षेण प्रकाशमानानि सुमानीति पुष्पाणीति बुद्धिं भजन्ति प्राप्नुवन्तीति भाजः तैः अपचितानि जातानि (तत आ)नीतानि अर्पितानि समर्पितानि उडूनि नक्षत्राणि सु(इ)मानीति भ्रमं भ्रान्तिं कुर्वन्ति । पूजार्थं वृक्षारूढभक्तैः पुष्पबुद्ध्या अपचितार्पितोडूनि किमिति भ्रमं कुर्वन्तीत्यर्थः ॥ ९७ ॥

**त्वत्संप्राप्तविभूतिरक्षणभरः कारुण्यपूर्णो यति-**
**क्ष्माभृत्त्वत्पदयोः प्रपत्तिमकरोत्स्वीयार्थमप्यादरात् ।**
**इत्थं तद्वचने च दर्शितमभूदार्यैस्ततो मामचित्-**
**कल्पं वाऽप्यव वेंकटाद्रिधव तत्संबन्धतः श्रीनिधे ॥ ९८ ॥**

त्वत्संबन्धतः मामवेत्याह—त्वत्संप्राप्तेति ॥ हे श्रीनिधे वेंकटाद्रिधवेति संबुद्धिद्वयम् । वेंकटाद्रेर्धवः पतिरित्यर्थः । त्वत् त्वत्तःसकाशात् संप्राप्तः विभूत्योः नित्यविभूतिलीलाविभूत्योः रक्षणस्य भरो भारो येन सः, कारुण्यपूर्णः दयापूर्णः यतिक्ष्माभृत् यतिराजः तव पदयोः पादयोः स्वस्य इमे स्वीयाः दासाः तेषामर्थं तन्निमित्तमित्यर्थः । आदरात् प्रेमवशात् प्रपत्तिं शरणागतिम् अकरोत् कृतवान् ।

इत्थं तत्प्रवृत्तेः स्वीयार्थत्वमपि तद्वचने भाष्यकारवचने गद्यत्रये आर्यैः पूर्वाचार्यैः वेदान्ताचार्यश्रीकृष्णपादादिव्याख्यातृभिर्दर्शितं प्रकटीकृतमभूत् । ततो हेतोः अचित्कल्पमचित्स्वरूपं मां प्रपत्तिकरणादावसमर्थमित्यर्थः । तत्संबन्धतः रामानुज-संबन्धतः *पितामहं नाथमुनिमित्यादिवत् माम्(?) अव रक्षेत्यर्थः ॥ ९८ ॥

दैन्योक्तिर्मम सुप्तपादविनतिर्जाता तवाग्रे कुतः
कारुण्याम्बुनिधे रमेश विदितं नो पूर्णकामान्तिके ।
स्वान्तं तन्नवनीतकोमलतमं हेतुर्विधोरात्मभू-
वह्निप्रोज्ज्वलगोपिकाकुचतटीलग्नं विलीनं क्षणात् ॥ ९९ ॥

मद्दैन्योक्तिः सुप्तप्रणतिर्जातेत्याह—दैन्येति ॥ कारुण्याम्बुनिधिः दयासमुद्रः । पूर्णः कामो यस्य सः । रमेशः लक्ष्मीशः । संबुद्धित्रयम् । तव भवतः अग्रे पुरतः मम दैन्योक्तिः दीनवाक् सुप्तस्य निद्रालोः पादयोश्चरणयोः विनतिर्नमस्कारः कुतो जाता कस्माद्धेतोर्जाता । कारणं नो विदितं न ज्ञातं मयेति[1] शेषः । हे पूर्णकाम स्वान्तं हृत् हृदयम् अन्तिके समीपे नो नास्तीत्यर्थः । नवनीतवत्कोमलतमम् अत्यन्तं मृद्वित्यर्थः । विधोश्चन्द्रस्य हेतुः कारणं *चन्द्रमा मनसो जात इति चन्द्रस्य समुद्रनवनीतत्वप्रसिद्धेश्च । तत् हृदयम् आत्मभुवो मन्मथस्य वह्निना अग्निना प्रोज्ज्वलायां प्रकाशमानायां गोपिकाकुचतट्यां गोपाङ्गनाकुचप्रदेशे लग्नं सत् सक्तं सत् क्षणात् तत्काल इत्यर्थः । विलीनमन्तर्गतमासीदित्यर्थः । द्रुतमासीदिति यावदिति(?) वा । नोचेत् कथं सा प्र(सुप्त)पादविनतिः स्यादिति भावः ॥ ९९ ॥

फुल्लाक्षिद्वितयेन ते मयि कथाः शृण्वत्यमर्यादतां
श्रुत्यादीनि दृशोर्विलोक्य करणान्यल्पेतरांस्त्वद्गुणान् ।
शब्दादीनविभागतोऽनुभवितुं वाञ्छन्ति शक्तस्समः
त्वं चैवं कुरु मापते विभजनं स्तोकेऽपि दायेऽयुधि ॥ १०० ॥

1. "विदितं कारणं विदितम्" इत्यन्यत्र ।

एकेन्द्रियेणैव सर्वेन्द्रियग्राह्यपदार्थमनुभवितुं प्रार्थयते—फुल्लेति ॥ हे मापते लक्ष्मीपते मयि दासभूते । फुल्ल विकसने इति, फुल्ले विकसिते निश्चले अक्षिणी तयोः द्वितयेन द्वयेन शृण्वति अत्यादरेण शृण्वति सतीत्यर्थः । लोके अत्यादरेण श्रवणकाले नेत्रयोः विस्तृतनिश्चलत्वस्यानुभवसिद्धत्वात्तथोक्तिः । श्रुतिः श्रवणमादिर्येषां तानि करणानि इन्द्रियाणि दृशोर्नेत्रयोः न विद्यते मर्यादा ययोस्ते अमर्यादे तयोर्भावस्तत्ता ताम् अमर्यादतां[1] विलोक्य दृष्ट्वा, अल्पात् स्वल्पात् इतरानधिकान् शब्दादीन् त्वद्धर्मभूतशब्दादीन् अविभागतः अभेदेन अनुभवितुं वाञ्छन्ति अपेक्षन्ते । शक्तः समर्थः समः सर्वसमः त्वं च त्वमपि एवं कुरु तेषामनुज्ञां देहि कुरु अविभजनं कुरु । विभक्तस्य मिश्रणं न युक्तमित्याह विभजनमिति । लोके स्वल्पे दाये द्रव्ये अयुधि युद्धाभावाय भवतीति शेषः । अत्र गुणानामपरिमितत्वात् एकतः सर्वैरनुभवयोग्यत्वात् । *[2]त्वक् च दृक् चेत्यादिप्रकारेण मुक्तौ सर्वेन्द्रियग्राह्यसंभवात् मुक्तिप्रार्थनं सिद्धं भवति ॥ १०० ॥

**भूभृद्भिद्वज्रमाल्यस्फुरदमररिपुस्वामिवक्षोभिदस्ते**
**रेखामात्रेण नम्राः स्मरयुधि नखरा येषु संपीडनोत्काः ।**
**गोपीवक्षोजशैलेष्वसकृदकरुणोद्धट्टनैस्तैः किणत्वं**
**प्राप्तं गच्छेन्मृदुत्वं हृदयमिह कथं श्रीश मय्याकुलेऽपि ॥ १०१ ॥**

गोपीवक्षोजैररु(:कि)णं ते हृदयं वक्षः चित्तं च आपन्ने मयि कथं मृदुत्वं भजेदित्याह—भूभृदिति ॥ हे श्रीश भूभृतां पर्वतानां भिदा छेदकेन वज्रेण वज्रायुधेनैव माल्येन पुष्पमालिकया स्फुरत् प्रकाशमानम् अमररिपूणां देवशत्रूणां दैत्यानामित्यर्थः स्वामिनः हिरण्यकशिपोः उरः वक्षः तद्भिदस्तद्भेदकाः ते तव नखरा नखाः स्मरयुधि मन्मथयुद्धे संपीडने सम्यक्पीडने उत्कास्सन्तः कामयमानाः सन्तः येषु गोपीनां व्रजाङ्गनानां वक्षोजाः (जेषु) स्तना ए(नेष्वे)व शैलेषु पर्वतेषु

1. " स्वविषयभूतरूपग्रहणमात्रव्यापृतत्वं विहाय श्रोत्रविषयभूतशब्दग्रहणेऽपि व्यापृतत्वरूपाममर्यादाम् " ।

2. वरदराजस्तवे श्लो 24.

रेखामात्रेण रेखाकरणमात्रेण एवमतिकठिना अपि नम्रा अभूवन्निति शेषः। असकृत्पौनः पुन्येन अकरुणं दयाहैन्यं (होनं) यथा तथा उद्धट्टनैः गोपीभिः कण्डूतिनिवृत्त्यर्थम् उद्धट्टैः किणत्वं किणीभूतत्वं प्राप्तं हृदयं वक्षश्चित्तं च आकुले व्याकुलेऽपि मयि मृदुत्वं मार्दवं कथं गच्छेत् कथं भजेत्। कथमपि न भजतीत्यर्थः ॥ १०१ ॥

लङ्कायां प्राप्य बन्दीं स्वयममरवधूर्वीतबन्दीर्व्यधाः श्रीः
आर्द्रागोराक्षसीश्च प्लवगवरभयादध्यरक्षः कृपार्ता।
बन्दीज्ञ कर्मबन्दीविकलमनुकलं सागसं वा त्वदङ्घ्र्योः
लग्नं कस्मान्न पासि स्ववशवृषधरे अ(ड)म्ब मां वत्सलाऽपि॥ १०२ ॥

इदानीं वेंकटेशो न रक्षतीति भिया स्वयं कारागृहे उषित्वा सकलरक्षणोद्युक्तायाः भगवद्दयारूपायाः सीतायाः पादयोः पतति—लङ्कायामिति ॥ हे श्रीः त्वं लङ्कायां लङ्कापत्तने स्वयं बन्दीं कारागृहं प्राप्य लब्ध्वा अमरवधूः देवतास्त्रियः वीता निवृत्ता बन्दी कारागृहं यासां ताः तथोक्ताः तादृशीर्व्यधाः कृतवती। त्वम् आर्द्रं तात्कालिकम् आगोऽपराधो यासां तास्तादृशीः राक्षसीश्च एकाक्ष्येककर्णीप्रभृतिस्त्रियः प्लवगवरस्य मर्कटश्रेष्ठस्य वायुसूनोर्भयात् कृपार्ता दयार्ता सती अध्यरक्षः रक्षितवती खलु। प्रकृते किमायातमत आह। *विद्वानेव विजानाति विद्वज्जनपरिश्रममित्युक्तरीत्या तव बन्दीज्ञत्वात् मत्कर्मबन्दीं लुनीहीत्याह—बन्दीज्ञ इति। बन्दीं कष्टं जानातीति बन्दीज्ञाः (सम्बुद्धिः) स्ववशः स्वाधीनः वृषधरो(रट्)वेंकटेशो यस्याः सा, सा च सा अम्बा (सम्बुद्धिः) (-पि)वात्सल्यवत्यपि अनुकलं प्रतिक्षणं कर्मैव बन्दी बन्दिखाना तद्विकलं [1]रहितमित्यर्थः। आगोऽपराधः तेन सहितं त्वदङ्घ्र्योः त्वत्पादपद्मयोः लग्नं मां कस्माद्धेतोर्न पासि न रक्षसि ॥ १०२ ॥

खद्योतभावं भवदीयतेजः-
प्रद्योतनाग्रे तपनस्समेत्य।

1. "कर्मबन्द्या विकलं सागसं वा सापराधमपि" इत्यन्यत्र। अनेन विकलमित्यस्य हृतशक्तिकं दीनमित्यर्थ इति भाति।

**खद्योतनाम प्रययौ त्रिलोकी-**
**विद्योतमानप्रथ वेंकटेश ॥ १०३ ॥**

श्रीनिवासकल्याणगुणाम्बुधेः प्लवभूतां लक्ष्मीं स्तुत्वा पुनरपि स्तोतुमारभते —खद्योतेति ॥ त्रिलोक्यां विद्योतमाना प्रकाशमाना प्रथा प्रसिद्धिर्यस्य । सचासौ वेंकटेशश्चेति तस्य संबुद्धिः । भवदीयस्य भवत्संबन्धिनः तेजसः प्रतापस्यैव प्रद्योतनस्य सूर्यस्याग्रे पुरतः तपनः सूर्यः समेत्य प्राप्य खद्योतभावं ['ज्योति'] रिङ्गणत्वम् । खद्योतो ज्योतिरिङ्गण इत्यमरः । अप्रकाशत्वमिति यावत् । खे आकाशे द्योतते प्रकाशत इति खद्योत इति नाम प्रययौ प्रापेत्यर्थः ॥ १०३ ॥

**सत्संघातमहोसहे कुवलयप्रद्वेषिवृत्त्याश्चिते**
**नित्यं पङ्कजनीष्टकारिणि कदाचित् प्राप्य वा दक्षिणाम् ।**
**भूयोऽप्युत्तरयाशया प्रचलिते प्रायो विसर्पत्करे**
**सर्वत्रैव कठोरगौ मयि कथं लक्ष्मीश नो तिष्ठसि ॥ १०४ ॥**

सूर्यान्तर्वर्ती त्वं तत्सादृश्यात् कथं मयि न वससीत्याह—सदिति ॥ हे लक्ष्मीश सतां नक्षत्राणां सत्पुरुषाणां च संघातस्य संघस्य महसः तेजसः असह ती(इ)ति सत्संघातमहोसह इति सप्तमी । कुवलयस्य कुमुदस्य भूवलयस्य च प्रद्वेषिण्या वृत्त्या अश्चिते पूजिते । अन्यत्र सकलजनविरोधिनीत्यर्थः । नित्यं प्रतिदिनं पङ्के कर्दमे पापे च जनिर्जन्म येषां पद्मानां पापिष्ठानां च इष्टकारिणि कदाचित् कदाचित्काले दक्षिणां दिशं दक्षिणदिशमित्यर्थः । अन्यत्र द्रव्यं प्राप्य वा प्राप्यैव भूयोऽपि पुनरपि उत्तरया उत्कटया आशया वाञ्छया प्रचलिते गच्छति । अन्यत्र तत्र संचरति सति । सर्वत्रैव सर्वदिक्षु धनिकानां समीपे च प्रायः प्रायशः सर्पन् प्रसार्यमाणः करो हस्तः किरणः यस्य तस्मिन् । करो(ठोरा)गौः किरणो वाक् च यस्मिन् [तस्मिन्] सूर्य इव (इत्यर्थः) मयि च । सूर्यान्तर्वर्ती त्वं सकल-विशेषणात् सूर्यस्वरूपे मयि कथं न तिष्ठसि न वससि । मय्यपि वसेत्यर्थः ॥ १०४ ॥

वैकुण्ठादवतीर्य चौर्यनियतं जारत्वमभ्यस्तवान्
श्रीश त्वं नवनीतगोपवनिताः स्तेयानुषक्तीः श्रयन् ।
शब्दादौ विषये चिरान्मम रुचिं पातिव्रतीं बिभ्रतीं
हृत्वोत्कां त्वयि चेत्परे तु पुरुषे कुर्याः कृती स्यास्तदा ॥ १०५ ॥

वैकुण्ठे चौर्यजारत्वयोरभावात् तदभ्यासार्थं भूमाववतार इत्याह—वैकुण्ठेति ॥ हे श्रीश त्वं वैकुण्ठात् वैकुण्ठलोकात् अवतीर्य स्तेयानुषक्तीः स्तेयसंबन्धेन अनुषक्तीः संबन्धवत्यः (तीः) चौर्यसहिता इत्यर्थः । नवनीतगोपवनिताः[1] नवनीतचौर्यं गोपवनितासङ्गं च श्रयन् आश्रयन् चौर्यनियतं चौर्यसहचरितं जारत्वं च अभ्यस्तवान् अभ्यासं कृतवान् । अभ्यस्तविद्यापरीक्षां देहीत्याह—शब्दादाविति ॥ शब्दादौ विषये चिरात् अनेककालमारभ्य पातिव्रतीं पातिव्रत्यं बिभ्रतीं शब्दाद्येकप्रवणां मम रुचिमासक्तिं हृत्वा परे तु पुरुषे अन्यपुरुषे परमपुरुषे च त्वयि उत्कामुत्सुकां कुर्याश्चेत् करिष्यसि चेत् कृती कृतार्थः सम्यक् लब्धविद्य इत्यर्थः स्याः भवामी(वसी)त्यर्थः । पतिव्रतायाः मदीयरुचेः स्ववशीकरणात् परस्वहरणाच्च जारत्वसिद्धिः कार्यसिद्धिश्च । रुचिविषयशब्दगतस्त्रीलिङ्ग[पुलिंग]स्वारस्यात् स्त्रीपुरुषप्रतीतिः ॥ १०५ ॥

शेषाद्रौ कुसुमं भवेयमपि तद्यत्स्वल्पमेकं फलं
नश्यद्द्राग्द्रुमसंगतं न जनयल्लूनं करेणादरात् ।
त्वद्भक्ताय फलान्यदृष्टविलयान्यच्छान्यनेकान्यलं
सूते त्वत्पदगन्धकान्तिमृदुताश्चाप्नोति सार्थोदयम् ॥ १०६ ॥

इदानीं शेषाद्रौ कुसुमतां प्रार्थयते—शेषाद्राविति ॥ यत्कुसुमं यत्पुष्पं द्रुमसङ्गतं वृक्षसङ्गतं सत् स्वल्पमत्यन्तसूक्ष्मं द्राक् द्रुतम् । द्राङ्मङ्क्षु सपदि द्रुतमित्यमरः । नश्यत् नाशं प्राप्नुवत् एकं फलं न जनयत् नोत्पादयत् करेण

1. ‘नवनीतगोपवनितास्तेयानुषक्ती’ इत्येकं द्विवचनान्तं पदम् । नवनीतस्य स्तेयं गोपवनितानामनुषक्तिरिति यथासंख्यमन्वय इति व्याख्यान्तरात् प्रतिभाति ।

हस्तेन आदरात् प्रेमवशात् लूनं छेदितं लूञ् छेदने । त्वद्भक्ताय त्वद्दासाय अदृष्टः अदर्शितः विलयो नाशः येषां तानि अच्छानि स्वच्छानि अनेकानि अपरिमितानि फलानि सूते । अलमत्यन्तं त्वत्पादे गन्धः परिमलः कान्तिः मृदुता मार्दवं तां चा(ताश्चा)नुभवति । अतः सार्थः सप्रयोजनः उदयो यस्य तत् तत्कुसुमं शेषाद्रौ भवेयं भवानीत्यर्थ इति प्रार्थना ॥ १०६ ॥

**जेतुं त्वां सजडान्तरस्सनिनदो मेघो वृषाद्रिं गतो**
**नित्यश्रीयुत साचिरद्युतिरिलां कुर्वन् सपङ्कां स्वतः ।**
**पङ्कध्वंसक शुद्धसेवित शुचित्यक्तो नभोगस्सुखिन्**
**लज्जाभागशनीद्धतापविकरो मुञ्चत्यहो जीवनम् ॥ १०७ ॥**

मेघस्त्वां जेतुं समागतस्सन् अनन्तरं लज्जावशात् जीवनं मुञ्चतीत्याह—जेतुमिति ॥ जलेन उदकेन सहितं सजलम् आन्तरमन्तः प्रदेशो यस्य सः जडेनान्तरेण मनसा सह वर्तत इति सजडान्तरः युक्तायुक्तविवेकशून्य इत्यर्थः । निनदेन ध्वनिना सहितः सनिनदः वीरालापसहितश्च मेघस्त्वां जेतुं वृषाद्रिं गतः श्रितस्सन् नित्यया सततवर्तिन्या श्रिया लक्ष्म्या शोभया च युत युक्तेति संबुद्धिः । अचिरद्युत्या विद्युता सह वर्तत इति साचिरद्युतिः अचिरन्तनकान्तिश्च स्वतः स्वसंपर्कात् इलां भूमिम् । गौरिला कुम्भिनी क्षमेत्यमरः । सपङ्कां कर्दमसहिताम् । पङ्कोऽस्त्री शातकर्दमावित्यर्थः । सपापां च कुर्वन् पङ्कं पापं ध्वंसयतीति पङ्कध्वंसक । हे शुद्धैः परिशुद्धैः सेवित । शुचिना आषाढमासेन ग्रीष्मर्तुगतेन त्यक्तः शुचिभिः परिशुद्धैस्त्यक्तश्च नभसा आकाशेन गच्छतीति नभोगः न विद्यते भोगः सुखं यस्य सः इति चार्थः । हे सुखं सौख्यमस्यास्तीति सुखिन् । एवं परस्परतारतम्यं विचार्य लज्जां मन्दाक्षम् । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपाऽन्यत' इत्यमरः । भजति प्राप्नोतीति लज्जाभाक्सन् अशनिना वज्रेण दम्भोलिना । दम्भोलिरशनिर्द्वयोरित्यमरः तेन । इद्धेन दीप्तेन तापेन बाधया विकरः विकलस्सन् रलयोरभेदः बाधितस्सन्नित्यर्थः । जीवनमुदकं जीवितं च मुञ्चति त्यजति अहो इत्याश्चर्ये ॥ १०७ ॥

**समीरणसमीरणश्रितसुधन्यवन्यस्फुरत्-**
**सुमप्रकरतत्परभ्रमरमण्डलीवेष्टितम् ।**
**हिमाहिमभयादिवाधवलगाढवस्त्रावृतं**
**विमानमुपमानवाग्रहितमाश्रितं त्वाश्रये ॥ १०८ ॥**

तैलवस्त्रावृतमिव स्थितं विमानमुपयामीत्याह—समीरणेति ॥ समीरणस्य वायोः समीरणेन सम्यक् प्रेरणेन वायुकृतप्रेरणेनेत्यर्थः । श्रितेषु आश्रितेषु सुधन्येषु सुष्ठु यथातथा धन्येषु तद्विमानालङ्करणाद्धन्येषु कृतार्थेषु वने अरण्ये भवानि वन्यानि । तेषु स्फुरत्सु प्रकाशमानेषु सुमानां पुष्पाणां प्रकरेषु समूहेषु तत्पराभिः पुष्पप्रधानाभिः आसक्ताभिरित्यर्थः । भ्रमरमण्डलीभिः बम्बरसमूहैः वेष्टितमावृतम्; हिमाहिमयोः हिमातपयोर्भयात् अधवलेन नीलेन गाढेन वस्त्रेण आवृतमिव स्थितम् अत एव उपमानवाचा सादृश्यवाचा रहितं विमानम् आनन्दविमानम् आश्रितं त्वा त्वां श्रये आश्रयामीत्यर्थः । हिमशब्देन वर्षस्याप्युपलक्षणम् । हिमभीता वर्षभीताश्च वस्त्राच्छादनं कुर्वन्ति । कालत्रयेऽपि विमाने कुसुमपातो भवतीति च ध्वन्यते ॥ १०८ ॥

**प्रयाति मुखतां विधौ तव कलङ्कहानेच्छया**
**भजालमभिजिद्युतं प्रियवियोगदुःखासहम् ।**
**चतुर्युगलमौक्तिकश्रवणभूषणत्वं तथा**
**नखप्रतातितामपि स्वयमगाद्रमावल्लभ ॥ १०९ ॥**

अत्र चन्द्रः मुखसादृश्यं नक्षत्राणि नखसादृश्यं भजन्तीत्याह—प्रयातीति ॥ विधौ चन्द्रे कलङ्कस्य मालिन्यस्य हानेच्छया हातुमिच्छया तव भवतः मुखतां मुखत्वं प्रयाति सति प्राप्नुवति सति प्रियस्य स्वभर्तुश्चन्द्रस्य वियोगात् विरहात् यद्दुःखं बाधा तदसहम् असहमानम् अभिजिद्युतं ज्योतिश्शास्त्रप्रसिद्धाभिजिन्नामनक्षत्रेण सहितं भजालं नक्षत्रसमूहः चतुर्णां युगलं द्वन्द्वं चतुर्युगलं मौक्तिकानि मुक्ताफलानि ययोस्ते तादृशयोः श्रवणभूषणयोर्भावस्तत्त्वं तथा तेन प्रकारेण विंशतिनक्षत्राणि हे रमावल्लभ नखप्रततितां नखसमूहतां स्वयं साक्षात् अगात् प्रापेत्यर्थः । अश्विन्याद्य-

ष्टाविंशतिनक्षत्राणां मध्ये विंशतिनक्षत्राणि नखा अभूवन् अवशिष्टान्यष्टौ कर्णाभरणान्यासन्निति भावः ॥ १०९ ॥

**मद्रक्षैकक्रुतक्षणेन भवता दत्तेन चित्तादिना**
**सेवायै करणेन साधु गुरुणा गोवालसंछेदनम् ।**
**छित्त्यै शिष्य इवैधसः कुचरितं कुर्वेऽतिदुर्वारधीः**
**मामीदृग्गुणमीश रक्षसि कथं शेषाचलाधीश्वर ॥ ११० ॥**

मद्रक्षां कथं करोषीत्याह—मदिति ॥ मद्रक्षायां मद्रक्षणे एकं मुख्यं यथा तथा कृतः क्षणः उत्सवो येन तेन भवता सेवायै त्वत्सेवार्थं दत्तेन चित्तादिना करणेन चित्तादीन्द्रियैरित्यर्थः । दुःखेन वारयितुं शक्या दुर्वारा धीर्यस्य सोऽहं एधसः समिधः छित्त्यै छेदनाय गुरुणा आचार्येण दत्तेन करणेन लवित्रादिना करणेन शिष्यः गोवालानां धेनुवालानां संछेदनमिव खण्डनमिव कुचरितं कुत्सितव्यापारं साधु सम्यक् कुर्वे करोमि । हे ईश ईदृशा(शो)गुणाः दुष्टगुणा यस्य तं मां कथं रक्षसि केन प्रकारेण रक्षसि । ईशत्वात् त्यक्तुमशक्तोऽपि कथं रक्षिष्यसीत्यर्थः ॥ ११० ॥

**शाटीभास्वत्कटीत्विट्फणिपतिफणितिं चारुटीकासुकुञ्चीं**
**युष्मत्सर्वस्वपेटीं रुचिरविरचितां शुद्धगोराशिरत्नैः ।**
**वित्ताशायत्तचित्ते मयि वरदयया सन्निधे त्वं निधेहि**
**त्वद्दृश्योऽवश्यतःस्यां तदनु तव पदं न त्यजेयं भजेयम् ॥ १११ ॥**

त्वत्कल्याणगुणपेटीं फणिपतिफणितिं द्रव्याधीनचित्ते मयि निधेहीत्याह शाटीति—हे सन्निधे हे सतां निधे हे वरद (वर?) अपौरुषेयत्वात् शुद्धेषु परिशुद्धेषु वाग्राशिषु रत्नैः श्रेष्ठैः । 'रत्नं श्रेष्ठे मणावपी' त्यमरः । वेदान्तवाक्यैः । शुद्धैः परिशुद्धैः जलराशिभूतसमुद्ररत्नैश्च रुचिरं सुन्दरं यथा तथा विरचितां विशेषेण निर्मितां भावप्रकाशिकाख्यचार्वी(रु)टिप्पणीय(-णीम-)त्तया सम्यगर्थ-

बोधकत्वेन चार्वी च सा टीका च श्रुतप्रकाशिकाख्यव्याख्या सैव सुशोभना कुञ्ची पेट्युद्घाटनसाधनं यस्यास्ताम् । शाट्या काषायेण भास्वती प्रकाशमाना कटीत्विट् कटीकान्तिर्यस्य तादृशः स चासौ फणिपतिः शेषः । यतिराड्रूपेणावततारेत्यर्थः । तस्य फणितिं श्रीभाष्यरूपश्रीसूक्तिं तामेव युष्मत्सर्वस्वपेटीं युष्माकं तव श्रीभूम्यादीनां महिषीणां दिव्यायुधादीनां अनन्तगरुडादीनां च सर्वस्वस्य समस्तधनस्य पेटीं पेटीभूताम् । मायिभिः [अ]पारमार्थिकत्वेन निराकृतानां त्वद्गुणभूषणमहिष्यनन्तादीनां पारमार्थिकत्वेन श्रीभाष्येणैव सिद्धेः । अत एव युष्मत्सर्वस्वपेटीत्युक्तम् । एवम्भूतां पेटिकाम् । वित्ताशायत्तं द्रव्याशायत्तं चित्तं चेतो यस्य तस्मिन् मयि हे वरद यया (वरदयया) निर्हेतुककृपया निधेहि निक्षिपस्व । ततः किं क्रियत इत्यत्राह त्वद्वश्य इति । हे सन्निधे सतां निधे अवश्यतः अवश्यं त्वद्वश्यः तव स्वाधीनः स्यां भवामि । तदनु निक्षेपानन्तरं तव पदं त्वत्पादपद्मं न त्यजामि । परन्तु भजेयं भजामीत्यर्थः ।

**प्रयाति मुखतां विधौ तव कलङ्कहानेच्छया**
**प्रियाविरहगूढधीर्भवदुरःस्थिताया गलम् ।**
**ननान्दुरिव रागतोऽश्लिषदनर्घ्यभासोज्ज्वला**
**वृषक्षितिभृदीश्वरासितकिरीट तारावलिः ॥ १११ ॥**

तारावलिः लक्ष्मीकण्ठं आश्लिषदित्याह—हे वृषक्षितिभृदीश्वर हे असित[1] विधौ चन्द्रे कलङ्कहानेच्छया स्वमुखनिष्ठकलङ्कस्य हातुमिच्छया तव भवतः मुखं वक्त्रं प्रयाति प्राप्नुवति सति ताराणां नक्षत्राणां आवलिः पङ्क्तिः अश्विन्यादिनक्षत्रसमूहः प्रियस्य भर्तुश्चन्द्रस्य अविरहे विश्लेषाभावे गूढा प्रच्छन्ना धीर्बुद्धिः यस्याः सा प्रियसान्निध्यं काङ्क्षमाणा सतीत्यर्थः । अनर्घभासा अपरि-

1. किरीटपदं क्वापि न योजितम् । असितेति पदविभागे तद्योजनमशक्यञ्च । 'वृषाख्यस्य क्षितिभृदीश्वरस्य पर्वतश्रेष्ठस्य असितः नीलवर्णः किरीटः शिरोभूषणम् । भगवन्तमेव एवं किरीटत्वेनाध्यवसाय सम्बोधनं क्रियते' इति योजनमुचितं भाति ।

मितकान्त्या उज्ज्वला प्रकाशमाना तारावलिः [1]नक्षत्रपङ्क्तिः ['सप्तविंशति'] मुक्तारचिता मालिका सती भवतः उरःस्थितायाः वक्षःस्थलवासिन्याः श्रियः लक्ष्म्याः ननान्दुः गलं कण्ठम्। 'ननान्दा तु स्वसा पत्यु' रित्यमरः। रागादिव अनुरागादिव अश्लिषत् [2]आश्लेषं कृतवती। लोके चिरागताः तथा कुर्वन्तीति भावः॥ ११२॥

**आखेटोत्कं वृषाद्रिप्रभुमतिजवन श्रीशमानीय देवं**
**चारंचारं पुरो मे विसदृगुपकृते क्रीतदासत्वमाप्तम्।**
**मां त्वत्पादेऽभिराजद्गुणगण विनतं वीश्वरानन्दयित्वा**
**कर्माजन्याभवस्पृग्वर भज विनतानन्दनाख्यां शुभार्थाम्॥ ११३॥**

मां रक्षसि चेद्विनतानन्दन इत्याख्या प्राप्यत इत्याह आखेटोत्कमिति॥ हे अतिजवन महावेग हे विसदृक् असदृश उपकारो यस्य सः। [तथा भूत] अभिराजत्प्रकाशमानः गुणानां गणः समूहो यस्य तस्य सम्बुद्धिः। हे वीनां पक्षिणां ईश्वर नायक। हे कर्मणा प्राकृतेन अजन्य अनुद्भव। भवं संसारं स्पृशन्तीति भवस्पृशः ते न भवन्तीत्यभवस्पृशः नित्यसूरयः तेषां वर श्रेष्ठेति सम्बुद्धिः। 'सदा पश्यन्ति सूरय' इत्युक्तेः। आखेटे मृगयायां उत्कं उत्सुकम्। 'आखेटो मृगया स्त्रिया' मिति निघण्टुः। श्रीशं वेङ्कटेशं आनीय आनाय्य मे मम पुरः अग्रे चारंचारं चरित्वा चरित्वा, विक्रयार्हो यो दासस्तस्य भावस्तत्त्वं प्राप्तम्। त्वत्पादे तव पादपद्मे विनतं मां आनन्दयित्वा सन्तोषयित्वा(?) शुभः रमणीयः अर्थो यस्यास्तां विनतानन्दनाख्यां विनताया नन्दनः पुत्रः दाक्षायणीपुत्र इत्याख्यां भज प्राप्नुहि। तव विनतानन्दनत्वमैच्छिकं न कर्मजन्यमिति भावः। विनतान्

1. तारावलिरित्यतिशयोक्तिलभ्य एवार्थः पुनस्तत्पदपाठेन विशदीकृत इति ज्ञेयम्।

2. यद्यपि 'श्लिष आलिङ्गने' इति सूत्रेण अश्लिक्षदिति भाव्यम् तथापि 'समश्लिषज्जतु काष्ठम्' इतिवदर्थान्तरपरत्वादेवं रूपमिति ज्ञेयम्।

दासान् नन्दयतीति च[1] ॥ ११३ ॥

काश्चिद्रक्षसि मां कुतो न कमलेण्णिर्हेतुकारुण्यभाक्
सेच्छास्ते यदि मां तथा न कुरुषे कस्मान्न याद‍ृच्छिकम् ।
पुण्यं मे यदि तत्कुतो न तनुषे चित्कृत्यमेतत्तु चेत्
अन्तः किं कुरुषे ह्युदास्स इह चेच्छक्तः समो वा न किम् ॥ ११४ ॥

याद‍ृच्छिकादिसुकृतं कल्पयित्वा मां रक्षेत्याह काश्चिदिति—कमलायाः लक्ष्म्याः ईट् पतिरिति सम्बुद्धिः । 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिये' त्यमरः । निर्हेतुकारुण्यभागिति सम्बुद्धिः । सृष्टिकाल इति भावः । 'अचिदविशेषितान् प्रलयसीम्नि....करणकलेबरैः घटयितुं दयमानमना' इत्युक्तेः । कांश्चित् पुरुषान् पराङ्कुशादीन् रक्षसि । मां कुतो हेतोर्न रक्षसि न पासि । ते त्वया रक्ष्यमाणाः पुरुषाः सेच्छा मोक्षेच्छया सहिता यदि कस्माद्धेतोः तथा मां तथा सेच्छं इच्छासहितं न कुरुषे न करोषि । अतः(थ) इच्छाहेतुभूतं याद‍ृच्छिकं पुण्यं मे न यदि नास्ति यदि तत् याद‍ृच्छिकं पुण्यं कुतः कस्माद्धेतोर्न तनुषे न करोषि । एतत्तु याद‍ृच्छिकं सुकृतं तु चित्कृत्यं चेतनकृत्यं सर्वमुक्तिप्रसङ्गपरिहारार्थं सम्पाद्यमिति चे[दि]ति वदसि चेदित्यर्थः । अन्तः किं कुरुषे अन्तर्यामितया वर्तमानः याद‍ृच्छिकं सुकृतं कुतो न कारयसीत्यर्थः । इह याद‍ृच्छिकसुकृतांशे उदास्से चेदुदासीनो वर्तसे चेत् तत्साधनार्थं मम प्रेरणे शक्तो न(?) वा सर्वसमो न(?) वा किं न भवसि किम् । शक्त एव । [सम एव च] । अतः मां रक्षेत्यर्थः ॥ ११४ ॥

अग्रे तेऽपि विवादतत्परममुं किं पातयस्युग्ररुट्
दुःखे त्वत्पुर आ(कुत्र पुरा)स्थितोऽस्मि सहजं भूयोऽस्तु का मे क्षतिः ।

1. "विनताया नन्दनः पुत्रः विनतानन्दन इत्याख्या तव समीचीनार्थिका न भवति । कर्मजन्ये प्रसिद्धामुत्पत्तिं बाधितार्थकतया निराकृत्य इच्छाजन्याविर्भावं त्वय्युपपाद्य विनतानन्दन इति शब्दस्त्वयि निर्वाह्यः । अतः श्रीशमानीय मे दर्शयित्वा त्वत्पादे विनतं मामानन्दयसि चेत् विनतानानन्दयतीति विनतानन्दन इति रमणीयार्थिका विनतानन्दनाख्या भवतीत्यर्थः ।"

कुर्वे साधु विवादमेव यदि वा नित्ये पदे चैद्यवत्
घण्टाकर्णवदप्यये क्षिपसि चेत्स्याः सार्थकोपस्तदा ॥ ११५ ॥

चैद्यघण्टाकर्णाविव मामपि वैकुण्ठे क्षिपसि चेत्तदैवावयोः सौख्यमित्याह अग्र इति—ते भवतः अग्रे पुरतोऽपि विवादे विविधो वादो विवादः नानाविधकुयुक्तिघटितप्रश्नः तस्मिंस्तत्परमासक्तमित्यर्थः। अमुं मां विवादपरमित्यर्थः। उग्रा भयङ्करी रुट् कोपो यस्य सः सन् पातयसि किम्। दुःखपरिपातनं करोषि किम्। पुरा एतादृशविवादात् पूर्वं स्थितोऽस्मि(?) कुत्र स्थितोऽस्मि? दुःख एव निमग्नः स्थितोऽस्मीत्यर्थः। 'स्वभावो दुरतिक्रम' इति न्यायात् सहजं यावदात्मभावि दुःखं भूयः पुनरपि अस्तु भवतु। मे मम का क्षतिः को नाशः। दुःखस्यासहजत्वे अनिष्टत्वं स्यात्। सहोत्पन्नत्वान्नानिष्टत्वमित्यर्थः। साधु सम्यक् विवादमेव कुर्वे करिष्ये। यदि वा अथवा नित्ये पदे। त्रैकालिकाबाध्यत्वं नित्यत्वम्। तादृशे वैकुण्ठे अये वेङ्कटेश चैद्येन शिशुपालेन तुल्यं चैद्यवत्। घण्टाकर्णेन तुल्यं घण्टाकर्णवत् क्षिपसि चेत् मां, क्षेपणं करोषि चेत् तदा क्षेपणसमये सार्थकोपः सप्रयोजनकोपः स्या भविष्यसीत्यर्थः। 'अये रामस्वामिन् जनकतनयावल्लभ' इतिवदत्रापि अये इति पदप्रयोगः। तव विवादकारी नास्ति मम दुःखनिवृत्तिश्च भवतीति भावः॥ ११५ ॥

आरान्मङ्गलतुङ्गशृङ्गशशभृद्ग्रावस्रवद्वार्निशा-
सिद्धासेकमहालवालतरुजैर्नानास्फुरत्सौरभैः।
विभ्राजन्मकरन्दकैः सुमरुता विक्षिप्यमाणैः सुमैः
आक्रान्तालयमिन्दिरासहचरं वन्दे महानन्ददम्॥ ११६ ॥

मोक्षदं देवं वन्द इत्याह—आरादिति॥ आरात् समीपे स्थितेषु मङ्गलानि भद्राणि तुङ्गानि उन्नतानि यानि शृङ्गाणि शिखराणि तेषु। 'कूटोऽस्त्री शिखरं शृङ्ग'मित्यमरः। स्थितेभ्यः शशं बिभर्तीति शशभृत् [चन्द्रः तस्य] ग्रावभ्यः चन्द्रकान्तनामकशिलातलेभ्यः स्रवद्भिः स्रवमाणैः वार्भिरुदकैः निशासु रात्रिषु सिद्ध

आसेकः सेचनं येषां तानि तादृशानि महाल्वालानि येषां तेभ्यः तरुभ्यो जायन्त इति तथोक्तैः। नानाविधानि स्फुरन्ति प्रकाशमानानि सौरभानि येषां तैः। विभ्राजन् प्रकाशमानो मकरन्दो मधु येषां तैः। स्वार्थे कः। सुमरुता योग्यवायुना। सुपदेन वात्याव्यावृत्तिः। विक्षिप्यमाणैः इतस्ततः क्षेपणं विक्षेपणं तादृशैः सुमैः पुष्पैः आक्रान्तः आवृतः आलयो विमानं यस्य तम्। महानन्दं मोक्षं ददातीति महानन्ददम्। इन्दिरया लक्ष्म्या सह चरतीति इन्दिरासहचरं वेङ्कटेशं वन्दे सेवे॥ ११६॥

**तिष्ठन् वेङ्कटशैलमूर्ध्नि पुरतः कृत्वा पतङ्गं शुचि-**
**स्तोमेन स्फुरताऽऽवृतो ननु धरन् सव्ये पवित्रं करे।**
**वारस्त्रीजननृत्तवीक्षणमपि त्यक्त्वाऽद्वितीयो हरे**
**गोपीजारतया समागतमघं मार्ष्टुं तपस्तप्यसे॥ ११७॥**

गोपीजारतया प्राप्तमघं मार्ष्टुं तपस्यसे नन्वित्याह तिष्ठन्निति—हे हरे वें पापानि कटतीति वेङ्कटः स चासौ शैलश्च वेङ्कटशैलः। 'वेङ्कारः पापवाची स्यात्कटस्तद्दाह उच्यत' इति स्मरणात् स्थलप्राबल्यमुक्तम्। तस्य मूर्ध्नि शिरसि तिष्ठन्नुपविशन्नित्यर्थः। पुरतः अग्रे पतङ्गं गरुडं सूर्यं च स्फुरता प्रकाशमानेन ज्वलता च शुचीनां परिशुद्धानां भक्तानां अग्नीनां च स्तोमेन समूहेन आवृत आक्रान्तः सव्ये दक्षिणे करे हस्ते पवित्रं चक्रं दर्भपवित्रं च धरन् धरमाणः वारस्त्री-जनानां वेश्यास्त्रीणां नृत्तस्य नाट्यस्य वीक्षामपि दर्शनमपि त्यक्त्वा हित्वा। संलापादिकं दूरतो निरस्तमिति भावः। श्रीवेङ्कटेशसान्निध्ये वेश्या न नृत्यन्तीति प्रथा। अपगतः द्वितीयो यस्य सः समानद्वितीयरहितः। एकाकी च। 'एकस्तपो द्विरध्यायी' [इति] प्रयोगात्। गोपीनां जारः पातिव्रत्यभञ्जकः तस्य भावस्तत्ता। तया समागतं सम्यक् प्राप्तं अघं पापं मार्ष्टुं शुद्धिं कर्तुम्। मृजू शुद्धौ'। तपस्तप्यसे ननु तपः करोषि किम्? नन्विति प्रश्ने॥ ११७॥

**शब्दादिप्रवणांस्त्वदङ्घ्रिजलजात(?) द्वन्द्वं तृणीकुर्वतः**
**पश्यन्तो मनुजान् विसृष्टविषयाःसन्तोऽपि लक्ष्मीपते।**

**प्राप्यप्रापकशोधकाः परिहृतौ भक्तेरपि प्रोत्सुकाः**

**तत्त्वत्पद्युगसद्मनं तृणमिव प्रेक्षन्त इत्यद्भुतम् ॥ ११८ ॥**

तृणं यथा प्राप्यं प्रापकञ्च भवति तथा भगवत्पदद्वयमर्पात्याह शब्दादीति ॥ हे लक्ष्मीपते शब्दादिविषयेषु प्रवणान् आसक्तान् मनुजान्मनुष्यान् तव अङ्घ्रिजल-जात् त्वत्पादपद्मात् द्वन्द्वं सुखदुःखद्वयं तृणीकुर्वतः[1] अलक्ष्यतया तिरस्कुर्वत इत्यर्थः । [पश्यन्तः] विसृष्टस्त्यक्तो विषयो यैस्ते विसृष्टविषयाः सन्तः सत्पुरुषाः विषयानासक्ता इत्यर्थः । प्राप्यप्रापकयोः उपायोपेययोः शोधकाः परिशोधकाः भक्तेरपि भक्तिशास्त्रस्य परिहृतौ परिहारे आसक्ताः । भक्त्यपेक्षया उत्कृष्टोपायला-भादिति भावः । [सन्तोऽपि] [तत् तादृशं] तव पद्युगमेव सद्मनं शरणागतिं तृणमिव तृणवदुपेक्षन्त इति विरोधः । गोः तृणं प्रदर्श्य यथा गां स्वाधीनां कुर्वन्ति तथा शरणागतिं प्रदर्श्य चरणं दासानामनुभावयतीति तद्वत् स्वाधीनं करोतीत्यर्थः । प्रेक्षन्त इत्यद्भुतं आश्चर्यम् ॥ ११८ ॥

**शेषाद्रीश्वर मामकं दृढपदं बह्वर्थसन्धायकं**

**गोजालं व्रजवासिनामिव भवद्गीतामृतासारतः ।**

**व्यावर्त्यामितदुष्टसत्त्वविषयात् त्वत्सन्निधौ चारयन्**

**रक्ष क्षेमद किञ्चिदान्तरधनं गोपालक स्वीकुरु ॥ ११९ ॥**

चित्तमपि त्वदधीनं कुर्वित्याह शेषाद्रीति—हे शेषाद्रीश्वर मामकं दृढं दृढतरं पदं सुप्तिङन्तं पदं यस्य तत् । बहूनामर्थानां सन्धायकं अनेकार्थसन्धायकं अनेकशक्यं च । गवां पशूनां वाचां च बृन्दं व्रजवासिनामिव भवद्गानामृतासारतः अमिताः अपरिमिताः ये दुष्टसत्त्वाः दुष्टजन्तवः व्याघ्रादयो यस्मिन् तस्माद्विषयात् वनप्रदेशात् । 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । व्यावर्त्य व्यावर्तनं कृत्वा

1. इदमनन्वितम् । 'त्वदङ्घ्रिजलजद्वन्द्वं तृणीकुर्वतः' इति मूलं पठित्वा व्याख्येयमिति भाति ।

त्वत्सन्निधौ तव सन्निधौ चारयन्। नो चेद् व्याघ्रादि भयं स्यात्। वाक्पक्षे मनुष्यस्तुतिः स्यात्। अतस्तत्परिहृत्य त्वत्सन्निधौ चारयन् रक्ष रक्षतात्। हे क्षेमद सौख्यद गोपालक आन्तरं अन्तःस्थं किं[चित्] धनं किञ्चित् (चित्तं) दास्यामि। तव गोपालकत्वात् वेतन[दातृ]रक्षैकपरत्वाच्च दास्यामीत्यर्थः ॥ ११९ ॥

आर्यानार्याशयाम्भोभवभवनशिरश्छेदपापोग्रताप-
व्यग्रस्योग्रस्य भिक्षां प्रतिदिशमटतः पाणिलग्नं कपालम्।
भ्राजत्तेजा व्यधास्त्वं स्फुटितमज यदा पार्श्वरक्तप्रसृत्या
पारम्यं रम्य सम्यक्तव जगदवदत्त(त्स)[त्त]दैवादिदेव ॥ १२० ॥

रुद्रकपालं मोक्षितवानसीत्याह आर्येति—भ्राजत् प्रकाशमानं तेजः [यस्य स त्वं] यदा यस्मिन् काले आर्यायां पार्वत्यां अनार्यः अपूज्य आशयो यस्य तस्य पार्वत्यां मोहितस्येत्यर्थः। अम्भस उदकस्य(कात्) भव उत्पत्तिर्यस्य तत् अम्भोभवं पद्मं भवनं मन्दिरं यस्य तस्य चतुर्मुखस्य शिरसः कन्धरस्य च्छेदः तस्माद्यत् पापं तेन उग्रेण भयङ्करेण तापेन बाधया व्यग्रस्य परवशस्य प्रतिदिशं दिशिदिशीत्यव्ययम्। भिक्षामटतः जीवनाथमरटमानस्य। 'अट पट गतौ' विति धातुः। उग्रस्य रुद्रस्य। 'उग्रः कपर्दी श्रीकण्ठ' इत्यमरः। पाणौ हस्ते लग्नं सक्तं कपालं शिरःकपालं पार्श्वे पार्श्वभागे रक्तस्य प्रसृत्या प्रसरणेन स्फुटितं विशीर्णं यथा तथा व्यधाः कृतवान्। हे अज जन्मरहित विष्णो। 'अजा विष्णुविधिच्छागा' इत्यमरः। हे रम्य रमणीय हे आदिदेव तदैव कपालनाशकाल एव सत् प्रशस्तं तव पारम्यं परमत्वं कर्म जगत् कर्तृ सम्यगवदत् प्रकटीचकारेत्यर्थः। विस्तरस्तु हरिवंशे द्रष्टव्यः ॥

'यस्मादनपराधस्य शिरश्छिन्नं त्वया मम।
तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि ॥

**त्र्यक्षं रक्षकमाहवे विवशयन् रक्ष्यस्य बाणस्य च**
**त्वत्पौत्राय निजात्मजां कलयितुं द्वौ द्वौ समाश्लिष्य च ।**
**स्वेशं क्रन्दितुमात्मनोर्ननु दशां त्यक्त्वाऽवशिष्टान् भुजान्**
**छित्त्वा रक्षकतां त्वदेकनिलयां लक्ष्मीनिवासाकरोः ॥ १२१ ॥**

बाणासुरं भुजचतुष्कावधि कृतवानसीत्याह—त्र्यक्षमिति ॥ हे लक्ष्मीनिवास लक्ष्मीपते त्वत्पौत्राय तव पौत्राय अनिरुद्धाय निजात्मजां उषां कलयितुं दातुम् । कलिः कामधेनुः । रक्षितुं योग्यस्य रक्ष्यस्य बाणस्य बाणासुरस्य रक्षकं स्वामिनमित्यर्थः । त्रीण्यक्षाणीन्द्रियाणि यस्य तं त्र्यक्षं रुद्रं आहवे युद्धे विवशयन् संमोहनास्त्रेण विवशं कुर्वन् द्वौ भुजौ स्वेशं स्वस्य आत्मनः ईशं रक्षकं शिवमाश्लिष्य आलिङ्ग्य आत्मनोः शिवबाणयोर्दशां क्रन्दितुं तवेदृशीयं ममेदृशीयं दशेति आश्लिष्य क्रन्दितुं द्वौ भुजौ चेति भुजचतुष्कं हित्वा अवशिष्टान् बाणस्य भुजान् चतुष्कातिरिक्तान् सहस्रभुजान् छित्त्वा द्विधा कृत्वा । 'छिदिर् द्वैधीकरणे' । रक्षकतां रक्षकत्वं त्वदेकनिलयां त्वमेक एव निलय आश्रयो यस्यास्ताम् । 'निकाय्यनिलयालया' इत्यमरः । अकरोः कृतवान् ननु । डुकृञ् करणे ॥ १२१ ॥

**न जाने श्रीजाने हितमहितमप्याहितमहा-**
**विमोहो मोहोद्यद्विषमविषयासक्तिविवशः ।**
**निहन्ताऽहन्ताया भवति न विवेको भवति धीः**
**स्वपद्मं पद्माङ्घ्री कथमिव लभेयं समगुण[1] ॥ १२२ ॥**

त्वत्पादपद्मे केनोपायेन लप्स्यामीत्याह—न जान इति ॥ हे श्रीजाने श्रीर्लक्ष्मीर्जाया भार्या यस्य तस्य सम्बुद्धिः । 'वधूर्जाया स्नुषा भार्ये' त्यमरः । जायाशब्दस्य निङादेशः । हे समगुण सत्त्वगुणप्रधान आहितः प्राप्तः महान् विमोहो मिथ्याज्ञानं यस्य सः । 'अविवेको विमोहश्चे' ति निघण्टुः । स चा(यश्चा)सौ मोहः तेन उद्यन्ती उदयमाना विषया निम्नोन्नता विषयेषु शब्दादि-

1. 'लभेयासमगुण' इति युक्तं भवितुम् ।

विषयेषु आसक्तिः प्रेमातिशयः तया विवशः परवशः सन् हितमपि प्रियमपि अहितमपि अप्रियमपि न जाने न जानामि। अहन्तायाः अहमित्यभिमानस्य। ममताया अपीदमुपलक्षणम्। निहन्ता नाशकः विवेकः स्वपरज्ञानं न भवति नोदेति। भवति त्वद्विषये। धीर्ज्ञानम्। 'धीः प्रज्ञा शेमुषी मति' रित्यमरः। खपद्मं गगनारविन्दतुल्यम्। 'अनन्तं सुरवर्त्म ख' मित्यमरः। 'वा पुंसि पद्मं नलिनमरविन्दं महोत्पल' मिति चामरः। पद्माङ्घ्री पद्मतुल्यपादौ। 'पदङ्घ्रि-श्चरणोऽस्त्रिया'मित्यमरः। कथमिव केनोपायेन लभेयं लप्स्यामि? कथय॥ १२२॥

कदा वा शेषाद्रौ तुलितविरजस्वामिसरसी-
जले स्नातः पूतो भुवनभवन त्वद्भवनभाक्।
अये लक्ष्मीनाथासुरविमथनास्मद्धननिधे
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥ १२३॥

स्वामिपुष्करिणीतीरनिवासी सन् कदा वा दिवसान्नेष्यामीत्याह—कदावेति॥ शेषाद्रौ वेङ्कटाद्रौ भुवनं लोकः भवनं गृहाः यस्य तस्य सम्बुद्धिः। समस्तजगदा-धारेत्यर्थः। 'विष्टपं भुवनं जगत्' 'भवनागारमन्दिरं' इति चामरः। तव भवतः भवनं गृहं त्वद्भवनभाक् सन्, तुलिता समानीकृता विरजा विरजानदी यस्याः सा सा च सा स्वामिसरसी च स्वामिपुष्करिणी तस्याः जले उदके स्नातः अत एव पूतः पवित्रीकृतः अये लक्ष्मीनायक असुरान् विमथ्नाति नाशयतीति असुरविमथन अस्माकं धननिधे निधिभूत प्रसीद प्रसन्नो भवेति क्रोशन् एवं प्रकारेण क्रोशन् निमिषमिव क्षणमिव दिवसान् दिनानि कदा वा नेष्यामि नयामी-त्यन्वयः॥ १२३॥

कदा वा पङ्कच्छिज्जनयदमृतं निर्मलनख-
श्रिया पङ्कोत्पन्नं विषनिलयमब्जं हसदिह।
न ते रागं स्वीयं प्रकटयदिवालोहिततया
रमेश त्वत्पादद्वितयमज पश्येयमसकृत्॥ १२४॥

अद्वितीयं त्वां कदा पश्येयमित्याह—कदावेति ॥ पङ्कं पापं कर्दमं च छिनत्तीति पङ्कच्छित् । 'पङ्कः कर्दमपापयो' रिति निघण्टुः । जनयत् जनकं अमृतं यस्य तत्[1] गङ्गोत्पादकं मोक्षदं च निर्मलया मलरहितया नखश्रिया नखशोभया । पङ्कोत्पन्नं कर्दमोत्पन्नं पापजन्यं च । विषं जलं गरलं च निलयो यस्य तत् । 'विषं जले गरे चे'ति निघण्टुः । एतादृश अब्जं पद्मं हसमानमिव स्थितं आलोहिततया आसमन्ताद्रक्ततया नते नमस्कारं कुर्वति पुरुषे विषये स्वीयं स्वकीयं रागं अनुरागं प्रकटयदिव स्थितम् । अनुरागस्यारुण्यं कविसमयसिद्धम् । त्वत्पादद्वितयं त्वत्पादद्वन्द्वं कर्म । हे रमेश हे अज अजन्य असकृत् पुनः पुनः कदा वा पश्येयमित्यन्वयः ॥ १२४ ॥

**कदा वा दावार्चिःपरिभवभवद्वैभवभव-**
**च्छिदम्भोभृद्दम्भोल्लसनहसनप्रोज्ज्वलतनो ।**
**सुसारासाराभाशरणकरुणादृष्टिरमिता**
**प्रसन्नाऽऽसन्नार्ता मयि परिपतेद्वेङ्कटपते ॥ १२५ ॥**

तव करुणा मयि कदा पतेदित्याह—कदा वा दावेति ॥ दावार्चिषः दावानलज्वालायाः । 'दवो वनहुताशन' इत्यमरः । परिभवे तिरस्कारे भवत् समर्थं वैभवं यस्य तं भवं संसारं छिनत्तीति तथोक्ता । अम्भोभृतो मेघस्य दम्भोल्लसनस्य गर्वातिशयस्य हसने हास्ये प्रोज्ज्वला प्रकाशमाना तनुः शरीरं यस्य तस्य सम्बुद्धिः । संसारस्य दावानलादपि क्रूरत्वात् त्वत्कटाक्षनाश्यत्वात् दावनाशकमेघं त्वदीयतनुर्हसतीत्यर्थः । ते तव सुसारस्य सम्यक्सारस्य आसारस्य धारासम्पातस्य 'धारासम्पात आसार' इत्यमरः । भायाः कान्त्याः शरणं रक्षकं[2] करुणादृष्टिः करुणाकटाक्षः । आसारतुल्या दृष्टिरित्यर्थः । 'शरणं गृहरक्षित्रोः' 'करुणा त्वादया कृपा' 'दृग्दृष्टिर्नेत्रचक्षुषी' इति चामरः । अमिता इयत्तारहिता सती आसन्नानां प्रपन्नानां विषये आर्ता पीडिता सती बाधिता सती प्रसन्ना अनुग्रहवती,

---

1. "अमृतं गङ्गां मोक्षं च जनयत् उत्पादयत्" इत्येवोचितम् ।

2. 'मन्दिरभूता' इत्यन्यत्र ।

वेङ्कटं वेङ्कटाचलं पातीति वेङ्कटपतिस्तस्य सम्बुद्धिः । मयि कदा परिपतेत् कस्मिन्काले प्रसरेदित्यन्वयः ॥ १२५ ॥

**धारकपोषकभोग्यत्वत्कः परमो गुरुर्दयालुर्नः ।**
**अस्मभ्यं त्वयि रचितन्यासोऽयं तत् सुमाव सम्बन्धात् ॥ १२६ ॥**

श्रीरामनुजसम्बन्धान्मामवेत्याह—धारकेति ॥ धारयति मनुष्यानिति धारकमन्नं, पोषयति जलेन(?) मनुष्यानिति पोषकं जलं, भोग्यं भोगार्हं ताम्बूलादि । (உண்ணும் சோறும்' இத்யாதி). धारकपोषकभोग्यतानि त्वमेव यस्य सः धारकपोषकभोग्यत्वत्कः । दयालुर्दयाशीलः नः अस्माकं परमो गुरुः उत्कृष्ट आचार्यः । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरुः तिपरि दुर्भर' इत्यमरः । परमौदार्यमित्युक्तरीत्या परमाचार्यभूतः अस्मभ्यं प्रपत्तिकरणेऽप्यशक्तानामस्माकं निमित्तमेव त्वयि भवद्विषये अयं गुरुः रचितः कृतः [न्यासः] प्रपत्तिः शरणागतिर्येन सः (அகலகில்லேன்) इत्युक्तरीत्या अभूदिति शेषः । तत् तस्मात्कारणात् सु शोभमाना मा लक्ष्मीर्यस्य सः । 'इन्दिरा लोकमाता मा' इत्यमरः । सम्बन्धाद्रामानुजसम्बन्धात् मामव रक्ष । अव रक्षणगतिहिंसादिष्विति सूत्रात्(?) ॥ १२६ ॥

**अनेकैः स्वै रूपैर्धरति मम रूपाण्यनुदिनं**
**श्रमो भूयानासीदिति फणिपतेस्तानि कृपया ।**
**दधन्तीं (न्ति) श्रीभर्तर्निजपृथुकलक्ष्मीमनुपमां**
**शिरोबाहामध्ये वहसि किमु शेषत्वकुतुकी ॥ १२७ ॥**

त्वं शेषत्वकुतुकी सन् अनेकशेषरूपाणि धरसि किमित्यत्राह—अनेकैरिति ॥

हे श्रीभर्तः लक्ष्मीपते । 'भृञ् भरणे'। [1]ममेति पदं भगवत्परं मम सकल-जगदेककर्तुः रूपाणि दिव्यविग्रहादीनि निजस्य स्वस्य पृथुकाः शिशवः । 'पृथुकः शावकः शिशु' रित्यमरः । अनुपमां उपमारहितां सादृश्यरहितामित्यर्थः । पृथुकानां शिशूनां लक्ष्मीं शोभां शिरोबाहामध्ये । प्राण्यङ्गत्वादेकवद्भावः । शिरसि बाहायां चेत्यर्थः । 'भुजबाहू प्रवेष्टो दो' रित्यमरः(?) । यथा लोके अनुरागवशात् शिरोबाहुप्रभृति धारयन्ति तद्वदित्यर्थः । शेषत्वकुतुकी सन् परार्थत्वे उत्सुकः सन् वहसि किमु धरसि किमु । किम्विति प्रश्ने । शेषस्यैवानेकविग्रहत्वेनोत्प्रेक्षा । अनेकैः अपरिमितैः स्वैः स्वकीयैः रूपैः नागादिरूपैः अनुदिनं मम यानि रूपाणि नागादिरूपाणि । फणिपतिः शेषः । भूयानधिकः श्रमः स भगवत आसीदिति धराचितानि रूपाणि कृपया दयया दधन्तीं धरमाणाम् ॥ १२७ ॥

सुगन्धपरिबन्धुरं सविधसेविनां साम्यदं
लसद्विटपसद्भुजं किसलयाभदन्तच्छदम् ।
अदभ्रमलयं गिरिं श्रितममेयलक्ष्म्याश्रितं
भवन्तमभजन्त किं पटुपटीरबुध्योरगाः ॥ १२८ ॥

[उरगाः] पटीरबुध्या भवन्तमभजत(न्त) किमित्याह—सुगन्धेति ॥ सुगन्धेन शोभनगन्धेन परिबन्धुरं व्याप्तम् । चन्दनस्य गन्धप्रधानत्वात् परिबन्धुरमित्युक्तम् । सविधे समीपे सेवन्त इति सेविनः । तेषां साम्यं ददातीति साम्यदम् । भगवतः मुक्तौ साम्यदत्वं सिद्धम् । लसन्तः प्रकाशमानाश्च ते विटपाश्च शाखाः त एव सन्तः

1. अत्र सर्वमाकुलमस्फुटमनन्वितमिति व्याख्यानान्तरमिह द्रष्टव्यम् । "अनेकैरिति । [श्रीभर्तः] भृञ् भरण इति धातुः । ममेति पदं भगवत्परम् । मम रूपाणि दिव्यविग्रहान् ॥ निजपृथुकलक्ष्मीं दधन्ति । डुधाञ् धारण पोषणयोरिति धातुः । निजशब्दो भगवत्परः । पृथुकाः शिशवः । स्वपुत्रतुल्यान् इ(नी)त्यर्थः फणिपतेः तानि रूपाणि शरीराणीत्यर्थः । शिरोबाहु(हा)मध्ये [शिरश्च बाहा च मध्यं च तस्मिन्] प्राण्यङ्गत्वादेकवद्भावः । शिरसि बाहायां [मध्ये] चेत्यर्थः । भुजबाहू प्रवेष्टो दोः(?) । वहसि किमु । पृथुकान् प्रेमास्पदभूतान् शिरः-प्रभृतिषु यथा धरन्ति तथा शेषस्य रूपाणि धरसि किमित्यर्थः । भगवदाभरणभूतेषु नागेषु श्रेष्ठ-त्वस्यैव (शेषस्यैव) अनेकविग्रहत्वेनोत्प्रेक्षा ॥"

योग्याः भुजा यस्य तं, विटपवत् प्रशस्तभुजं च। किसलयैः किसालयैः। 'किसालयं किसलय' मिति द्विरूपकोशः। आभेवाभा यस्य सः आभः समानः दन्तच्छद अधरो यस्य तं, किसलया एवाभः अधरो यस्य तं च(?)। अदभ्रं अधिकं मलयं मलयाख्यं गिरिं मलयपर्वतमित्यर्थः। श्रितं आश्रितमित्यर्थः। 'अदभ्रं बहुलं बहु' इत्यमरः। हे अदभ्र सर्वोत्कृष्टेति सम्बुद्धिः। अदभ्रं अधिकं अलयं नाशरहितं गिरिं वेङ्कटाचलं श्रितं च अमेयया अपरिच्छिन्नया लक्ष्म्या शोभया देव्या च अञ्चितं पूजितम्। 'अञ्चु गतिपूजनयो' रिति धातुः। भवन्तं, पटुः समर्थश्चासौ पटीरश्चन्दनवृक्षः स इति बुध्या अभजत(न्त) किमित्यन्वयः। उरगाश्चन्दनवृक्षमाश्रयन्तीति प्रसिद्धिः। पटु यथा तथेति वा ॥ १२८ ॥

**त्वां वल्मीकगतं पुराऽतिसुरभे संवेष्टयन्तः फणि-**
**श्रेष्ठाः शीर्षभुजावलग्ननिलया गन्धैकवश्यान्तराः।**
**गोक्षीरच्युतवामलूरुकभयप्रत्यक्तवन्तः(द्रुचः) परे**
**भान्तीमे किमु वेङ्कटाचलपते श्रीवासबाह्वन्तरम्(र) ॥ १२९ ॥**

सर्पाः त्वां त्यक्त्वा न गच्छन्तीत्याह—त्वामिति॥ हे अतिसुरभे अत्यन्त-गन्धपूर्ण हे वेङ्कटाचलपते पुरा पूर्वं कदाचित् 'पुरा पुराणे निकटे प्रबन्धातीत-भाविनो' रिति(पु'इति) विश्वः। वल्मीकं वामलूरुं गतं प्राप्तं त्वां शीर्षं शिरः भुजाश्च वलग्नश्च मध्यं निलयो येषां ते। गन्धैकस्य गन्धस्यैव वश्यं स्वाधीनं अन्तरं मनो येषां ते फणिश्रेष्ठाः सर्पश्रेष्ठाः संवेष्टयन्तः संवेष्टमानाः। हे श्रीवासबाह्वन्तर श्रियो लक्ष्म्या वासः निवासभूतः बाह्वोः अन्तरं मध्यं यस्य सः। गोक्षीरेण गोपयसा च्युतः द्रवीभूतः वामलूरुर्नाकुर्येषां ते गोक्षीरच्युतवामलूरुकाः। अत एव भया-त्प्रत्यक्तवन्तः भगवद्विग्रहं त्यक्तवन्तः ['ये तेभ्यः'] परे अन्ये इमे नागाः अपलायिताः सर्पाः भान्ति किमु प्रकाशन्ते किमु। 'वामलूरुश्च नाकुश्च वल्मीकं पुंनपुंसक' मित्यमरः। केचिद्गन्धलोभादापादचूडं वेष्टिताः केचित् पलायिता भयादित्यर्थः ॥ १२९ ॥

निर्हेत्वप्रतिषेधमादृगवनं हर्याखुवैर्यर्भक-
न्यायाभ्यां न भवत्यथापि शकनाद्रुध्द्वा निषेध्द्रेऽपि मे ।
षट्पत्कीटनयेन देहि समतां कः किं स्वतन्त्रं वदेत्
मर्यादा क्वचिदुज्झिता जयतु वा नित्या विभूतिः परम् ॥ १३० ॥

मर्कटकिशोरमार्जारकिशोरन्यायाभ्यां मद्रक्षणासम्भवात् भ्रमरकीटन्यायेन मामवेत्याह—निर्हेत्विति ॥ हेतुश्च कारणं च अप्रतिषेधनं(धः) निषेधाभावः[च] निर्गते (तौ) हेत्वप्रतिषेधने(धौ) यस्मात्तथोक्तस्य मादृशः मम अवनं रक्षणम् । हरिर्मर्कटः । आखुर्मूषिकः तस्य वैरी मार्जारः । हर्याखुवैरिणोरर्भकौ तयोर्न्यायः मर्कटकिशोरन्यायः मार्जारकिशोरन्यायश्च ताभ्यां न भवति न घटते । हेत्वप्रतिषेधयोरभावादित्यर्थः । 'हरिर्मर्कटसूर्ययोः' 'उन्दुरुर्मूषिकोऽप्याखुः' 'पृषदंशक आखुभुक्' इति चामरः । अथापि हर्याखुवैर्यर्भकन्यायासम्बन्धेऽपि शकनत् तव शक्त्या रुद्ध्वा मां निरुध्य निषेध्द्रेऽपि निषेधमानाय मे मह्यं षट् पदानि यस्य सः षट्पत् स चासौ कीटश्च(?) तस्य नयेन न्यायेन भ्रमरकीटन्यायेनेत्यर्थः । समतां साम्यम् । यथा भ्रमरः कीटं रुद्ध्वा स्वसाम्यं ददाति तद्वदेव त्वमपि मम त्वत्साम्यं देहि ददस्व । तर्हि सर्वमुक्तिप्रसङ्गः स्यादित्यत आह क इति । कः स्वतन्त्रं त्वां कः कः पुरुषः किं वदेत् । स्वातन्त्र्यस्य नियोगानर्हत्वात् अन्यतन्त्रः किमिति वदेदित्यर्थः । ["ननु हेत्वप्रतिषेधान्यतरवन्तमेव रक्षामीति मर्यादा"] मया निबन्धितेत्यत्राह-मर्यादा क्वचित् दामघोषादौ उज्झिता त्यक्ता । चैद्यादेः कारणान्तरमस्तीत्याह जयत्विति । नित्या विभूतिः परमपदं परमत्यन्तं उज्झितं वा(?) सर्वोत्कर्षेण वर्ततां अतः स्वरक्षणं मतमिति भावः[1] ॥ २३० ॥

मन्निन्दास्पृहयालुतालुरिह निर्बीजं कृपालुर्मया
गुप्तं वाङ्मनसापदं म(च) मदघव्रातं स्वयं कीर्तयन् ।

1. "ननु चैद्यादेः कारणान्तरवशादेतज्जन्मनि द्वेषेऽपि पूर्वजन्मनि हेत्वादिकमस्तीत्यत्राह—जयत्विति । कारणं विना लीलाविभूतिस्थानां सर्वेषां रक्षणेन लीलाविभूतेर्नाशेऽपि एतेषां नित्यविभूतिगमनात् सा परं वर्धत एव । अतस्ते हानिर्नास्ति । सर्वे सदा सुखिताश्च भवन्ति ! अत ईदृशस्यापि मम रक्षणमुचितमेवेत्यर्थः ।"

**आदत्ते समुदग्रमुत्तव च मत्पापापनुत्तिश्रमं**
**के (किं)चित् कुञ्चयति प्रपञ्चजननोदञ्चद्विरिञ्चेडित ॥ १३१ ॥**

मत्पापं निर्बीजं कुर्विति प्रार्थयते—मन्निन्देति ॥ प्रपञ्चस्य लोकस्य जनने उत्पादने उदञ्चन् व्यग्रायमाणो यो विरिञ्चश्चतुर्मुखः । 'विरिञ्चोऽजो विरिञ्चन' इत्यमरः । तेन ईडितःस्तुतः स्तस्य सम्बुद्धिः । इह इदानीन्तनजन्मनि त्वं(?) मन्निन्दास्पृहयालुतालुः मम निन्दायां दूषणे स्पृहयालू स्पृहावन्तौ ताळू तालुप्रदेशौ यस्याः सा(?) । ळळयोरभेदात्तालुशब्दस्थाने तालुरिति प्रयोगः । अत एव कृपालुर्दयालुः । दोषादर्शित्वात् । वाङ्मनसयोः अपदं अविषयं [अ]गोचरमित्यर्थः । इयत्तारहितत्वात् । मया गुप्तं रक्षितं मदघव्रातं मम अघानां पापानां व्रातं समूहं निर्बीजं कारणरहितं यथा तथा सङ्कीर्तयन् तव भवतः समुदग्रा सम्पूर्णा च मुच्च प्रीतिः समुदग्रमुत् । 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः । मम पापानां अपनुत्तेः अपनोदात् परिहारादित्यर्थः । यः श्रम आयासः तं च स्वयं कीर्तयन् विमर्शीकुर्वन् किञ्चिदीषत् कुञ्चन्ती सङ्कुञ्चन्ती सती(?) आदत्ते स्वीकरोति । मामिति शेषः । सङ्कोचस्तु रक्ष्यरक्षकयोरसदृशफलकत्वादिति भावः[1] ॥ १३१ ॥

**रक्ता दृक् स्वगुणेन ते हृदकरोद्रक्तं श्रियः सङ्गतः**
**त्वद्दृङ्नीलतभा तु रक्तमकरोत् हृत्ते विचित्रं त्विदम् ।**
**स्वातन्त्र्यं गुणमग्रहीत्तत्र ददौ स्वं पारतन्त्र्यं च ते**
**भाग्यं मे पितरेतदत्यघयुजो माता त्वलं वत्सला ॥ १३२ ॥**

---

1. कृत्स्नमिदं व्याख्यानमाकुलम् । व्याख्यानान्तरमत्र न दृश्यते । एवं तु युक्तम् । मन्निन्दनकुतूहली अत एव निर्बीजं कारणं विना । हेतुर्ना कारणं बीजमित्यमरः । कृपालुः दयालुः । जन इति वा दुर्जन इति वा विपरीतलाक्षणिकतया सुजन इति वा शेषः । मया गुप्तं यत्नेन गूढं रक्षितमपि वाङ्मनसयोरगोचरं मत्पापराशिं स्वयं समुदग्रमुत् अभ्यधिकप्रमोदः सन् आदत्ते स्वीकरोति । किं कुर्वन् । तादृशं मदघव्रातं, कीर्तयन् । 'शप्यमानस्य यत्पापं शपन्तमधिगच्छति' 'द्विषन्तः पापकृत्याम्' इति हि प्रसिद्धम् । किञ्च तव मत्पापापनुत्तिश्रमं किञ्चित् कुञ्चयति सङ्कोचयति ह्रासयति । प्रपञ्चेत्यादिसम्बोधनं यथाव्याख्यानमेव ।

पापात्मनो मे तव पारतन्त्र्यस्वातन्त्र्ययोः विनिमयेन एतद्रक्षणमेवालमित्याह(?) —रक्तेति ॥ हे पितः हे जनक ते भवतः दृक् दृष्टिः स्वगुणेन स्वनिष्ठगुणेन रक्ता रक्तगुणविशिष्टा अनुरागविशिष्टा च। पुण्डरीकाक्षत्वात्। कप्यासमित्युक्तेः। श्रियः लक्ष्म्याः हृत् हृदयं रक्तं अनुरक्तं सङ्गतेः संसर्गवशाद् अकरोत् कृतवती। स्वसंसर्गवशादित्यर्थः। नीलतमा अत्यन्तनीला कुवलयाक्षित्वात्। तत् तस्याः लक्ष्म्याः दृक् ते तव हृत् हृदयं रक्तमनुरक्तं अकरोत रक्तत्वविशिष्टमिति विरोधः। इदन्तु रक्तत्वकरणं विचित्रम्। वत्सला वात्सल्यवती माता तु तव स्वातन्त्र्यं गुणं 'क्षिपामि'[1] 'न क्षमामी'त्युक्तं(?) गुणं अग्रहीत् गृहीतवतीत्यर्थः। स्वं स्वीयं पारतन्त्र्यं पराधीनत्वं ते ददौ दत्तवतीत्यर्थः। अत्यघयुजः अत्यन्तपापयुक्तस्य मे मम एतत् भाग्यं एतादृशसम्पत् अलं पर्याप्तम्। 'अलं पर्याप्तभूषणे' इत्यमरः॥

**रम्यस्यन्दमरन्दबिन्दुसुमनोबृन्दत्वदङ्घ्र्यम्बुज-**
**द्वन्द्वास्कन्दननन्दनीयविभवाः कुन्देन्दुमन्दस्मित।**
**वन्दारुव्रजचन्दिराननसुधानन्दाश्रुसन्दोहिनः**
**सुस्पन्दाः पवनाः त्वदद्रिपवनाद्भूपावनाः वान्त्विति॥१३३॥**

त्वदद्रिस्थितवायवः भूपावनाः सन्तो वान्त्वित्याह—रम्येति॥ कुन्दं माध्य-कुसुमं '....माध्यं कुन्दकुसुम' मित्यमरः।[2] इन्दुश्चन्द्रः ताविव मन्दं मृदु स्मितं हासो यस्य तस्य सम्बुद्धिः। कुन्देन्दुमन्दस्मित। रम्यं रमणीयं यथा तथा स्यन्दी स्रवमाणः यो मरन्दबिन्दुर्मकरन्दशीकरः येषां तानि सुमानि कुसुमानि तेषां बृन्दानि समूहाः येषां तानि त्वदङ्घ्र्यम्बुजानि त्वत्पादपद्मानि। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा' दित्युक्तेः(?)[3]। तेषां आस्कन्दनेन आक्रमणेन नन्दनीयः सन्तोष्टव्यः विभवः अतिशयो येषां ते। वन्दारुव्रजानां नमस्कुर्वज्जनानां भक्तानामिति यावत्। चन्द्रा(न्दिरा)ननस्य चन्द्रतुल्यमुखस्य सुधा सुधातुल्यानि आनन्दाश्रूणि

1. 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इति तत्र दृश्यते।
2. 'माध्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः' इति तत्र दृश्यते।
3. द्वन्द्वपदे श्रूयमाणे कथं बहुत्वमुच्यत इति चिन्त्यम्।

आनन्दबाष्पाणि तेषां सन्दोहः समूहो येषां ते । सुस्पन्दाः योग्यचलनाः न वात्यादिवदुश्चलनाः । त्वदद्रिः वेङ्कटाचलः तस्य उपवने समीपवने सञ्चरणं येषां ते त्वदद्र्युपवनाः[1] त्वदद्रौ सञ्चरमाणा इत्यर्थः । अत एव भूपावनाः भूपवित्राः पवनाः वायवः इति एवंप्रकारेण वान्तु प्रसरन्तु ॥ १३३ ॥

**जीवाः पात्राणि माया विपुलयवनिका सूत्रजालानि कर्म-**
**व्राता मायाविकारा ह्युपकरणपदं यान्ति पेट्यौ पटिष्ठे ।**
**श्रीवत्सः कौस्तुभश्चाप्रकृतिपरवशा वीक्षणोत्का नटी श्रीः**
**लीलादीन्[2] सूत्रधारः त्वमखिलभुवनं नाटकस्ते रमेश ॥ १३४ ॥**

ते जगन्नाटकत्वं....इत्याह—जीवा इति ॥ हे रमेश जीवाः प्राणिनः पात्रस्थानीयानि । माया प्रकृतिः । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर' मित्युक्तेः । विपुलयवनिका विस्तारीभूताच्छादनपटः । कर्मव्राताः कर्मसमूहाः सूत्रजालानि सूत्रसमूहाः । मायाविकारा हि प्रकृतेः विकारा महदादयः उपकरणं (णपदं) उपकरणशब्दं यान्ति प्राप्नुवन्ति । उपकरणशब्दवाच्या भवन्तीत्यर्थः । श्रीवत्सः लाञ्छनं कौस्तुभमणिश्च पटिष्ठे पटुतरे पेट्यौ पेटिकाभूते । यतः प्रलयसमये श्रीवत्से प्रकृतेः कौस्तुभे जीवानां च लयश्रवणादि(णमि)ति भावः । ईक्षणे दर्शने उत्काः काङ्क्षमाणाः प्रकृतिपरवशा न भवन्तीति अप्रकृतिपरवशाः प्रकृत्यनधीना इत्यर्थः । 'सदा पश्यन्ति सूरय' इत्युक्तेः । नित्य(त्याः)मुक्ताच(श्च) । श्रीर्लक्ष्मीः नटी नटीस्थानीया । त्वं भवान् सूत्रधारः असि अभवत्(वः) किल । अखिलभुवनं अखिललोकः ते नाटकः(?) नाटकस्थानीयः । सर्वं नाटकस्थानीयमासीदिति भावः ॥ १३४ ॥

---

1. त्वदद्र्युपवनाद् वान्त्विति मूले पञ्चम्यन्तता दृश्यमाना वरमिति भाति ।

2. अस्य पदस्य व्याख्यानं न दृश्यते । 'लीलार्थी' इति युक्तमिति भाति । 'नन्वासीः' इति वा ।

समममसममनन्तं मङ्गलं मङ्गलानाम्
अमलममलभासा भासयन्तं जगन्ति ।
हृदयहृदयमुष्णधातहृष्यन्नशुष्य-
त्कमलकमलनेत्रं स्तोत्रपात्रं करोमि ॥ १३५ ॥

अहं त(स्तो)त्रपात्रीकरोमीत्याह—सममिति ॥ मया लक्ष्म्या सह वर्तत इति समः तं असमं सदृशरहितं अनन्तं अन्तरहितं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । मङ्गलानां शुभानां मङ्गलं मङ्गलभूतं अमलया स्वच्छया भासा स्वतेजसा जगन्ति लोकान् भासयन्तं प्रकाशीकुर्वन्तम् । 'तस्य भासा सर्वमिदं विभाति' इत्युक्तेः । हृत् मनोहरः अयः शुभावहो विधिर्यस्य तं (तस्य) [हृत्] हृदयं अयः प्रायं (प्राप्यं) [स्थानं] यस्य तम् । उष्णप्रकाशेन सूर्येण हृष्यत् विकसत् नशुष्यत् नशब्देन समासः । कमलं जलं यस्य तत् । 'कमलं जलपद्मयो' रित्यमरः । तच्च तत् कमलं पद्मं तदिव नेत्रं यस्य तम् । सूर्यकिरणविकसज्जलमध्यस्थितकमलनेत्रं अं विष्णुं । 'अ इति भगवतो नारायणस्य प्रथमाभिधानं, 'अकारो विष्णुवाचक' इति श्रुतिस्मृत्योश्च । अलमत्यन्तं स्तोत्रस्य पात्रं करोमि स्तोत्रस्य विषयीकरोमीत्यर्थः ॥ १३५ ॥

प्रीतः श्रीश वपुःश्रमेण सुमदे भूरङ्गदासे धन-
च्युत्या प्रीततरः सुवर्णसुमदे तोण्डप्रभौ निर्व्यये ।
नाथ प्रीततमः कुलालजरठे मृत्सूनदे तत्सुमे
प्रीतिस्ते सुलभे ममाद्य सुलभं हृत्पद्ममङ्गीकुरु ॥ १३६ ॥

मम हृत्पद्ममङ्गीकुर्वित्याह—प्रीत इति ॥ वपुषः शरीरस्य श्रमेण आयासेन सुमदे पुष्पदायके उद्यानर्निर्माणे चे(-ने)त्यर्थः । भूरङ्गदासे भूरङ्गनामके गोपीशे गोपीनाथे [प्रीतः] । धनच्युत्या काञ्चनधनच्युत्या सुवर्णसुमदे सुवर्णपुष्पदायके तोण्डप्रभौ तोण्डमान्चक्रवर्तिनि (தொண்டமான்) प्रीततरः अत्यन्तप्रीतियुक्तः । नाथ भगवन् । निर्व्यये धनव्ययरहिते मृत्सूनदे कुलालजरठे कुलालवृद्धे तत्सुमे

तत्पुष्पे प्रीततमः प्रीतिविशिष्टः । तत्तस्मात्कारणात् सुलभे सुमे तव प्रीतिः । मम सुलभं देहायासाद्यभावात् सुखेन लभ्यं हृत्पद्मं हृदयकमलं अङ्गीकुरु गृहूणीष्वेत्यर्थः । पूर्वजन्मनि गोपीशो भूरङ्गनाथ इदानीं तोण्डप्रभुर्जातः कुलालसम्बन्धात्परमपदं जगामेत्यर्थः ॥ १३६ ॥

**नायं शीतकरो जगत्सु विहरत्त्वत्कीर्तिलक्ष्म्याः करे**
**श्वेताब्जं न च लक्ष्म बम्भरकुलं नो कौमुदी तारकाः ।**
**शीतत्विट्पटवासजातिकुसुमव्राताः सुरस्त्रीकर-**
**क्षिप्तास्तत्तनुसङ्गतास्तदनिशं ते हि भ्रमन्त्यम्बरे ॥ १३७ ॥**

कीर्तितनुसङ्गताः जातिसुमव्राताः भ्रमन्तीत्याह––नायमिति ॥ अयं दरीदृश्यमानश्चन्द्रः शीतकरो न भवति । परन्तु [जगत्सु विहरत्]त्वत्कीर्तिलक्ष्म्याः तव कीर्तिर्यश एव लक्ष्मीस्तस्याः करे हस्ते श्वेताब्जं श्वेतकमलम् । 'पद्महस्ते' ति प्रयोगात् । लक्ष्म कलङ्कं न च न भवतीत्यर्थः । परन्तु बम्भरकुलं भ्रमरकुलम् । एते कौमुदीतारकाः कौमुदीतारकाणि नो न भवन्तीत्यर्थः । परन्तु तत्तनुसङ्गताः तस्याः कीर्तिलक्ष्म्याः तनुसङ्गताः शरीरसङ्गताः सुरस्त्रीणां करैः हस्तैः क्षिप्ताः शीतत्विट् कर्पूरं कर्पूरस्य चन्द्रसंज्ञत्वात् । कर्पूरमयः पटवास इत्यर्थः । 'घनसारश्चन्द्रसंज्ञ' इत्यमरः । जातिकुसुमव्राताः । मालतीसमूहाः 'सुमना मालती जाति' रित्यमरः । तत् तस्मात्कारणात् अनिशं सर्वदा ते सुमादयः अम्बरे आकाशे भ्रमन्ति भ्रमणं कुर्वन्ति ॥ १३७ ॥

**रूपि स्वं गुणमादधाति निकटे स्वच्छेऽन्यरूपास्पदे**
**दृष्टान्तस्फटिके जपासुममिह प्राप्तं विचित्रं महत् ।**
**श्यामोऽप्यात्मगुणेन काममतनोः श्यामाः पुरा गोपिकाः**
**रक्ता नन्दतपोविपाकजनने शेषाचलाधीश्वर ॥ १३८ ॥**

त्वद्गुणेन गोपिकाः रक्ताः करोषीत्याह रूपीति––हे शेषाचलाधीश्वर रूपि

रूपविशिष्टवस्तु जपाकुसुमं जपापुष्पं निकटे समीपस्थे स्वच्छे निर्मले परिशुद्धे इत्यर्थः । दृष्ट अन्तो यस्य तस्मिन् दृष्ट[न्त]स्फटिके अन्यरूपस्य जपाकुसुमनिष्ठारुण्यस्य आस्पदे स्फटिके सान्निध्यवशादिति भावः । स्वं स्वकीयं गुणं रक्तगुणं आदधाति आसञ्जनं करोति । इह त्वयि तु महत् अधिकं विचित्रं आश्चर्यं प्राप्तं लब्धम् । तदेवाह श्यामेति । पुरा पूर्वं नन्दस्य तपसः कृच्छ्रचान्द्रायणादिकस्य विपाकजनने परिपाकजनने कृष्णावतारे त्वं नभःश्यामोऽपि नीलोऽपि आत्मगुणेन स्वकीयनीलत्वगुणेन सौन्दर्यादिना गुणेन च श्यामाः नीलाः यौवनमध्यस्थाश्च 'श्यामा यौवनमध्यस्था' इत्यमरः । गोपिकाः वल्लवाङ्गनाः काममत्यन्तं रक्ताः अरुणा इति विरोधः । अनुरक्ताश्च । अतनोः अकरोः कृतवानसीत्यर्थः ॥ १३८ ॥

**ब्रह्माण्डे सरसि स्फुटोडुकुमुदे द्युवा(द्यौवा)रि ते मेरुणा**
**क्रीडामण्डपिनीनचन्दिरमिषेणौजोयशस्सम्पदौ ।**
**पश्यन्तीष्वमरीष्वपक्ष्मचलनास्वारादिसर्पत्करे**
**सान्योन्यग्रहणस्पृहे भ्रममितः शेषाद्रिचूडामणे ॥ १३९ ॥**

तव ब्रह्माण्डपूर्णे प्रतापकीर्ती इत्याह—ब्रह्माण्ड इति ॥ हे शेषाद्रिचूडामणे स्फुटानि प्रकाशमानानि उडूनि नक्षत्राण्येव कुमुदानि उत्पलानि यस्मिंस्तस्मिन् । द्यु(द्यौ)राकाशमेव वाः वारि (उदकानीत्यर्थः) यस्मिन् तस्मिन्(?) मेरुणा मेरुपर्वतेन क्रीडार्थं विहारार्थं मण्डपोऽस्यास्तीति क्रीडामण्डपिनि । मेर्वभिन्नक्रीडामण्डपयुक्तमध्यभागे । ब्रह्माण्ड एव अण्डकटाह एव सरसि तटाके । इनः सूर्यश्चन्दिरश्चन्द्रः तयोर्मिषेण व्याजेन ते तव ओजोयशस्सम्पदौ प्रतापकीर्तिसम्पदौ अपक्ष्मचलनासु पक्ष्मचलनरहितासु जलक्रीडादर्शनार्थमित्यर्थः । अमरीषु देवतास्त्रीषु पश्यन्तीषु सतीषु । जलक्रीडायाः स्त्रीभिरेव दृश्यत्वादिति भावः । आरात् दूरं यथा तथा विसर्पन्तः व्यापनशीलाः कराः किरणा एव हस्ताः ययोस्ते । अन्योन्यग्रहणे परस्परग्रहणे स्पृहया इच्छया सह वर्तेते इति सान्योन्यग्रहणस्पृहे सत्यौ भ्रमं भ्रमणं इतः प्राप्नुतः । यथा परस्परस्पर्शो न स्यात्तथा जलक्रीडां कुरुत इत्यर्थः ॥ १३९ ॥

**नेत्रारुण्यमिषेण वेङ्कटपते युष्मत्स्वरूपादिके**
**सत्त्वासत्त्वदृशोरुपर्यनुसृ(-चलि-)तस्वोद्देश्यभेदं परम् ।**
**भूषास्त्रत्वयुतत्वदायुधसमं प्रह्लाददैत्येन्द्रयोः**
**सन्दृष्टं युगपत्प्रदर्शयसि किं सद्रागरुट्त्वं पदम् ॥ १४० ॥**

आश्रितानाश्रितेषु [रागरुषौ] भगवान् नेत्रारुण्यव्याजेन प्रकटयति किमित्यत्राह —नेत्रेति ॥ हे वेङ्कटपते हे वेङ्कटाचलपते नेत्रारुण्यमिषेण नेत्रयोर्दृशोर्यदारुण्यं अरुणत्वं तस्य मिषेण व्याजेन युष्माकं लक्ष्मीनित्यसूरिप्रभृतीनामप्युपलक्षणम् । विषये स्वरूपादिके सत्त्वासत्त्वदृशोर्ययोस्तयोः (-शौ यौ तयोः) [उपरि] अचलितः(त) सोद्वेगश्च(स्वोद्देश्य-)भेदं अचलितः अत्यक्तः स्वोद्देश्ययोः इष्टानिष्टस्वरूपस्वविषययोर्भेदो यस्य तत्तादृशं भूषास्त्रत्वयुतत्वदायुधसमं भूषात्वं भूषणत्वं अस्त्रत्वं आयुधत्वं च ताभ्यां युतैः युक्तैः त्वदायुधैस्तुल्यं समं प्रह्लादश्च दैत्येन्द्रश्च प्रह्लाददैत्येन्द्रौ प्रह्लादहिरण्यकशिपू तयोर्विषये प्रसादक्रोधत्वाश्रयतया च (सं) दृष्टं सत्प्रशस्तं रागश्च अनुरागश्च रुट् च रोषश्च रागरुषौ तयोर्भावस्तत्त्वं रागरुट्त्वं यस्य तत्तादृशं परं उत्कृष्टं पदं वस्तु युगपत् एकदैव प्रदर्शयसि किं दर्शयसि किम् । उभयोरेकदैव नृसिंहरूपवस्तु दर्शितवानित्यर्थः ॥ १४० ॥

**रमाऽरुणपयोरुहप्रतिमयत्करैर्लोहिता**
**त्वमप्यधवलोत्पलप्रभवदीक्षणप्रेक्षणैः ।**
**गतोऽस्यसिततां ध्रुवं तव तदक्षियुग्मं सदा**
**मयि प्रसरतु प्रभो वृषधराग्रधाराधर ॥ १४१ ॥**

त्वमपि लक्ष्मीवीक्षणैः नैल्यं गतोऽसीत्याह—रमेति ॥ वृषधराग्रस्य वेङ्कटाचलस्य धाराधर नीलमेघेत्यर्थः । रमाऽपि लक्ष्मीरप्यरुणं रक्तं यत् पयोरुहं पद्मं तेन प्रतिमं समानं यदक्षियुग्मं तस्य करैः किरणैः लोहिता अरुणा । त्वमपि भवानपि अधवलौ यौ नीलोत्पलौ कुमुदे ताभ्यां प्रभवयो(तो)ः उत्पन्नयोः [1]ईक्षणयोः प्रेक्षणैः ईक्षणैः

---

1. 'प्रभतदीक्षणप्रेक्षणैः' इति पाठं कृत्वा 'तस्या रमाया ईक्षणयोः' इतीवान्यत्र व्याख्यायते ।

असिततां नैल्यं गतः प्राप्तः असि अभवः । ध्रुवं निश्चयः । हे प्रभो तत् तव अक्षियुग्मं नेत्रयुग्मं सदा सर्वदा मयि दासभूत इत्यर्थः । प्रसरतु प्रसरतात् ॥ १४१ ॥

**दातृत्वोपकृतिप्रियोक्तिरहितान्नोद्यद्दयान् प्राभव-**
**स्फीतान् दर्शितदन्तपङ्क्ति धनिनः संसेव्यमानान्मया ।**
**मन्ये हृद्युपकारकान् धनलवालाभाकुलं मां यतः**
**ते श्रीवेङ्कटशैलनाथ सदयं त्वां स्मारयन्त्यञ्जसा ॥ १४२ ॥**

धनाभावस्त्वां स्मारयतीत्याह—दातृत्वेति ॥ हे वेङ्कटशैलनाथ वेङ्कटाचलपते दातृत्वमेव वदान्यत्वमेव उपकृतिरुपकारः प्रियोक्तिः प्रियवचनं ताभ्यां च रहितान् विहीनान् । यद्वा दातृत्वं वदान्यत्वं उपकृतिः धनिकस्थले वाक्सहकारेण प्रदापयितृत्वं प्रियोक्तिरादरवचनं तैः रहितान् । नोद्यन्ती(?) अनुदयमाना दया येषां तान् । सुप्सुपेति समासः । प्राभवेन प्रभुत्वगर्वेण स्फीतान् विस्तृतान् अतिगर्विष्ठानित्यर्थः । दर्शिता दन्तपङ्क्तिर्दन्तसमूहो यस्मिन् कर्मणि तद्यथा भवति तथा । मया संसेव्यमानान् सम्यक् सेव्यमानान् अनुस्रियमाणानित्यर्थः । धनिनः धनिकान् हृदि हृदये उपकारकान् उपकारशीलान् मन्ये । यतः यस्मात्कारणात् ते धनिकाः धनलवस्य द्रव्यलेशस्यालाभे अप्राप्तौ आकुलं व्याकुलं मां सदयं दयायुक्तं त्वां भवन्तं अञ्जसा शीघ्रं स्मारयन्ति स्मरणयुक्तं कुर्वन्ति । धनिकानादरः मम उपकारकोऽभूदिति भावः ॥ १४२ ॥

**उष्णानुष्णसहिष्णुरेव विचरन्नुष्णांशुतेजश्चयं**
**भूष्णुं जिष्णुमजं च विष्णुमसुखं मुष्णन्तमर्थिस्थितम् ।**
**रैतृष्णामृगतृष्णया परवशो दुष्टाध्वनिष्णातधीः**
**श्रीशं कृष्णरुचिं विहाय नरमाः स्तौम्येष पुष्णात्विति ॥ १४३ ॥**

कञ्चन मनुष्यं इन्द्रादिष्वन्यतमत्वेन कथं स्तौमीत्याह—उष्णेति ॥ उष्णं च आतपं अनुष्णं हिमं ते सहत इति उष्णानुष्णसहिष्णुः । इदं वर्षस्याप्युपलक्षणम् ।

रैतृष्णया धनाशयैव मृगतृष्णया मरीचिकया । 'मृगतृष्णा मरीचिके' त्यमरः । परवशः पराधीनः । दुष्टाध्वनि दुष्टमार्गे निष्णाता निष्ठिता धीर्बुद्धिर्यस्य सः । एष नरः मां पुष्णातु पोषयत्विति बुध्या कृष्णा नीला रुचिः कान्तिर्यस्य तं नीलमेघश्यामित्यर्थः । श्रीशं लक्ष्मीपतिं विहाय त्यक्त्वा नरं मनुष्यं उष्णाः तीक्ष्णाः अंशवः किरणाः यस्य सः सूर्यः । तस्येव तेजश्चयः तेजस्समूहः यस्य तम् । भूष्णुम् वर्धिष्णुम् 'भूष्णुर्भविष्णुर्भविते' त्यमरः । जिष्णुम् जयशीलं इन्द्रं अजं जन्मरहितं चतुर्मुखं विष्णुम् श्रियः पतिं असुखं दुःखं मुष्णन्तं हरन्तं अर्थिस्थितं[1] याचककष्टनिवर्तकत्वेन कथं स्तौमि केन प्रकारेण स्तोत्रं करोमि । आ इति खेदे ॥ १४३ ॥

**वृत्तिर्मे न सतीति चेत्तव कुतः सर्वान्नभुक् सा सती**
**भिल्लीशेषफलाद जारनृपते दस्योऽङ्गनाध्वंसक ।**
**सूते पापमसौ ममैव यदि तत्किं निग्रहस्ते यदि**
**त्वद्वद्वीक्ष्य तदुज्झितः शिशुमिमं श्रीशाव मां तावकम् ॥ १४४ ॥**

भिल्ल्याद्युच्छिष्टभुक् त्वं मामवेत्याह वृत्तिरिति—हे ईश नाथ मे मम वृत्तिर्व्यापारः न सतीति चेत् योग्या न चेत्तव भवतः सा वृत्तिः कुतः सती योग्या कुतः । तदेवाह—सर्वान्नं सर्वनिवेदितान्नं भुङ्क्त इति सर्वान्नभुक् तस्य सम्बुद्धिः । वर्णाश्रमविभागमन्तरेण सर्वभक्षकेत्यर्थः । भिल्ल्याः शबर्याः शेषफलं भक्षितोज्झितशेषफलम् अत्तीति भिल्लीशेषफलादेति सम्बुद्धिः । जारनृपते जाराग्रेसर । हे दस्यो नवनीतचोर । हे अङ्गनाध्वंसक पूतनाताटकादिध्वंसक । ममैव असौ दुर्वृत्तिः दुर्व्यापारः पापं सूते यदि अघं जनयति यदि तत्कि पापं नाम किमित्यर्थः । तव भवतः निग्रह एव शिक्षैव पापं यदि पापं स्यात [चेत्] हे श्रीश मामपि त्वद्वत् त्वया तुल्यं वीक्ष्य तदुज्झितः निग्रहोज्झितस्सन् शिशुमज्ञं तावकं त्वत्सम्बन्धिनं इमं मामव रक्ष। आत्मवत्सर्वभूतानीति न्यायादिति भावः ॥ १४४ ॥

---

1. अर्थिषु स्थितम् । कथं स्थित इत्यत्राह याचकेति । तत्कष्टनिवारकत्वेन तेषु स्थितमिति भावः । 'अर्थिषु स्थितमसुखं मुष्णन्तम्' इति वा ।

**स्वातन्त्र्यप्रबलाघवीक्षणभिया त्वज्जीवयो(?)र्वत्सला**
**श्रीरास्ते रुचिरोरसि प्रतिकलं स्वातन्त्र्यभङ्गात्ततः ।**
**वात्सल्यादिगुणा जयन्ति शरणं त्वं भीर्न न क्लिष्टता**
**सौख्यं तूत्कटमित्थमप्यरुचयो न त्वां भजन्ते जडाः ॥ १४५ ॥**

जडास्त्वाम् न भजन्त इत्याह—स्वातन्त्र्येति ॥ वत्सला वात्सल्यवती रुचिरा सुन्दरा श्रीः लक्ष्मीः त्वं च जीवश्च त्वज्जीवौ तयोः, तव जीवस्य चेत्यर्थः । स्वातन्त्र्यं स्वतन्त्रत्वं प्रबलाघं प्रबलपापं तयोर्यद्वीक्षणं तस्माज्जन्यया भिया भयेन प्रतिकलम् प्रतिक्षणम् उरसि वक्षःस्थले आस्ते निवसति । तव स्वातन्त्र्यस्य भङ्गात् श्रीसन्निधानादिति भावः । वात्सल्यादिगुणाः सर्वोत्कर्षेण वर्तन्ते । त्वं शरणं मोक्षोपायभूतः । अतः भीर्भयं न भवतीत्यर्थः । क्लिष्टता च नास्ति क्लेशोऽपि नास्तीत्यर्थः । भक्त्यादिवत् इति भावः । सौख्यं तु उत्कटं सर्वोत्कृष्टं आनन्दरूपत्वादिति भावः । इत्थमपि पुरुषकारबलायातफलसत्त्वेऽपि जडाः पापिष्ठाः अरुचयः रुचिरहिताः सन्तः त्वां भवन्तम् न भजन्ते न सेवन्ते ॥ १४५ ॥

**चोरः कोऽपि वृषाचले बत महामायो जरीजृम्भते (?)**
**आराध्यप्रजवप्रसारितगुणाकृष्टाः प्रमोदाश्रिताः ।**
**तत्सात्कृत्य समग्रवश्चितधियः स्वं सर्वमन्यानपि**
**स्वं सर्वं तदधीनमेव कुरुतेत्येवं भणत्यन्वहम् ॥ १४६ ॥**

चोरादिकं (-धीनं) कुरुतेति वदन्तीत्याह—चोर इति ॥ महती अधिका माया प्रकृतिर्ज्ञानं वा । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' 'माया तु वयुनं ज्ञान' मिति गीतानिघण्टोश्च(?) । आश्चर्यशक्तिरित्यर्थः । कोऽपि अनिर्वाच्यः चोरः कृष्णः वृषाचले वेङ्कटाचले जरीजृम्भते प्रकाशते । आराधयितुम् योग्य आराध्यः । तेन चोरेण प्रजवं प्रकर्षेण वेगं यथा भवति तथा प्रसारितैः व्याप्तीकृतैः अन्यत्र दीर्घीकृतैः रज्जुभिः कल्याणगुणैश्च आकृष्टाः आकर्षिताः अत

एव प्रमोदेन सन्तोषेण अञ्चिता युक्ताः सन्तः । सत्पुरुषा इति शेषः । स्वं स्वस्वरूपं सर्वं समस्तं स्वं स्वकीयं तत्सात्कृत्य तस्य चोरस्य सात्कृत्य आत्मात्मीये [तद्-]अधीनं कृत्वेत्यर्थः । अन्यानपि स्वेतरानपि समग्रं सम्पूर्णं यथा तथा वञ्चितधियः वञ्चिता बुद्धिर्येषान्ते । स्वं स्वकीयं तदधीनमेव चोराधीनमेव कुरुत कुरुध्वमिति एवं वदन्ति । बतेत्याश्चर्ये । स्वानुष्ठानमितरेषामप्युपदिशन्तीयि भावः ॥ १४६ ॥

मच्चक्षुःपरिपेयकौस्तुभमणे नावेक्ष्य मत्पातकं
रक्षायै हृदये निवेशितममुं मां शोभमानाञ्जलिम् ।
मह्यं दर्शयसे भयं मम परं हर्तुं कृपाम्भोनिधे
श्रीशेषक्षितिभृन्निवास कमलाशुद्धान्तवक्षःस्थल ॥ १४७ ॥

भगवानपि मां मह्यं दर्शयतीत्यनुसन्धत्ते—यदिति ॥ मम चक्षुर्भ्यां परिपातुं योग्यः परिपेयः कौस्तुभमणिः कौस्तुभमाणिक्यं यस्य तस्य सम्बुद्धिः मम । पातकं मत्पापं नावेक्ष्य अदृष्ट्वा रक्षायै रक्षणाय शोभमानः प्रकाशमानः अञ्जलिर्यस्य तम् । हृदये निवेशितं निक्षिप्तं अमुं मां मम द(प)रं भयं हर्तुं मह्यं दर्शयसे । हे कृपाम्भोनिधे दयाम्भोनिधे । हे शेषक्षितिभृन्निवास शेषाचलनिवास । कमलाशुद्धान्त-वक्षःस्थल लक्ष्म्या अन्तःपुरभूतवक्षस्थलेति सम्बुद्धित्रयं आदौ पठनीयम् ॥ १४७ ॥

स्वप्राणोच्चण्डपत्रोद्दलितनिजपदोद्यद्रजोवैभवेन
स्वाक्ष्यास्यभ्राट् स्वनाभिं श्रवणमपि निजं स्वं च कं छादयाद्भिः ।
भ्राजत्सत्त्वैस्तमोभाविवरणपटुभिर्जन्यसक्तैः स्वकृत्तैः
भिन्नाक्षो नस्वगीःस्थैः स्वहृदयशरणं चास्तुमां(र्माः) पुनातु ॥ १४८ ॥

भक्तरक्षकः मां पुनात्वित्याह—स्वप्राण इति ॥ स्वस्य भगवतः प्राणः वायुः तद्वत् उच्चण्डाः अनीकाः (उच्चण्डानि) पत्राणि वाहनानि तैः उद्दलितात् अत्यन्तं भग्नात् निजपदात् स्वकीयपदात् पृथिव्या उद्यतां उद्गच्छतां रजसां परागाणां वैभवेन प्रभावेण स्वस्य नाभिं आकाशं निजं स्वकीयं श्रवणमपि श्रवणस्थानीयं

दिशं दिशश्चेत्यर्थः। स्वस्य अक्षिणी नेत्रस्थानीयौ सूर्यचन्द्रौ आस्यं स्वमुखं अग्निः मुखस्थानीय इत्यर्थः। तैः भ्राट् प्रकाशमानं स्वं स्वकीयं कं शिरः अन्तरिक्षं च छादयद्भिः रजोभिः छादयद्भिः अत एव तमसः अन्धकारस्य भासः भायाः कान्त्या इत्यर्थः। विवरणे विपुलीकरणे पटुभिः समर्थैः भ्राजत् प्रकाशमानं सत्त्व शरीरबलं येषां तैः जन्ये युद्धे सक्तैः आसक्तैः स्वेन भगवता कृत्तैः खण्डितैः स्वस्य भगवता गिरि वाचि तिष्ठन्तीति स्वगीःस्थाः ते न भवन्तीति नस्वगीःस्थाः। नशब्देन समासः। भगवदाज्ञोल्लङ्घिभिः असुरैः भिन्नाक्षः भिन्ननेत्रः भिन्न-सूर्यमण्डल इत्यर्थः। तथापि चारुः सुन्दरः गु(गौ)र्नेत्रं यस्य सः। सहृदयानां भक्तानां शरणं रक्षकः अः विष्णुः मा मां पुनातु पवित्रीकरोतु। 'अकारो ब्रह्मविष्णवीशकमलेष्वङ्गणे गण' इति निघण्टुः। अत्र स्वपदानि भगवद्वाच-कानि ॥ १४८ ॥

**श्रीभृन्मामव चक्षुषोश्च हृदये विन्यस्य मे सर्वदा**
**त्वां वर्ते विशयोऽस्ति ते यदि परित्यक्तेतरप्रत्ययः।**
**त्वत्कारुण्यदृगापतत्तरलसद्धारैकपात्रं तु मां**
**कृत्वा तत्र विलोकयोज्ज्वलमते मा मय्यवाच्यादरः ॥ १४९ ॥**

मच्चक्षुषि हृदये च त्वां विन्यस्य वर्ते इत्याह—श्रीभृदिति ॥ हे श्रीभृत् लक्ष्मीभृत् सर्वदा सर्वकाले मे मम चक्षुषोर्नेत्रयोः हृदये स्वान्ते च 'स्वान्तं हृन्मानसं मन' इत्यमरः। त्वां भवन्तं विन्यस्य [अव]स्थाप्य वर्ते स्थितोऽस्मि। अतः मां दासमित्यर्थः। अव रक्ष। उक्तार्थे विशयः संशयः अस्ति यदि तिष्ठति यदि परित्यक्तः विसृष्टः इतरेषु त्वदन्येषु प्रत्ययो विश्वासो यस्य सः सन्। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इति निघण्टुः। मां तव भवतः कारुण्यदृग्भ्यां दयाधीनदृग्भ्याम्। 'अधीनो निघ्न आयत्त' इत्यमरः। आपतत्तरायाः अतिशयेनापतन्त्याः आगच्छन्त्याः लसन्त्याः प्रकाशमानायाः धारायाः दृष्टिधारायाः एकपात्रं मुख्यविषयं कृत्वा हृदयस्यातिसूक्ष्मत्वात् सम्यग्दर्शनीयमित्यर्थः। हे उज्ज्वलमते प्रकाशमानबुद्धे

तव हारे विलोकय दर्शय । भगवतः प्रतिबिम्बात्स्थित इति दृश्यत इति तात्पर्यम् । तर्हि मत्प्रतिबिम्बं वर्तते नाहमित्याह मेति । मध्वस्य आनन्दतीर्थस्य वाचि वाक्ये आदरः विश्वासः मा मास्तु । तन्मते बिम्बप्रतिबिम्बयोर्भेदाङ्गीकारात् तद्वाक्यं न विश्वसनीयमिति भावः । विस्तरस्तु सिद्धाञ्जने द्रष्टव्यः ॥ १४९ ॥

**एह्यत्र मन्येऽद्य हरिष्यसे हृद्वृषाद्रिनाथेन हृतं तदासीत् ।**
**शब्दादिमेवं विषयं हसद्भिर्नतिर्गृहीता मम सद्भिरस्तु ॥ १५० ॥**

सद्भिर्नतिर्धृतास्त्विति प्रार्थयते—एहीति ॥ अत्र अस्मिन् लोके अद्य इदानीं हृत् हृदयं हरिष्यस इति मन्ये मन्यध्व इत्यर्थः । एहि आगच्छ । वृषाद्रिनाथेन वेङ्कटेशेन तत् हृदयं हृतं अपहृतं आसीदिति । शब्दादिं विषयं एवं एतादृश-प्रकारेण हसद्भिः परिहसद्भिः सद्भिः सत्पुरुषैर्नतिर्नमस्कारः गृहीता अङ्गीकृता अस्तु भवत्वित्यर्थः ॥ १५० ॥

**हृद्वो हरिष्यध्व इतीव मन्ये वृषाद्रिभर्त्रैव हृतं पुरा तत् ।**
**इति प्रकृष्टान् विषयान् हसद्भिर्नतिर्गृहीता मम सद्भिरस्तु ॥ १५१ ॥**

इममेवार्थं पुनर्विशदयति—हृद्व इति ॥ इह अस्मिन् लोके वः युष्माकं हृत् हृदयं कर्म हरिष्यध्वे हरिष्यामहे इति मन्ये मन्यध्व इत्यर्थः । तर्हि पुरा पूर्वं वृषाद्रिभर्त्रैव वेङ्कटेश्वरेणैव तत् हृदयं हृतं अपहृतं इति प्रकृष्टान् प्रबलान् विषयान् शब्दादिविषयान् प्रति वदद्भिः हसद्भिरिति वा पाठः । सद्भिः सत्पुरुषैः गुरुभिरित्यर्थः । मम मे नतिर्नमस्कारः गृहीता अङ्गीकृता अस्तु भवतु । हरिष्यध्व इत्यत्र 'प्रहास' इति सूत्रात् हरिष्यध्व इति मध्यमपुरुषः । मन्य इत्युत्तमपुरुषैकवचनम् ॥ १५१ ॥

**श्रुत्याद्यवगत्याहतवृत्त्या जडमत्या**
**ऽधृत्याऽधृतिमत्या परवत्या जनतत्या ।**

**सत्या चिदुपेत्या क्षितिभृत्यापरवत्या (-ततनित्या)**
**श्रीत्या भगवत्याविरभूत्त्याज्यकुगत्या ॥ १५२ ॥**

आदरयुक्तसकलमनुजसेवार्थं ब्रह्म वेङ्कटाचले आविरभूदित्याह—श्रुतीति ॥ श्रुत्यादीनां वेदशास्त्राणां अवगतौ परिशीलने आहता समन्तात्पराहता वृत्तिर्व्यापारो यस्यास्तया । धृतिमती धैर्यवती न भवतीत्यधृतिमती तया जडा मन्दा मतिर्बुद्धिर्यस्यास्तया । अधृत्या अधैर्ययुक्तया त्याज्या त्यागार्हा कुगतिः कुत्सितम(ग?)तिः यस्याः सा । परवत्या पराधीनया जनतत्या जनसमुदायेन उपेता(त्या) सती (उपसतु) युक्ता सती । आतता विम्वी व्याप्तेत्यर्थः । नित्या त्रैकालिकी भगवती षड्गुणसम्पन्ना सत्या सत्यशब्दवाच्या चित् संवित् । सत्यं ज्ञानमित्युक्तं परं ब्रह्मेत्यर्थः । क्षितिभृति वेङ्कटाचले प्रीत्या सन्तोषेण आविरभूत् आविर्भूतमित्यर्थः । असमर्थजनानामपि रक्षणार्थं वेङ्कटाचले प्रादुरभूदिति भावः । श्रुत्याद्यवगत्येत्यनेन वेदार्थविचारासमर्थत्वं [अ]धृतिमतीत्यनेन उपासनाद्यसमर्थत्वमित्यादिकं विवक्षितम् ॥ १५२ ॥

**श्रीभ्वीट् कुध्रभृदब्रुडुद्भवशिवेट्छक्रादिलेखेड्यप-**
**च्छार्ङ्गच्छिन्नरिपुच्छिदिद्धविशिखाच्छन्नच्छविद्विट्छिराः ।**
**कार्तार्थ्यान्वहसंस्फुरत्सदघधक्छेषक्षितिध्रक्षयो**
**दद्यात्स्वस्त्यदरी दरीलसदरी नीलस्सनीलस्स नः ॥ १५३ ॥**

हरिः स्वस्ति दद्यादित्याह—श्रीति ॥ श्रीर्लक्ष्मीर्भूर्भूमिश्च श्रीभुवौ तयोरीट् पतिरित्यर्थः । कुं भूमिं धरन्तीति कुध्राः पर्वताः । तान् बिभर्तीति कुध्रभृत् गोवर्धनमन्दरधर इत्यर्थः । अप्सु उदकेषु रोहतीति अब्रुट् पद्मं तस्मादुद्भव उत्पत्तिर्यस्य स चतुर्मुखः । शिवायाः पार्वत्याः ईट् पतिरित्यर्थः । शक्र इन्द्रः ते आदौ येषां तैः लेखैः देवैरीड्यः स्तुत्यः पत् पादो यस्य सः । रिपुच्छिदः शत्रुच्छेदकाः इद्धा दीप्ताः विशिखा बाणाः येषां ते । छन्ना न भवतीत्यच्छन्ना । जाज्वल्यमाना छविः कान्तिर्येषां ते । तादृशानां द्विषां शत्रूणां शिरांसि शीर्षाणि धनुषा छिन्नानि । शार्ङ्गविमुक्तबाणच्छिन्नानि रिपुच्छिदिद्धविशिकाच्छन्न-

च्छविद्विट्शिरांसि येन सः तथोक्तः। कृतः अर्थः प्रयोजनं यस्य तस्य भावः कार्तार्थ्यं कृतार्थत्वं अवाप्तसमस्तकामत्वं तेन अन्वहं सर्वदा संस्फुरन् सतां सत्पुरुषाणां अघं पापं दहतीति अघधक् स चासौ शेषक्षितीध्रः सः क्षयो निवासो यस्य स तथोक्तः। दरं भयं अस्यास्तीति दरी स न भवतीत्यदरी। दरः अस्यास्तीति दरी शङ्खवान्। 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः। अराण्यस्य सन्तीत्यरी(रि) चक्रं। लसत्प्रकाशमानं अरिर्य(रि य)स्य सः। नीलः श्यामलः। नील्या नीलादेव्या सह वर्तत इति सनीलः। स प्रसिद्धः हरिः नः स्वस्ति शुभं दद्यात् ददातु॥ १५३॥

तव मुखरुचिमाप्तुं सङ्घशक्त्या समाब्जो
नखमिषदशवर्ष्मा पादयोस्ते पपात।
अथ तद् सहमब्जं छादयत् तं सगन्धं
स्वयमपि बहुसंख्यं तत्फलार्थं तथाभूत्॥ १५४॥

सहस्रकमलैः चन्द्र(न्द्रेण) मुख्य(ख)रुचिमाप्तुं पूजा कृतेत्यत्राह—तवेति॥ मया लक्ष्म्या सह वर्तत इति समस्तस्य सम्बुद्धिः। अप्सु उदकेषु जायत इत्यब्जश्चन्द्रः। 'अब्जो जैवातृकः सोम' इत्यमरः। सङ्घे समूहे शक्त्या सामर्थ्येन 'सङ्घे शक्तिः कलौ युगे' इत्युक्तरीत्या सङ्घदर्शनेऽनुग्रहोदयात् तव भवतः मुखरुचिं मुखकान्तिं आप्तुं प्राप्तुं नख इति नखरा इति मिषाणि व्याजो येषां तानि दश वर्ष्माणि शरीराणि यस्य तादृशः सन् ते भवतश्चरणयोः पादयोः पपात पतितवान्। अथ पतनानन्तरं अब्जं पद्मं तस्य चन्द्रस्य असहं मुखकान्तिप्राप्त्यसहं सत् सगन्धं सगर्वं सपरिमलं च। गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोरिति विश्वः। तं चन्द्रं छादयत् आच्छादनं कुर्वत् स्वयमपि बह्वी अधिका संख्या गणना यस्य तद्बहुसंख्यम्। तत्फलार्थं तस्य मुखस्य फलार्थं रुचिरूपफलार्थं तथा पादपतितं यथा तथा अभूत् आसीत्। सहस्रपद्मैः पूजा कृतेत्यर्थः॥ १५४॥

श्रयति यस्य वधूर्हृदयं सदा स पुरुषोत्तम इत्यनिशं हरिः।
स्वपुरुषोत्तमतामिव बोधयन् हृदयवासिरमः स मुदेऽस्तु नः॥ १५५॥

स्वपुरुषोत्तम[त्व]बोधकः भगवान् नो मुदेऽस्त्वित्याह—श्रयतीति ॥ स हरिर्विष्णुः पुरुषोत्तम इति पुरुषश्रेष्ठ इति अनिशं सर्वकालेषु यस्य विष्णोः हृदयं वक्षःस्थलं सदा अविनाभावेन वधूर्लक्ष्मीः श्रयति आश्रयति ॥ 'स्त्रीप्रायमितरत्सर्वं जगत्स्थावरजङ्गमम् । देवतिर्यङ्मनुष्येषु पुंनामा भगवान् हरिः ॥ स्त्रीनाम्नी लक्ष्मीमैत्रेय नानयोर्विद्यते परम् ।' इति विष्णुपुराणात् । स पुरुषोत्तमः स्वस्य पुरुषोत्तमतां पुरुषश्रेष्ठतां बोधयन्निव हृदये वक्षःस्थले वसतीति वासिनी रमा लक्ष्मीर्यस्य स नः अस्माकं मुदे सन्तोषाय अस्तु भवतु ॥ १५५ ॥

**स्वांशं स्वामिसरस्यपारकुसुमे नृणां मुदे कार्तिके**
**द्वादश्यां सितपक्षके प्लवमुपारूढं वृषाद्रीश्वरम् ।**
**दृष्ट्वा देवमुदे वियत्सरसि सत्सूनेऽङ्कदम्भो हरिः**
**सुप्रेम्णोडुपमेत्य नीलरचितां(तं?) नीलः स सङ्क्रीडते ॥ १५६ ॥**

नौकोत्सवप्रकारमाह—स्वांशमिति ॥ अपाराणि अनन्तानि कुसुमानि पुष्पाणि यस्मिन् तस्मिन् स्वामिसरसि स्वामिपुष्करिण्यां नृणां मनुष्याणां मुदे सन्तोषाय कार्तिके कार्तिकमासि सितपक्षके शुक्लपक्षे द्वादश्यां द्वादशीतिथौ प्लवं उडुपं 'उडुपं तु प्लवः कोल' इत्यमरः । उपारूढमधिष्ठितवन्तं स्वांशं स्वांशभूतं वृषाद्रीश्वरं वेङ्कटाचलपतिं दृष्ट्वा देवमुदे देवानां सन्तोषाय सन्ति नक्षत्राण्येव सूनानि कुसुमानि यस्मिंस्तस्मिन् । 'पुष्पं प्रसूनं कुसुम' मिति निघण्टुः । वियदेव आकाश एव सरस्तस्मिन् । अङ्कः कलङ्कः दम्भो व्याजो यस्य सः । [हरि]: उडुपं प्लवं चन्द्रं च । उडुपं तु प्लवे चन्द्रे' इति निघण्टुः । नील(हीर?)रचितां(तं) 'वज्ररचितां(तं)' 'वज्रोऽस्त्री हीरमस्त्रिया' मिति निघण्टुः । [सु]प्रेम्णा सन्तोषेण एत्य प्राप्य नीलः सङ्क्रीडते । चिक्रीड नीलः स्फुटमिति पाठश्च ॥ १५६ ॥

**अघटितघटनापटुता यदि तव बहुलाघमुत्तमानन्दम् ।**
**श्रीभृत् कुरु मां नित्यं सेवे त्वां भवति हि स्वलाभस्ते ॥ १५७ ॥**

त्वं मां रक्षसि चेत् बहुलाभ इत्याह—अघटितेति ॥ हे श्रीमृत् लक्ष्मीभृत् तव भवतः अघटितघटनायाः कर्तुमकर्तुं शक्तेः पटुता पाटवं यदि अस्ति यदि बहुलानि अनन्तानि अघानि पापानि यस्य तम् । उत्तमः अतिशयितः आनन्दः सन्तोषः यस्य तं मां कुरु । त्वां सेवे । ते स्वलाभः द्रव्यलाभः भवति हि । 'आढ्यैः काकणिकेवैषे' त्यादिप्रयोगात् ॥ १५७ ॥

**त्वन्नामानि जपन्तं नित्यं रक्षसि कथं न मां श्रीश ।**
**लौकिकशब्दपरोऽहं किं तेऽखिलशब्दवाच्यता नो वा ॥ १५८ ॥**

तव सर्वशब्दवाच्यत्वात् त्वन्नामजपपरं कथं न रक्षसीत्याह—त्वदिति ॥ हे श्रीश तव नामानि नित्यं सर्वदा जपन्तं जपमानं मां कथं केन हेतुना न रक्षसि न पासि । लौकिकशब्दपरत्वादिति चेत् तर्हि सर्वशब्दवाच्यत्वं न स्यादित्याह लौकिकेति । अहं लौकिकशब्देषु घटपटादिष्वेक आसक्त इति वा । तर्हि तव अखिलशब्दवाच्यता सर्वशब्दवाच्यता नो वा नास्ति वा । तवाखिलशब्दवाच्यत्वात् मयोच्चार्यमाणाः सर्वेऽपि लौकिकशब्दाः त्वन्नामान्येवेति भावः ॥ १५८ ॥

**परं पदमयं स्व(ह्य)तोऽप्यपरमेव वा स्यान्न चेत्**
**परापरविदां वरा वृषगिरीश ते सूरयः ।**
**कुतोऽन्यतमवस्तुतामिह चराचरेष्वात्मनाम्**
**अवेक्ष्य तदुपेक्ष्य ते निकटदेहलीत्वं ययुः ॥ १५९ ॥**

अयं वेङ्कटाचलः साक्षात् परं पदमित्याह—परमिति ॥ अयं वेङ्कटाचल एव परमुत्कृष्टं पदं वैकुण्ठः स्यात् । अतः परमपदमपरमेव न्यूनमेव वा स्यात् । न्यूनमेव भवति । न चेत् वैकुण्ठपदं न्युनं न चेत् इतोऽप्युत्कृ(प्यपकृ)ष्टं न चेत् । [अस्य] उत्कृष्टत्वे हेतुमाह वृषेति । हे वृषगिरीश वेङ्कटाचलपते परापरविदां उत्कृष्टापकृष्टविदां वराः श्रेष्ठास्ते सूरयः प्रसिद्धाः सूरयः: कुलशेखरादयः दिव्यसूरयः । कुलशेखरेण प्रार्थितमितरैरपि प्रार्थितमेवेत्यभिप्रायेण बहुवचनं सूरय इति । तत् परमपदं उपेक्ष्य उपेक्षां कृत्वा इह वेङ्कटाचले आत्मनां आत्मनः स्वस्य चराचरेषु जङ्गमस्थावरेषु मध्ये

अन्यतमवस्तुतामन्यतमवस्तुत्वमवेक्ष्य दृष्ट्वा निकटे त्वन्निकटे देहलीत्वं कुतो वा हेतोः ययुः प्राप्ताः । अत एव त्वन्निकटे त्वद्देहल्यां कुलशेखरदेहलीति व्यवहारः । उदाहरणादिकं सिद्धाञ्जने द्रष्टव्यम् ॥ १५९ ॥

**वैकुण्ठाद्वृषशैल एव परमो यस्मात्ततोऽत्रागतः**
**तत्रत्यैः सह मोदसे कमलया भान्त्यत्र ते सद्गुणाः ।**
**द्योसन्मर्त्यपतत्पशुक्रिमिदृशां गम्योऽत्र पूर्णैनसः**
**दृग्योग्योऽसि ममापि हन्त विमुखाः पश्यन्ति ते स्वामिताम् ॥ १६० ॥**

वैकुण्ठाद्वृषशैल एवोत्कृष्ट इत्याह—वैकुण्ठादिति ॥ यस्माद्वैकुण्ठात् अत्र श्रीवेङ्कटाचले तत्रत्यैस्तत्र भवैः वैकुण्ठस्थैरित्यर्थः । अनन्तगरुडादिभिः सह आगतः सन् कमलया लक्ष्म्या 'मायावी' त्यादिप्रकारेण मोदसे सन्तुष्टो भवसि । ततः हेतोः वैकुण्ठात् वैकुण्ठलोकात् वृषशैल एव परम उत्कृष्टः । अत्र हेतुमाह भान्तीति । अत्र वेङ्कटाचले ते भवतः गुणाः आश्रितसौन्दर्यापादकाः कार्यापादकाश्च वात्सल्यस्वामित्वसौशील्यसौलभ्यादिकाः ज्ञानशक्तिपूर्तिप्राप्त्यादिकाः भान्ति प्रकाशन्ते । वास्तवमाह द्योसदिति । द्यवि स्वर्गे सीदन्तीति द्योसदः तेषां मर्त्यानां मनुष्याणां पततां पक्षिणां पशूनां चतुष्पदां क्रिमीणां दृशां दृष्टीनां गम्यः विषयः असि दृग्विषयोऽसीत्यर्थः । पूर्णं सम्पूर्णं एनो यस्य तस्य ममापि अपिशब्देनात्यन्तनिकृष्टत्वं द्योत्यते । दृशः दृष्टेर्योग्यः दृग्योग्यः विषयः असि अभवः । हन्तेत्याश्चर्ये । अनेन सौलभ्योक्तिः । विमुखा अपि ते भवतः स्वामितां स्वामित्वं पश्यन्ति । अतो ऽयमुत्कृष्ट इति भावः ॥ १६० ॥

**नित्ये धाम्नि नमानमक्षमपि नो साक्षी न लिङ्गं क्षमं**
**नित्या गीर्बहुभिः परैरितरथा नीता स्वयं दर्शय ।**
**तन्मे विश्वसिमि श्रुताः खलु गतायाता भवस्था न चेत्**
**तन्मे दर्शयसे न तद्वृषगिरिः श्रेष्ठः परं श्रीनिधे ॥ १६१ ॥**

वैकुण्ठं मम दर्शयसि चेत्सत्यम्। नो चेत् वृषगिरिरेव श्रेष्ठ इत्याह—नित्य इति ॥ नित्ये त्रैकल्पवर्तिनि धाम्नि स्थाने वैकुण्ठे अक्षं इन्द्रियं प्रत्यक्षमपि न मानं न प्रमाणम्। अस्मदाद्यदृश्यत्वादिति भावः। साक्ष्यपि मध्यस्थोऽपि नो नास्ति। तत्र गतानामपुनरावृत्तत्वादिति भावः। क्षमं समर्थम्। लीनमर्थं गमयतीति (लिङ्गम्)। सूचकमपि नास्तीत्यर्थः। 'वैकुण्ठभुवनं गमिष्यति' 'प्रजापतेः सभां वेश्म' इत्यादिका श्रुतिर्नित्या त्रैकाल्यवर्तिनी गीः वाक् श्रुतिः बहुभिः शङ्करभास्करयादवप्रभृतिभिः परैः मायावादिभिः इतरथा किञ्चिदिन्द्राद्यपेक्षया चिरस्थायितया नीता प्रापिता। तत् धाम मे मम स्वयं दर्शय त्वमेव दर्शयेत्यर्थः। विश्वसिमि विश्वासवान् भवामि। अथ प्राकृतानां भवादृशां अप्राकृतनयनं कथं सम्भवतीत्यत्राह श्रुता इति। भवे संसारे तिष्ठन्तीति भवस्थाः वैदिकपुत्रादिकाः। गताश्च अनन्तरमागताश्च श्रुताः खलु भागवतादिष्विति भावः। तत धाम मे दर्शय प्रेक्षय। न दर्शयसि चेत दर्शनं न कारयिष्यसि चेत् तत् धाम नास्तीत्यर्थः। अतः हे श्रीनिधे वृषगिरिः परं अत्यन्तं श्रेष्ठः। प्रत्यक्षत्वात् परमपदादपि श्रेष्ठ इत्यर्थः ॥ १६१ ॥

पूर्वं त्वं निजधामनी तुलयितुं वैकुण्ठशेषाचलौ<br>
रोदःपात्रगतौ विधाय नितरामूर्ध्वोद्गतं लाघवात्।<br>
उत्सृज्यादिममन्तिमं गुरुतयाऽधःस्थं श्रितोऽस्यादरात्<br>
एतद्ज्ञापयितुं तथैव जगतः किं तौ निधत्से सदा ॥ १६२ ॥

वैकुण्ठवेङ्कटाचलौ तुलयित्वा वेङ्कटाचलगौरवादत्रैव स्थितोऽसीत्याह—पूर्वमिति ॥ पूर्वं कृतयुगे निजस्य स्वस्य धामनी स्थानभूतौ वैकुण्ठशेषाचलौ परमपदवेङ्कटाचलौ तुलयितुं तारतम्यज्ञानार्थं तुलयितुं रोदःपात्रगतौ रोदसी एव पात्रे तस्मिन्(योः) गतौ। 'द्यावापृथिव्यौ रोदस्यौ' इति निघण्टुः। विधाय कृत्वा लाघवात् नितराभूर्ध्वगतमादिमं वैकुण्ठमुत्सृज्य त्यक्त्वा गुरुतया भारतया अधःस्थं अधःस्थितं अन्तिमं शेषाचलं आदराच्छ्रितोऽसि। एतत्तोलनादिकं जगतः

प्रपञ्चस्य ज्ञापयितुं तथैव जनानामिदानीन्तनानामपि ज्ञापयितुं तौ परमपदवेङ्कटाचलौ सदा तथैव ऊर्ध्वाधस्स्थितिप्रकारेणैव निधत्से किं न्यस्यसि किम् ॥ १६२ ॥

**लक्ष्मीलक्ष्म महः परं दधदिदं हैमं विदोषप्रभैः**
**सद्रत्नैः सहितं तमःप्रतिभटं धामाचलात्मोत्तमम् ।**
**अत्यर्कानलदीप्रमक्षरपदं विष्णोरिति स्वच्छधी-**
**योगीड्गीर्विषयं(यः?) स्वमित्यनुदिनं वक्तीव वीनां रवैः ॥ १६३ ॥**

नराणां प्राकृतानां अवज्ञानचक्षुषां सुवर्णगिरिरिव भातीत्याह लक्ष्मीति ॥ लक्ष्मीः श्रीःलक्ष्म चिह्नं यस्य तत् । परमुत्कृष्टं इदं प्रत्यक्षतया दृश्यमानं भगवदात्मकं तेजः दधत् हैमं सुवर्णविकारं (பொன்மலை மேல்) इत्युक्तेः । विगतः दोषः त्रासादिदोषः यस्याः सा विदोषा प्रभाय(ये)[षां] तानि प्राकृतदोषरहितानि च तैः । सन्ति प्रशस्तानि च तानि रत्नानि च सद्रत्नानि तैः सत्पुरुषश्रेष्ठैश्च सहितं युक्तं अत एव तमसस्तिमिरस्य प्रतिभटं तमोगुणस्य दूरं च अप्राकृतत्वादिति भावः । अचलः नाशरहितः आत्मा स्वरूपं यस्य सः । चल(?)रहितं च अत एव उत्तमं श्रेष्ठं इदं धाम दरीदृश्यमानं वेङ्कटाचलरूपं स्थानं अर्कानलावतिक्रान्तोऽत्यर्कानलः दीप्रः प्रकाशो[1] यस्य तत् अत्यर्कानलदीप्रमित्यादि । स्वच्छा परिशुद्धा धीर्बुद्धिर्येषां ते च ते योगीशाश्च योगिश्रेष्ठाः तेषां याः गिरः वाचः तासां विषयं(-यभूतं) प्रतिपाद्यं विष्णोर्नारायणस्य अक्षरं नाशरहितं तच्च तत्पदमक्षरपदं वैकुण्ठः स्वमिति अहमेवेति वीनां पक्षिणां रवैः ध्वनिभिः वक्तीव व्यनक्तीवेत्यर्थः ॥ १६३ ॥

**धाम्न्यस्मिन् बहुलक्षपापि विलसद्भूभृन्महाराजते**
**स्रग्लग्नभ्रमरालिधीदतनुभातिश्यामहाराज ते ।**
**प्राकारे स्फुरितैर्विमानमणिराड्भासामहा राजते**
**शैलैर्ध्वान्तहरैःकृतप्रियलसत्कोकीमहा राजते ॥ १६४ ॥**

1. अत्यर्कानलं यथा तथा दीप्रमिति युक्तम् ।

त्वत्सम्बन्धवशादस्मिन् सर्वं राजत इत्याह—धाम्नीति ॥ स्रजि त्वक्षु जल-(त्वदुरस्स्थल)स्थितपुष्पमालिकायां लग्ना सक्ता भ्रमराणां मधुव्रतानां पङ्क्तिः समूह इति धियं बुद्धिं ददातीति तथोक्तः, तनोः शरीरस्य भाः कान्तिस्तया अतिश्यामः अत्यन्तनीलः हारश्च(-रः) त्वदुरःस्थहारः यस्य तस्येति सम्बुद्धिः । स्रग्लग्नभमरालि-धीदतनुभातिश्यामहार अ अजेति पदविभागः । हे अज नित्य हे अ विष्णो । अकारो विष्णुवाचकः । महांश्चासौ राजा च महाराजः । राजाहःसखिभ्यष्टच् । भूभृतां पर्वतानां महाराजस्य भावः भूभृन्महाराजता । विलसन्ती प्रकाशमाना भूभृन्महाराजता यस्मिन् तस्मिन् विलसद्भूभृन्महाराजते पर्वतराजत्वाश्रये अस्मिन् ते तव धाम्नि वेङ्कटाचले बहुलक्षपा कृष्णपक्षरात्रिरपि राजते रजतविकारे प्राकारे वप्रे स्फुरितैः स्फुरद्भिः कर्तरि क्तः । ध्वान्तहरैः विमानमणिराड्भासां विमानस्थित-मणीश्रेष्ठानां कान्तीनां जालैः समूहैः अह(हः) सत्(ती) दिवारूपा सती कृतः प्रियैः भर्तृभिः लसन्तीनां मिलन्तीनां कोकीनां कोकप्रियाणां मह उत्सवः 'मह उद्धव उत्सव' इत्यमरः । यया सा कृतप्रियलसत्कोकीमहा सती राजते प्रकाशते ॥ १३४ ॥

**त्यक्त्वा स्वार्थगणं परार्थघटकः सत्पूरुषः कीर्तितः**
**वात्सल्यादिभवद्गुणातिमहसे सोढ्वापि दुःखव्रजम् ।**
**दोषानेव सदा करोमि सुखदं पुण्यं न किञ्चित्क्वचित्**
**तस्मात्सत्पुरुषं भवद्धितपरं लक्ष्मीश रक्षस्व माम् ॥ १६५ ॥**

अहं दोषानेव सदा करोमि । 'एते सत्पुरुषाः'[1] इति न्यायमाश्रित्य त्वं त्वदुपकारकं मां रक्षेत्याह—त्यक्त्वेति ॥ हे लक्ष्मीश श्रीश 'एते सत्पुरुषा' इत्यादिप्रकारेण परार्थस्य परप्रयोजनस्य घटकः घटनशीलः संश्चासौ पूरुषश्च सत्पूरुषः । योग्यस्य स्वार्थस्य स्वप्रयोजनस्य गणं समूहं त्यक्त्वा । कीर्तितः उक्तः । दुःखव्रजं दुःखसमूहं । वात्सल्यं आदिर्येषान्ते ते च ते भवद्गुणाः भवदीयकल्याणगुणाः तेषामतिमहसे अत्यन्तकीर्तये सोढ्वापि कृत्वापि(?) दोषानेव पापान्येव सदा

1. भर्तृहरित्रिशती ।

सर्वकालेऽपि करोमि । सुखदं सुखप्रदं पुण्यं क्वचित् क्वचित्कालेऽपि न किञ्चित्करोमीत्यर्थः । तस्मात् त्वत्कीर्तिवर्धकत्वात् सत्पुरुषं योग्यपुरुषं भवतः तव हितपरं हितप्रधानं मां रक्षस्व रक्षणं कुरु ॥ १६५ ॥

**कस्मैचिन्महते प्रसन्नमनसा भूपेन दत्तं वरं**
**ग्रामं तस्य सुतादयोऽप्यनधिका दासाश्च भूपाविदः ।**
**लोके भुञ्जत एव तद्वदहमप्यज्ञोऽपि तेऽज त्वया**
**पूर्वाचार्यवशीकृतं तव पदं भोक्ष्ये हि तद्दास्यतः ॥ १६६ ॥**

पूर्वाचार्यवशीकरणान्मामवेत्याह—कस्मै चिदिति ॥ महते पूज्याय कस्मैचित् पुरुषायेत्यर्थः । प्रसन्नमनसा निर्मलमनसा अनुग्रह[व]तेत्यर्थः । भूपेन भूपालकेन दत्तं समर्पितं .वरं श्रेष्ठं ग्रामं तस्य विदुषः अनधिकाः अपण्डिता इत्यर्थः । भूपं राजानं न विदन्ति न जानन्तीति भूपाविदः । सुतादयः । आदिशब्देन पुत्रिकाश्च दासाश्च सेवकाश्च लोके भुवने भुञ्जत एव अनुभवन्त्येव । तद्वत् पुत्रदासादिवत् अहमज्ञोऽपि अजानन्नपि ते त्वां अजानन्नपीत्यर्थः । द्वितीयार्थे षष्ठी । हे अज विष्णो त्वया पूर्वाचार्यैः भाष्यकारादिभिः वशीकृतं त(त्व)द्वारेत्यर्थः । तव पदं मोक्षं तेषां पूर्वाचार्याणां दास्यतः दास्यात् । तसिल् । भोक्ष्ये हि भोक्ष्यामि हि ॥ १६६ ॥

**श्रीश त्वन्निकटे पुरार्थितवते मादृक्स्वकीयावली-**
**युक्तस्वस्य शठद्विषे करुणया त्वं तत्फलं प्रादिशः ।**
**वह्वेकत्वनिरूपणोत्कवचना श्रीसूक्तिरस्यादिमा**
**सिद्धोदर्कमिवैतदीयमवदन्मां क्वास्ति चिन्ता मम ॥ १६७ ॥**

मादृशानामपि स्वेन साकं मुक्तिप्रार्थने तदीयसूक्तिं दर्शयति—श्रीशेति ॥ हे श्रीश त्वन्निकटे त्वत्समीपे पुरा पूर्वस्मिन् काले मादृशाश्च ते स्वकीयाश्च दासाः

तेषां आवल्या पङ्क्त्या युक्तस्य स्वस्य शठद्विषे वेददेवतानिन्दकद्विषे पराङ्कुशायेत्यर्थः । त्वं करुणया दयया तत्फलं संसारनिवृत्तिरूपफलं प्रादिशः । दत्तवान् किल । अस्मिन्नर्थे तदीयसूक्तिं प्रमाणत्वेन दर्शयति बह्विति । बहूनामनेकाना[1]मेकस्य एकाकिनश्च भावः बहुत्वैकत्वं तच्च तच्चेत्यर्थः । द्वन्द्वान्ते श्रूयमाणः भावशब्दः प्रत्येकमभिसम्बध्यते । तस्य बहुत्वैकत्वनिरूपणे प्रतिपादने उत्के उत्सुके वचने बहुवचनैकवचने यस्याः सा । अस्य शठारेः आदिमा प्राचीना (பொய் நின்ற) इत्यादिका[2] श्रीसूक्तिर्वाक्यं एतस्य शठारेरियं एतत्सम्बन्धिनं मां सिद्धः पक्वः उदर्कः उत्तरकालीयफलं इष्टप्राप्तिरूपं यस्य तं अवदत् उक्तवती । अतः मम चिन्ता विचारः कास्ति किमस्ति । किमपि नास्तीत्यर्थः । विस्तरस्तु व्याख्याने द्रष्टव्यः ॥ १६७ ॥

कूरेशः स्वपदाश्रिताय हि चतुर्ग्रामाय लब्धैनसे
त्वां तस्मिन् विलसत्क्रुधं समुदितक्षान्तिं विधाय स्वयम् ।
स्वस्मै दत्तमदापयत्फलमतः श्रीश त्वयार्योऽपि मे
पूर्णाघाय च दापयिष्यति फलं स्वीयं ममत्वाश्रयः ॥ १६८ ॥

कूरेशः स्वशिष्याय त्वया मोक्षफलं यथा अदापयत् ममार्योऽपि तथा मह्यं दापयिष्यतीत्याह—कूरेश इति ॥ कूरेशः श्रीवत्साङ्कमिश्रः चत्वारो ग्रामा यस्य तस्मै अत एव(?) लब्धं प्राप्तं एनः अपराधो यस्य तस्मै । स्वपदाश्रिताय स्वस्य कूरेशस्य पादपद्मयोराश्रिताय शिष्याय तस्मिन् चतुर्ग्रामाख्ये विलसन्ती प्रकाशमाना रुट् (क्रुत्) क्रोधो यस्य तं त्वां समुदिता सम्यगुत्पन्ना क्षान्तिः क्षमा यस्य तं विधाय कृत्वा स्वस्मै कूरेशाख्याय दत्तं भगवता दत्तं मोक्षरूपफलं स्वयं साक्षात् अदापयत् दापितवान् । हे श्रीश अतः आचार्यस्यैतादृशत्वात् मे मम आर्योऽपि आचार्योऽपि ममत्वं मदीयाभिमानः आश्रयो यस्य सः सन् पूर्णानि अघानि पापानि यस्य तस्मै । चोऽप्यर्थकः । मे मह्यं स्वयं स्वकीयं स्वस्मै त्वया दत्तं फलं मोक्षफलं त्वया दापयिष्यति । अत्र कूरेशीयकथा गुरुपरम्परावैभवेऽनुसन्धेया ॥ १६८ ॥

1. बहुव्रीहिरयम् ।

**का कर्मज्ञानभक्तिप्रपदनविरहात् पातकेभ्यश्च भीर्मे**
**स्वाङ्घ्रौ बद्धाञ्जलीनामभिनयति हरिर्जानुदघ्नं भवाब्धिम् ।**
**उद्दिश्यैनं कदाचित्कथमपि च सकृत्कुत्रचिन्मेऽञ्जलिः स्या-**
**दार्योक्तोऽशक्तिबुद्धेरभिमतसुखकृच्छक्तलक्ष्यं परं हि ॥ १६९ ॥**

असदाद्यशक्तविषये प्रपत्तिशास्त्रप्रवृत्तिरित्याह—का कर्मेति ॥ कर्म यज्ञादिकं ज्ञानं आत्मज्ञानं भक्तिः अष्टाङ्गयौगि(योगात्मि)का प्रपदनं शरणागतिः न्यासः पञ्चाङ्गसंयुत इत्युक्तेः । तेषां द्वन्द्वः । विरहात् अभावात् पातकेभ्यः दुरितेभ्यः मे मम का भीः किं वा भयमित्यर्थः । स्वाङ्घ्रौ स्वकीयपादे बद्धाञ्जलीनां निबद्धाञ्जलिपद्मानां हरिर्विष्णुः भवाब्धिं संसारसमुद्रं जानुदघ्नं जानुमात्र-प्रमाणं अभिनयति । दक्षिणवामहस्ताभ्यां सूचयतीत्यर्थः । मत्पादसेविनामित्यादि । एनं श्रीशमुद्दिश्य कदाचित् पूर्वकाले भविष्यत्काले वा कथमपि च यथाशास्त्रं किञ्चिन्न्यूनं वा सकृद्वा एकदावृत्तिर्वा (आवृतं वा) कुत्रचित् भगवत्सन्निधावन्यत्र वा त्वदङ्घ्रिमुद्दिश्य एकदा यामुनाचार्योक्तः अञ्जलिः स्यात् प्रयुक्तः स्यात् । न विद्येते शक्तिबुद्धी सामर्थ्यमती यस्य तस्य मे मम । अथ प्रपत्तेर्मोक्षसाधनत्वात् ना[लम]ञ्जलिमात्रेणेत्यत आह शक्तेति । परं प्रपत्त्यादिकं शक्तकृत्यं शक्तिमत्पुरुष-कार्यं हि मादृशानां अञ्जलिरेव साधनमिति भावः । परं प्रपत्त्यादिशास्त्रं शक्तो लक्ष्यं विषयो यस्य तत् ॥ १६९ ॥

**मन्दो हन्त जनोऽनवद्यसुखदे सङ्कल्पमात्राद्वधू-**
**पुत्राद्यैहिकलोकदायिनि हरेर्नत्येकलभ्ये स्थिरे ।**
**हैमे धाम्नि नधीः क्षराल्पसुखदालभ्याधिकानर्थद-**
**स्त्रीहेमायतिकांक्षयात्र बहुधा नीचत्वमापद्यते ॥ १७० ॥**

अनन्तफलदं त्वां हित्वा नीचत्वं प्राप्यत इत्याह—मन्द इति ॥ मन्दः ऐहिकः जनः अनवद्यं दोषरहितं सुखं सौख्यं ददातीति अनवद्यसुखदे, स

यदि भार्यया कामचार(?) इत्युक्तरीत्या सङ्कल्पमात्रादिच्छामात्रादित्यर्थः । वधूः भार्या पुत्रा आदिर्येषान्ते [वधू]पुत्राद्यैहिकाः ते च ते लोकाः जनाश्च तान् ददातीति दायिनि हरेर्विष्णोः नत्येकलभ्ये नमस्कारैकलभ्ये स्थिरे शाश्वते हैमे सुवर्णविकारे धाम्नि वैकुण्ठे । न विद्यते धीर्बुद्धिर्यस्य नधीः नशब्देन समासः । हन्तेति खेदे । क्षरे नाशयुक्तेऽल्पसुखदे स्वल्पसुखदायिनि अलभ्ये लब्धुमशक्ये अधिकानर्थदे विपुलदुःखदायिनि स्त्रीषु नारीषु हेमादौ सुवर्णादौ अतिकांक्षया अत्यन्तकांक्षया अत्र अस्मिंल्लोके बहुधा अनेकप्रकारेण नीचत्वं नैकृष्ट्यं आपद्यते प्राप्यते(?) ॥ १७० ॥

**उत्प्लुत्य त्वरया सुशीलकरणो वैकुण्ठतोऽमुं श्रितः**
**चिह्नं भूधरनम्र(निम्न)ता क्वनु गता सा ते त्वरा वश्यवे ।**
**दीनस्यात्यघिनोऽगतेर्मम पुरो न प्रादुरासीः कुतः**
**श्रीभृल्लोकगुणस्तवापि किमभूद्धीमान्द्यमस्यैनसा ॥ १७१ ॥**

पापात्मनो मम कुतो वा न प्रादुरासीः । लोकगुणस्तवापि अभूद्वेत्याह— उदिति ॥ सु शोभने शीलकरणे सद्वृत्तव्यापारौ यस्य सः । वैकुण्ठतः वैकुण्ठलोकात् अमुं वेङ्कटाचलं श्रितः आश्रितः । मादृशरक्षणार्थमिति भावः । त्वरया शैघ्र्येण उत्प्लुत्य आगमने चिह्नं लक्ष्णं भूधरस्य पर्वतस्य निम्नता निम्नत्वम् । क्व नु कुत्र वा गता ते तव सा त्वरा । वश्यः विर्गरुत्मान् यस्य तस्य सम्बुद्धिः । दीनस्य दैन्यविशिष्टस्य अत्यघिनः अत्यन्तपापविशिष्टस्य अगतेः गत्यन्तरशून्यस्य मम पुरः अग्रे कुतः कस्माद्वा हेतोः न प्रादुरासीः प्रादुर्भूतो न भवसि । हे श्रीभृत् लक्ष्मीभृत् लोकगुणः प्रपञ्चधर्मः धीमान्द्यं बुद्धिमान्द्यं तवापि भवतोऽपि अस्य मम एनसा पापाद्धेतोः अभूत्किम् । नोचेत्कथं न प्रादुर्भाव इति भावः ॥ १७१ ॥

**भक्त्यङ्गं किमिति(मुत) प्रपत्तिमिलितो हेत्वन्तरं वा फलं**
**हेतुर्नान्यफलस्य कृत्स्नमपि नो किञ्चित्त्वयैवाञ्जलिम् ।**
**त्वत्पादेऽरचयं कथञ्चिदव वा मा वाऽघमग्रं तु मां**
**कुर्वस्यानमतश्छिनत्सि तु करं दीनः करोमीश किम् ॥ १७२ ॥**

दीनस्य ममारक्षणे किं करोमीत्याह—भक्त्यङ्गमिति ॥ अञ्जलिः भक्तेः अङ्गं किम् । प्रपत्तिमिलितः प्रपत्त्या युक्तः किम् । हेत्वन्तरं वा प्रपत्त्यादिवद्धेत्वन्तरं वा । फलं वा त्वत्कैङ्कर्यरूपफले अन्तर्भूतो वा । अन्यफलस्य मोक्षव्यतिरिक्तफलस्य हेतुर्वा कारणं वा । कृत्स्नमपि पूर्वोक्तं भक्त्यादि समस्तमपि नो वा न युक्तं वा । किमपि तत्सर्वं न जानामि । परन्तु त्वयैव साधनेन त्वत्पादे त्वत्पादपद्मे अञ्जलिं अरचयं रचितवानस्मि । अहमिति शेषः । अञ्जलिः परमा मुद्रेत्युक्तेः । कथञ्चित् अतिप्रयासेन अघमग्नं[1] पापमग्नं मां अव वा रक्ष वा । मा वा मा रक्ष वा । हे ईश वेङ्कटाचलपते आ समन्तात् नमस्कारं कुर्वतो मम करं हस्तं छिनत्सि तु छिनत्सि चेत् तुश्चेदर्थः । अव्ययत्वात् । दीनः अहं किं करोमि । किमपि न करोमीत्यर्थः ॥ १७२ ॥

विलोक्य मम देशिकं वरभवत्पदैकाश्रयं
अकिञ्चनमसद्गतिं बहुलपापमग्नाशयम् ।
त्वदङ्घ्रिशरणागतिं कथमपीरयन्तं जडं
न वीक्ष्य मम दुष्टतां स्वकृतवित्त्वमेवाव माम् ॥ १७३ ॥

मदार्यसम्बन्धं विलोक्य त्वमेवावेत्याह—विलोक्येति ॥ वरः श्रेष्ठः स चासौ भवांश्च तस्य पदं पादपद्मं एको मुख्य आश्रयो यस्य तं मम देशिकं आचार्यं विलोक्य दृष्ट्वा अकिञ्चनं दरिद्रं असती अविद्यमाना गतिर्यस्य तं बहुलेषु अनेकेषु पापेषु दुरितेषु मग्नः लीनः आशयः । अभिप्रायो यस्य तं त्वदङ्घ्रिशरणागतिं त्वदीयपादपद्मशरणागतिं कथमपि अतिप्रयासेन ईरयन्तं भाषमाणं जडं मन्दं स्वेन त्वया कृतं करणकलेवरादिकं वेत्तीति जानातीति सन् त्वमेव भवानेव मम दुष्टतां दौष्ट्यं न वीक्ष्य अदृष्ट्वा मां अव रक्ष ॥ १७३ ॥

दुःखं मां शरणागतं भजति चेत्क्रन्दामि तद्दर्शिनः
तन्न स्याद्यदि ते दयाविरहितः स्यात्तद्भवेत् ते यदि ।

1. 'कुर्वस्य' इति पदद्वयं न व्याख्यातम् । 'अस्य मम' इति योजने नास्ति क्लेशः । 'कुरु' इति त्वनन्वयं तिष्ठति । 'मां अव वा । मा वा । अघमग्नं कुरु वा' इत्यन्यत्र ।

निर्दोषो न भवेर्द्विधा श्रुतिशतोत्सादस्तथान्यश्रुतेः
सिध्येन्नैव किमप्यतः परममुं रक्षाखिलाघव्रजात् ॥ १७४ ॥

दुःखव्रजान्मां रक्षेत्याह—दुःखमिति ॥ शरणागतं शारणागतिनिष्ठं मां दुखं भजति चेत् प्राप्नोति चेत् क्रन्दामि आक्रोशामि । तद्दर्शिनः मत्क्रन्दनदर्शिनस्ते तत् दुःखं न स्याद्यदि न भवेद्यदि दयया कृपया वर्जितः विरहितः स्याः भवेः । ते तव तत् दया (दुःखं) भवेद्यदि स्याद्यदि निर्दोषः दोषरहितः न भवेद्यदि (न भवेः)। द्विधा ['दयारहितत्वे'] निर्दोषत्वरहितत्वे[च] श्रुतिशतस्य दयालुत्व['निर्दोषत्व']प्रतिपादकश्रुतेः उत्सादः निरर्थकत्वं स्यात् । तथा तेनैव प्रकारेण अन्यश्रुतेः कारणत्वादिश्रुतेरपि किमपि किञ्चिदपि नैव सिध्येत् । अतः त्वद्विषयकप्रमाणाभावापत्त्या अखिलानां समस्तानां अघानां पापानां व्रजात् समूहात् अमुं मां एतादृशं मां रक्ष रक्षां कुरु ॥ १७४ ॥

वाचामगोचरमनन्तमनन्यनिष्ठं
श्रुत्यादिसिद्धमनिशं गुणमण्डलं ते ।
आच्छाद्यपूर्वमिदमेव ममापि चित्रं
अस्यैकदैव हि विरुद्धभयाभये स्तः ॥ १७५ ॥

मद्दोषदर्शनाद्भयं त्वद्गुणदर्शनादभयं भवतीत्याह—वाचामिति ॥ वाचां वेदवाचां अगोचरं अविषयं अनन्तं असंख्यं अन्येषु ब्रह्मरुद्रादिषु निष्ठं न भवतीत्यनन्यनिष्ठम् । श्रुत्यादिषु वेदादिषु सिद्धं निष्ठमित्यर्थः । ते भवतः गुणमण्डलं वात्सल्यादिगुणसमूह एव मम दासस्य अपूर्वं पूर्वं कदाप्यजातं अकारपूर्वकं च अगुणमण्डलं दोषसमूहं आच्छादि[1] पिहितवानित्यर्थः । इदं मे चित्रं आश्चर्यमित्यर्थः । अस्य मम विरुद्धे भयाभये एकदैव एककालावच्छेदेनैव स्तः । मद्दोषदर्शनात् त्वद्गुणदर्शनात् भयमभयं च भवतीत्यर्थः ॥ १७५ ॥

---

1. नात्र शब्दतोऽर्थतो वा किमपि साङ्गत्यं दृश्यते । 'अस्ति ह्यपूर्वम्' इति जातु मूलपाठो भवेत् ।

कामादिदोषनिवहः परिवर्धते मे
जानन्नधीरपि सदा रचयाम्यघानि ।
दुस्सङ्गतौ रुचिरतोऽनुशयः कदापि
नोदेति हन्त कथमीदृगहं तरेयम् ॥ १७६ ॥

ज्ञानाहुँस्सङ्गं कुर्वतो मे कथं तरणमित्याह—कामादीति ॥ कामादीनां दोषाणां पापानां निवहः समूहः मे मम परिवर्धते वृद्धिमेति । अहं सदा सर्वकालेऽपि जानन्नपि ज्ञानवानपि [अधीरपि अजानन्नपि] अघानि पापानि रचयामि रचनां करोमि । दुस्सङ्गतौ दुष्टसंसर्गे रुचिः । अतः अनुरागात् अनुशयः पश्चात्तापः कदापि क्वचित्कालेऽपि नोदेति न जायते हन्तेति खेदे । इदृक् ईदृशः एवंविध इत्यर्थः । अहं कथं तरेयं केन प्रकारेण तरेयं न केनापीत्यर्थः ॥ १७६ ॥

रागं विवर्धय भवच्चरणारविन्दे
दोषेषु यत्नमनिशं विफलं कुरुष्व ।
बालाद्यवद्यपरिहारनयादयुक्तं
मा दर्शयाजय सदा भवदीयसङ्गम् ॥ १७७ ॥

अतः भवदीयसङ्गं विवर्धयसि चेत् तरामीत्याह—रागमिति ॥ भवच्चरणारविन्दे भवदीयपादपङ्कजे रागं अनुरागं भक्तिमित्यर्थः । विवर्धय विशेषेण वृद्धिं कुरु । दोषेषु पापेषु अनिशं सर्वदा यत्नं प्रयत्नं विफलं व्यर्थं कुरुष्व कुरु । बालाद्यवद्यपरिहारनयात् बालादीनां शिश्वादीनां यदवद्यं दोषः तस्य परिहारन्यायात् अयुक्तं अयुक्तकार्यं मा दर्शय न दर्शय । सदा सर्वकालेष्वपि भवदीयानां श्रीमहाभागवतानां सङ्गं सहवासं दर्शयेत्यन्वयः ॥ १७७ ॥

हातुं नाथ नभोगतां वृषधरावास त्वमासीद्घनः
चिह्नं चामृतदत्वमाश्रयविनाभावासहाऽगात् तटित् ।
अस्थैर्ये विमनाश्च मात्त्रमिहते वक्षस्यलोलस्थितौ
लक्ष्म्यां श्रीश्चपलेति लोकवचनं विद्युन्मयत्वार्थकम् ॥ १७८ ॥

मेघस्त्वद्रूपेण तटिल्लक्ष्मीरूपेण जात इत्याह—हातुमिति ॥ हे वृषधरावास वेङ्कटाचलावास घनः मेघः नभोगतां नभश्चरत्वं भोगरहितत्वं च हातुं त्यक्तुं त्वद्रूपेण जातः। अस्मिन्नर्थे किं प्रमाणमित्याह चिह्नमिति। अमृतदत्वं जलं मोक्षं ददातीति अमृतदत्वं चिह्नं सूचकमित्यर्थः। आश्रयेण मेघेन विनाभावं विनात्वं न सहत इत्याश्रयविनाभावासहा अस्थैर्ये स्थैर्याभावे विमना विगतान्तःकरणा तटित् विद्युत् मात्वं लक्ष्मीत्वं अगम(गा)त् प्रापत्। इह अस्मिन् ते तव वक्षसि अलोला स्थिरा स्थितिः निवासो यस्यां तस्यां लक्ष्म्यां श्रीर्लक्ष्मीश्चपलेति चञ्चलेति लोकवचनं जनवाक्यं विद्युन्मयत्वार्थकं विद्युदभेदार्थकं न त्वस्थिरत्वार्थकम्। श्रीशब्दवाच्ययो रमासम्पत्त्योरभेदोपचारेणैवमुक्तम् ॥ १७८ ॥

**कांश्चिद्रक्षसि मां कुतो न बहुना पापेन चेत्तत्कृतं**
**मन्दं मामनिवारयन् मयि वसन् दक्षः किलाकारयः।**
**कूपान्तर्निपतन्तमर्भकमलं पश्यन्त्युपेक्षापरा**
**माताऽपातयदेव तत्त्वदुदितं पापं निवर्त्याव माम् ॥ १७९ ॥**

कूपान्तर्निपतनन्यायेन मामवेत्याह—कांश्चिदिति ॥ कांश्चित्पापरहितान् पापहीनान् ज्ञानाधिकान् रक्षसि अवसि। मां कुतः कस्माद्धेतोर्न रक्षसि। बहुना विस्तारेण(?) पापेण दोषेण चेत् न रक्षसि चेत् रक्षां न करोषि चेत् तत्कृतं पापकारिणं मन्दं अज्ञं मां अनिवारयन् निवारणमकुर्वन् मयि वसन् अन्तर्यामितया वसन् दक्षः समर्थः त्वं अकारयः किल पापप्रयोजकः किल। अर्भकमातृन्यायेनावेत्याह कूपेति। कूपस्य उदपानस्य। 'उदपानं तु पुंसि वे' त्यमरः। [अन्तः] निपतन्तं नितरां पतमानं अर्भकं शिशुं अलमत्यन्तं पश्यन्ती दर्शयन्ती(?) अपेक्षापरा आशाप्रधाना माता जननी अपातयदेव पतत्येव[1]। तत् तस्मात्कारणात् त्वत्त एव उदितं प्राप्तं पापं दुरितं निवर्त्य निरस्य मां अव रक्ष ॥ १७९ ॥

1. उपेक्षापरेति मूलानुरोधे कारयितृत्वेन पापहेतुत्वमात्रेऽयं दृष्टान्त इति प्रतिभाति। अपातयदिति णिजर्थोऽपि तदा समन्वेति।

**अन्तःस्थो जगतां जनिस्थितिलयान् कुर्वन्नियन्ता स्वराट्**
**दुष्टघ्नो जननादिभाक् स्वमनसा श्रुत्यादिमानोऽप्यहम् ।**
**न त्वं साक्ष्यवदः प्रमाणमशुभं वाचा किमेवंविधः**
**त्वं चेन्मामव पातकादकपटं त्वां निश्चिनोमीदृशम् ॥ १८० ॥**

अन्तर्यामी त्वं मां निष्कपटं रक्षसि चेत्तवेदृशं निश्चिनोमीत्याह—अन्तःस्थ इति ॥ जगतां लोकानां अन्तःस्थः अन्तर्यामी सन् जनिर्जन्म स्थितिः संरक्षणं लयः संहारः तान् ब्रह्मविष्णुरुद्ररूपेण कुर्वन् नियन्ता नियामकः स्वराट् स्वतन्त्रः दुष्टान् पापिनः हन्तीति दुष्टघ्नः स्वमनसा स्वेच्छया जननं जन्म भजतीति जननादिभाक् कर्मकृतजन्मरहित इत्यर्थः । श्रुत्यादिर्वेदादिर्मानं प्रमाणं यस्मिन् सोऽप्यहमेव त्वं न भवसि उभयोर्भेदात् । तथा साक्षी ब्रह्मादिः अवदः उभयोरभेद इति वक्ता न भवतीत्यर्थः ।. ' वदो वदावदो वक्ते ' त्यमरः । प्रमाणं शुभदं अशुभदं वा(?) नावदः (अवदम् ।) वाचा वाङ्मात्रेण किं किं प्रयोजनम् । क्रिया केवलमित्युक्तेः । त्वमेव एवंविधः अन्तर्यामी चेत् पातकात् पापात् मां दासभूतं अव रक्षेत्यर्थः । अकपटं कपटरहितं ईदृशं अन्तर्यामित्वविशिष्टं त्वां भवन्तं निश्चिनोमि निश्चयं करोमीत्यर्थः ॥ १८० ॥

**कुर्वे दुःखकराण्यघानि मनसा कस्मादहं वासना-**
**मोहाद्यैरिति चेदमूनि किमु ते वश्यान्यवश्यानि वा ।**
**आद्ये तैस्त्वमकारयः स्वकरणैर्वश्यो न दण्ड्योऽस्म्यहं**
**पित्राज्ञारचितस्वमातृनिधनः किं जामदग्न्योऽघभाक् ॥ १८१ ॥**

जामदग्न्यदृष्टान्तेन अघाभावत्वमाह—कुर्वे इति ॥ अहं मनसा अन्तः करणेन जानन्नपीत्यर्थः । दुःखकराणि दुःखप्रधाना(प्रदा)नि अघानि पापानि कस्मात् कस्माद्धेतोः कुर्वे करोमि । वासना अनादिकर्मवासना मोहः आसक्तिः आदिर्येषां तैः इति चेत् एवमुच्यते चेत् भवतः अमूनि वासनामोहादीनि वश्यानि स्वाधीनानि अवश्यानि वा

अस्वाधीनानि वा । आद्ये वासनावश्यत्वपक्षे स्वकरणैः स्वसाधनैः त्वं भवान् अकारयः कृतवान् । वश्यः [तव] स्वाधीनः अहं दण्ड्यः दण्डार्हो नास्मि । न भवामि । जमदग्नेरपत्यं जामदग्न्यः परशुरामः पित्राज्ञया जनकाज्ञया रचितं कृतं स्वमातृनिधनं स्वजननीनिधनं यस्य सः अघभाक् किं पापभाक् किम् । पित्राज्ञायाः पापत्वाभावादिति भावः ॥ १८२ ॥

अन्त्ये यद्यलयानि तानि न सुखं स्यात्कस्यचित्किं त्वया
क्षीयन्ते यदि जातुचित्कथमपि श्रीनाथ किं वा त्वया ।
त्वत्तश्चेत्तदवारकः शकनवान्नाकारयोऽघं कुतः
मत्चेत्किञ्चिदपेक्षसे न हि भवेः पूर्णस्ततो रक्ष माम् ॥ १८२ ॥

पूर्णत्वात्तव मां रक्षेत्याह—अन्त्य इति ॥ अन्त्ये अन्तकाले (अन्तिमपक्षे) [वासनादीनामवश्यत्वपक्ष इति यावत्] तानि वासनादीनि अलयानि यदि नाश-रहितानि यदि कस्यचिदपि कस्यापीत्यर्थः दुःखदायकपापस्य सदा विद्यमानत्वादिति भावः । त्वया भवता किं किं प्रयोजनमित्यर्थः । जातुचित्कदाचित् कथमपि अति-प्रयासेन क्षीयन्ते यदि क्षयं प्राप्नुवन्ति चेत् हे श्रीनाथ लक्ष्मीपते त्वया किं वा । वासनाविनाशाच्चेत् [त्वया] किं फलमित्यर्थः । त्वत्तश्चेत् त्वत्त एव तानि पापानि नश्यन्तीति चेत् तस्य वासनादेरनिवारकः अनिवर्तकः शकनवान् शक्तिमांस्त्वं कुतो वा हेतोः अघं पापं नाकारयः । अकारय एवेत्यर्थः । मत् मत्तः किञ्चित् कैङ्कर्यादिकं अपेक्षसे चेत् पूर्णो न भवसि न भवेः । ततस्तस्मात् मत्तोऽपेक्षाभावात् त्वमेव मां रक्ष रक्षणं कुरु ॥ १८२ ॥

निर्बीजं मम रक्षणे निखिलचिन्मुक्तिप्रसङ्गो यदि
स्यान्नौ का क्षतिरक्षरं तव पदं वर्धेत हीदंक्षयात् ।
लोकोऽयं सकलः सुखैकनिलयः स्याद्वा जनायं विना
लीला ते न घटेत चेत्तव कृते दुःखप्रदस्त्वं भवेः ॥ १८३ ॥

तर्हि लीलार्थं चेत्तव दुःखप्रदत्वं घटेतेत्याह—निर्बीजमिति ॥ निर्बीजं निष्कारणं यथा तथा । कारणं भक्त्यादि । मम दासस्य रक्षणे निखिलानां समस्तानां चितां जीवानां मुक्तिप्रसङ्गो यदि स्यात् सर्वमुक्तिः स्यादित्यर्थः । नौ उभयोश्च का क्षतिः को नाशः । लीला चेल्लोकनाशः स्यादित्यत आह अक्षरमिति । इदंक्षयात् जगन्नाशात् अक्षरं नाशरहितं तव पदं वैकुण्ठ इत्यर्थः । वर्धेत हि वृद्धिं प्राप्नोति हि । अतो न क्षतिरिति भावः । सुखैकनिलयः सुखस्य मुख्यस्थानभूतः सकलः समस्तः अयं लोकः स्यात् भवत्वित्यर्थः । ते तव जनाघं जनपापं विना लीला न घटेत चेत तव कृते त्वदर्थं त्वं दुःखप्रदः दुखदायकः भवेः स्याः । सर्वरक्षक-श्रुतिविरोधः स्यादिति भावः ॥ १८३ ॥

**स्वाज्ञाभेदनिजस्वहृत्यपदवीचारस्थितं(रं) प्रायशो**
**दण्डैरप्यनिवृत्तमेव निधनानर्हं स्वकीयं प्रभुः ।**
**स्वेच्छाचारनिरोधके दृढतरे धाम्नि स्वके पातय-**
**त्येवम्भूतममुं रमाधव कुतो मा पातयस्यक्षरे ॥ १८४ ॥**

अक्षरे वैकुण्ठे कुतो मां न पातयसीत्याह—स्वेति ॥ [[1]स्वशब्दः प्रभुपरः । स्वाज्ञाया भेदः अतिलङ्घनम् । निजस्वहृतिः स्वद्रव्यापहारः । तावेव अपदवी अमार्गः निषिद्धः पन्थाः । तत्र चारः सञ्चारः तस्मिन् स्थितं(रं) अचञ्चलतया वर्तमानं दण्डैः तर्जनबन्धनताडनादिरूपाभिः शिक्षाभिरपि अनिवृत्तमेव अमार्गाद्-परावृत्तं तदाचरणमेव पुनः पुनः कुर्वन्तमेव सन्तम् तथापि निधनानर्हं वधानर्हम् स्वकीयं जनं प्रभुः स्वामी स्वेच्छाचारनिरोधके स्वच्छन्दाचरणप्रतिबन्धके । अत्र स्वशब्दः स्वकीयजनपरः । दृढतरे तेन भेत्तुं अपावरितुं वा यथा न शक्यं तथा दृढे स्वके धाम्नि तदा तदा प्रत्यवेक्षणसौकर्यवति स्वनिवासस्थान एव प्रायशः पातयति अनिच्छन्तमपि नीत्वा स्थापयति । "एवम्भूतं श्रुत्यादिरूपत्वदाज्ञोल्लङ्घनात्मरूप-

---

1. इत आरभ्य इदं व्याख्यानं नास्ति । तस्माद् व्याख्यानान्तरं यथासम्भवमुपजीव्य सम्पादकेनैव व्याख्यायते ।

स्वद्रव्यापहारापराधकारिणममुं मां हे रमाधव कुतोऽक्षरे श्रीवैकुण्ठे मा पातयसि न पातयसि " ॥ १८४ ॥]

**बालं कर्मपिताप्यकार्यशतकं कृत्वाप्यदोषोऽवति**
**त्वं तातोऽनुपधिः स्वराडशरणं दीनं जडं माममुम् ।**
**मर्यादामनवप्रमाणगदितामुत्सृज्य वा पासि चेत्**
**का ते हानिरनीदृशेषु भवतात् सा सर्वविच्छ्रीनिधे ॥ १८५ ॥**

[ज्ञानाद्युपायहीनं न रक्षामीति मर्यादामुत्सृज्यापि मां पाहीत्याह—बालमिति ॥ हे सर्ववित् सर्वज्ञ श्रीनिधे श्रीनिवास कर्मपिता 'कर्मणा पितृत्वं प्राप्तः' अत एवौपाधिको लौकिकः पिताऽपि अकार्यशतकं अत्यन्तजुगुप्सितम् । निन्दायां कन् । कृत्वाऽपि अदोषः सन् बालं स्वपुत्रम् अवति ।

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥

इति हि स्मर्यते । अनुपधिः निरुपाधिकः तातः पिता स्वराट् स्वतन्त्रः त्वम् अशरणं दीनं जडममुं माम् । न नवं अनवम् पुरातनम् नित्यं प्रमाणं वेदः तत्र गदिताम् उक्ताम् मर्यादां 'नान्यः पन्थाः' इत्येवंरूपां मर्यादां व्यवस्थाम् उत्सृज्य त्यक्त्वाऽपि पासि रक्षसि चेत् का ते हानिः किमवद्यं तव स्यात् । मदाज्ञारूपं प्रमाणमप्रमाणं भवतीति इदमेवावद्यमिति चेत् अत्राह अनीदृशेष्विति । सा मर्यादा अनीदृशेषु अहं यथा सर्वात्मनाऽशक्तः तथा ये न भवन्ति तेषु भवतात् तद्विषया भवतु । तथा च नाप्रामाण्यमिति भावः ॥ १८५ ॥]

**मर्यादामवधीर्य चक्रमधरो विप्रात्मजानक्षरं**
**धामारोप्य पुनर्द्विजाय समदास्तस्मात्समानीय तान् ।**
**घण्टाकर्णमुखद्विषः समनयो मुक्तिं परां श्रीनिधे**
**सन्त्यन्यानि निदर्शनानि च शतं मय्येव सा पाल्यते ॥ १८६ ॥**

[पूर्वं बहुधा त्वया मर्यादाऽतिलङ्घनं कृतम्। अतोऽभ्यस्तत्वादिदानीं तत्सुकरमेवेत्याह—मर्यादामिति ॥ "आयुधं न धरामीति मर्यादामवधीर्य भीष्मस्योपरि" क्षेपणाय "चक्रमधरः। प्रकृतिसम्बन्धरहितस्यैव वैकुण्ठप्राप्तिरिति मर्यादामवधीर्य विप्रात्मजान् वैकुण्ठमारोप्य, वैकुण्ठं प्राप्तस्य पुनरावृत्तिर्नास्तीति मर्यादामवधीर्य पुनः तस्मात् वैकुण्ठात् तान् समानीय समदाः" सम्यक् यथा द्विजोऽतीव हृष्टोऽभूत् तथा अदाः। "न भगवद्द्वेषिणो मुक्तिरिति मर्यादामवधीर्य घण्टाकर्णादीन् शत्रून् परां मुक्तिं समनयः।" अन्यानि चोदाहरणानि शतं सन्ति। हे श्रीनिधे 'सा ज्ञानादिहीनस्य न मुक्तिरिति मर्यादा मय्येव पाल्यत' इति प्रश्नगर्भा काकुः। 'मदेकवर्जं किमिदं व्रतं ते'॥ १८६ ॥]

**चेतोवाक्तनुकर्मभिः क्षरतमैः कालान्तरे कार्यकृत्**
**कल्प्यं कर्तृगतं स्वतस्त्वकुशलं किञ्चिद् गतं लाघवात्।**
**विद्वत्कारकधर्मतां तदिह ते कोपो हि मद्गोचरः**
**पापं मे त्वदनुग्रहेऽत्र परमे कुत्रैष तिष्ठेद्दूरे ॥ १८७ ॥**

[त्वय्यनुग्रहपरे सति निराश्रयत्वान्मदीयं पापं स्वयं निवृत्तं भवतीत्याह—चेत इति ॥ मनोवाक्कायरूपत्रिविधकरणकृतानि कर्माणि क्षरतमानि अत्यन्तनश्वराणि क्षणप्रध्वंसीनि। तैः कालान्तरे कार्यकृत् दुःखजनकं किञ्चित् पापसञ्ज्ञं कर्तृगतं कल्पनीयम् उत्पद्यत इत्यङ्गीकर्तव्यम्। तत्तु कर्तरि कल्पितं स्वतः चेतनविशेषसङ्कल्पं विना अकुशलं दुःखात्मकस्वफलजनने असमर्थम्। अचेतनस्य स्वयं प्रवृत्त्यसम्भवात्। तदनुगुणः सङ्कल्पोऽपि कल्प्य इति चेत् कस्य। यदि कर्तुर्जीवस्य तन्न। तस्य अज्ञत्वेन नियतदेशकालज्ञानासम्भवात्। मम दुःखमिदानीं भवत्विति स्वेन स्वदुःखोत्पत्तिसङ्कल्पनस्यासम्भावितत्वाच्च। अथ विदुषः सर्वज्ञस्य कारकस्य कारयितुरीश्वरस्य तर्हि लाघवात् तस्य सङ्कल्पेनैव कृत्स्नेनालम्। किमपरेण कर्तृजीवगतेन अपूर्वाख्येन पापेन। एवं च चेतआदिकर्मभिः कालान्तरभाविफलानुगुणतया कर्तृगतत्वेन कल्प्यं किञ्चित् लाघवात् विद्वत्कारकधर्मतां गतम्।

तत् तस्मात् इह लोके मे पापं मत्सम्बन्धिपापत्वेन अभिधीयमानः मद्गोचरः मद्विषयस्ते कोपो हि कोप एव ; दुःखोत्पादनसङ्कल्पात्मको निग्रह एव । अत्र एवं सति अथ वा अत्र एतस्मिन् दीने मयि परमे त्वदनुग्रहे परमसुखोत्पादनसङ्कल्पे सति एष मत्पापत्वेन त्वत्कोपत्वेन च व्यवह्रियमाणो निग्रहः कुत्र तिष्ठेत् हे हरे । स्वविरुद्धस्यानुग्रहस्य त्वयि स्थित्या त्वयि न स्थातुं शक्नोति । अन्यस्तु आश्रयो नैव तस्य कश्चिदस्ति । तस्मान्नष्ट एवेति ॥ १८७ ॥]

कस्मान्नावसि मां हरे मयि गुणो नास्तीति चेत् किं त्वया
दोषे सत्यवितुं यथा न निपुणो नैवं गुणे शिक्षितुम् ।
रक्षारक्षणयोर्गुणागुणगता स्याद्दक्षता तद्भव-
न्नाथत्वाय सदोषमस्तगुणमप्येतं प्रभो रक्ष माम् ॥ १८८ ॥

[सदोषोऽपि अगुणोऽपि अहं रक्ष्य इत्याह—कस्मादिति ॥ हे हरे मां कस्मात् हेतोः न रक्षसि । मयि गुणो नास्तीति हेतोश्चेत् त्वया किम् । न किमपि कार्यमित्यर्थः । इदमेवोपपाद्यते दोष इत्यादिना दक्षतेत्यन्तेन । दोषे सति रक्षितुं त्वं न निपुणः शक्तः । एवं गुणे सति शिक्षितुमपि त्वं न निपुणः । इत्थमन्वयव्यतिरेकाभ्यां रक्षायां दक्षता सामर्थ्यं गुणगता भवति । अरक्षणदक्षता च अगुणं दोषं गता भवति । त्वयि तु न यत्किञ्चिद्दक्षतेति किं त्वयेति पूर्वोक्तमुपपादितम् । 'तथैवास्तु । मया किमपि मा भूत्' इति तु न वाच्यम् । त्वं हि सर्वस्य लोकस्य नाथः । निग्रहानुग्रहसामर्थ्यविरहे कथं नाथत्वं भवेत् । तदाह तद्भवन्नाथत्वायेति । तत् यस्माद्गुणागुणयोरेव रक्षणारक्षणसमर्थत्वे भवतो नाथत्वमपेयात् तस्मात् कारणात् भवतो नाथत्वस्थित्यै दोषसहितमपि गुणरहितमपि एतं मां हे प्रभो रक्ष ॥ १८८ ॥]

वीक्ष्य श्रीद् प्रभुतां भयात्तव मुदे भ्रांत्या नु मुग्धं जनः
त्वामाहाखिलवेदिनं स्वमवति स्वार्थार्थमेव स्तवान् ।

**स्वस्य स्वानवने क्षतिः स्वमवितुं स्वं नैव दक्षं त्विति**
**त्वं नो वेत्स्यथ वेत्सि चेत्कथममुं स्वामिन्न मां रक्षसि ॥ १८९ ॥**

[मम अरक्षणे तव अज्ञत्वं भवेदित्याह—वीक्ष्येति ॥ हे श्रीद् लक्ष्मीश जनः मुग्धं मूढं—सुन्दरं च । 'मुग्धः सुन्दरमूढयोः' इति निघण्टुः ।—त्वाम् तव प्रभुतां वीक्ष्य भयात् भयेन वा तव मुदे हर्षाय वा भ्रान्त्या नु यस्सर्वज्ञः सर्वविदित्याद्यर्थवाददर्शनजभ्रमेण वा अखिलवेदिनं सर्वज्ञमाह ब्रवीति । वस्तुतस्तथा न । कथम् । उच्यते । लोके स्वं स्वकीयं किमपि अस्यास्तीति स्ववान् पुरुषः स्वार्थार्थमेव स्वप्रयोजनार्थमेव स्वं स्वकीयं वस्तु अवति रक्षति । स्वानवने स्वकीयस्य वस्तुनो रक्षणाभावे स्वस्य आत्मनः प्रभोरेव क्षतिः, भोग्यवस्तुनाशेन भोगहानेः । न च स्वकीयं वस्तु स्वात्मानं स्वयमेव रक्षितुं समर्थमिति प्रभुणाऽरक्षितस्य तस्य नाशो ध्रुवः । इत्येतत् त्वं नो वेत्सि न जानासि । कथं न जानामि । जानाम्येव इति चेदत्राह अथ वेत्सीति । अथ वेत्सि जानासि चेत् हे स्वामिन् कथं केन हेतुना अमुं स्वामिनस्ते स्वभूतं मां न रक्षसि । स्वभूतस्य मम स्वामिना त्वया कर्तव्यस्य रक्षणस्य विरहे तव तदज्ञानातिरिक्तं कारणान्तरं नोपलभ्यते । तस्मात् त्वमज्ञ एवेति ॥ १८९ ॥]

**नाम्नामम्बेति तातेत्यपितरमपि किं वक्ष्यसीशोऽपि याच्ञां**
**दौत्यं वा सारथित्वं गिरिधृतिमवनेरुद्धृतिं वा वनान्ते ।**
**सञ्चारं दैत्यरक्षोबहुविधनिधनं दावपानं दयालो**
**मद्रक्षार्थं [करिष्यस्यजित व्रत कुतो 'मुग्धवत्तिष्ठसि त्वम्] ॥ १९० ॥**

[पूर्वमन्येषां रक्षणे त्वया बहु क्लिष्टम् । न च तावान् क्लेशो मद्रक्षणकृतेऽनुभाव्य इत्याह—नाम्नामिति ॥ "मद्रक्षार्थं मम रक्षणार्थम् नाम्नां नशब्देन समासः । अमातरं स्त्रियम् 'अम्ब' मातः इति" किं वक्ष्यसि । "अपितरं कञ्चन तात पितः इत्यपि किं वक्ष्यसि । मद्रक्षार्थं अमररक्षार्थमिव किमवतारान्

करिष्यसीत्यर्थः" । ईशः सर्वेश्वरोऽपि सन् याच्नां बलिसकाश इव किं करिष्यसि । एवं पाण्डवानामिव दौत्यं वा सारथित्वं वा पर्वतोद्धरणं वा भूम्युद्धारं वा अरण्यसञ्चारं वा असुराणां राक्षसानां च बहुविधां हिंसां वा दावानलपानं वा किं करिष्यसि । हे दयालो हे अजित कुतो मुग्धवत् अज्ञातकर्तव्य इव कर्तव्यगौरवचिन्ताकुल इव च त्वं तिष्ठसि तूष्णीं वर्तसे । 'अस्य दोषान् क्षमिष्य' इति सङ्कल्पमात्रेण भवतीति हि मद्रक्षणमतिसुकरमिति ॥ १९० ॥ ]

इति श्लोकानिमान् सप्त श्रीनिवासगुणाकरे ।
श्रीशैलस्तातयाचार्यो व्याख्यया समयोजयत् ॥

इति श्रीनिवासगुणाकरः
(यावदुपलब्धः) ।

श्री श्रीनिवासपरब्रह्मणे नमः

श्री श्रीनिवासस्तवः ।

आत्रेय श्रीवेङ्कटाध्वरिणः कृतौ

# श्रवणानन्दे

## प्रथमशतकम्

आचक्रायुधमा च मामकगुरोराचार्यवर्गं भजे
यस्यान्तर्निगमान्तदेशिकयतिश्रेष्ठौ मुनिर्यामुनः ।
रामस्तामरसेक्षणः स च मुनिर्नाथः शठारातिरि-
त्यन्तस्सन्तमसच्छिदः श्रुतिदृशामग्रेसरा जाग्रति ॥ श्रीः ॥

या कल्याणनिधिर्व्रजन्ति शरणं यामेव धीमेदुरा
यक्षेशन्ति ययेक्षिता भुवि जना यस्यै हरिस्तिष्ठते ।
यस्या जातमिदं वदन्ति भुवनं यस्याः सदस्याः सुरा
यस्यामायतते शिवं[1] भगवतस्तामिन्दिरां चिन्तये ॥ २ ॥

नाकानोकहगर्वचर्वणचणैर[2]श्रान्तविश्राणनै[3]-
र्नानाकाङ्क्षितसंविधाननिपुणे नारायणे जाग्रति ।
कष्टं कष्टमुपेत्य दुष्टनृपतिद्वारक्षमां[4] रक्ष मा-
मित्याक्रन्दकृतां वृथैव दिवसान्येतानि यातानि नः ॥ ३ ॥

1. पाठान्तरम्—कृपा । 2. —चणे द्य— । 3. —ने । 4. —पतीन् हा रक्ष माम् ।

तूर्णं दुर्नरपालवर्णनमहादुर्नाटकोपक्रमं
दोषं शोषयितुं वृषाचलपते तोषं च नेतुं सतः ।
अत्रामुत्र च लब्धुमग्र्यसुमनोलभ्यानि[1] भाग्यान्यमी
पद्माकान्त तव स्तवे भवदवैरार्ताः प्रवर्तामहे ॥ ४ ॥

वाचा वाञ्छति यत्तव स्तवमिह प्रह्वापि[2] जिह्वा चिरा-
दाराध्यामि भवन्तमित्यपदिशंस्तेनापराध्यामि ते ।
यद्वाऽसावतिबालवागिति कृपाव्याजाय ते जायते
सन्दत्ते[3] शिशुकैः शुकैश्च कलितो वर्णोऽपि कर्णोत्सवम् ॥ ५ ॥

मालीमस्यमवापिता घनतमःप्रायैर्मुरारे चिरा-
दिङ्गालैरिव जङ्गमाधमगुणाभासैरियं भारती ।
तत्तादृग्भिरशङ्क[4]शङ्करशिरःकम्पस्य सम्पादकै-
र्गम्भीरैरवदायते तव गुणैर्गाङ्गैस्तरङ्गैरिव ॥ ६ ॥

जम्भालम्भनचित्तकम्पनमहाकुम्भाभवक्षोजभृ-
द्रम्भाद्यामरशम्भलीदृढपरीरम्भादिकं भावुकम् ।
शम्पालोलमवेक्ष्य मुह्यतु[5] जनः किं पामरेणामुना
त्वं पादाम्बुजचुम्बनं भगवतः सम्पादयेथा मनः ॥ ७ ॥

वेदैर्वक्तुमजादयो गुणगणान् विश्वेश ते नेशते
स्तोतुं तान् मितया गिरा व्यवसितो हास्याय हा स्यादयम् ।
सिन्धुं राघवसेतुनाऽपि तरितुं तं सर्वतो दुश्शकं
को वा लङ्घयितुं व्यवस्यति कुशस्तम्बेन कुम्भेन वा ॥ ८ ॥

---

1. —योग्यानि । 2. —इहावह्वथापि । 3. सन्धत्ते । 4. अभिज्ञ । टिप्पणी—अवदायते दैप् शोधने कर्मणि । 'अवापिताम् इमां भारतीम् अवदातये' इति पाठो दृश्यते । तत्र 'अवदापये' इति युक्तम् । 5. तुष्यतु ।

मुग्धे वाणि नृणां गुणाः कतिपये मिथ्या निबद्धा इति
प्रोत्सिक्ता भगवद्गुणानुकथनारम्भाय किं जृम्भसे ।
आकृष्टाः कतिचिद् वनेषु हरिणा इत्याजिहार्षोमहो
लुब्धो लब्धमदो विधास्यति विधोरङ्के[1] कुरङ्गेऽपि कः[2] ॥ ९ ॥

त्वत्कल्याणगुणामृतार्णवसुधालेशोऽपि लीढो भवं
हन्तीति स्तवविस्तरेष्वपटुता नातीव दोषाय नः ।
आपातप्लव एव जह्नुदुहितर्यहाय शुध्यै भवेत्
तस्या नेतरगाधवारिषु तलस्पर्शोऽपि नापेक्षितः ॥ १० ॥

सन्दर्भे मम माऽस्तु सुन्दरतया सन्तोषसान्द्रो बुधः
किन्तु त्वद्गुणलेशपेशलतया सन्तुष्यतु श्रीपते ।
राजानो मणिपेटिकामवहिता रक्षन्ति यत् तत्र नो
पेटीसौष्ठवमेव हेतुरपि तु ख्यातं मणेर्गौरवम् ॥ ११ ॥

नाद्यं भूतमहो वहामि शिरसा त्वत्पादजातं न च
द्वैतीयीकमथ त्वदीक्षणभुवः शौरे तृतीयस्य वा ।
अन्ते नावसमप्यवाप्य जननं तुर्यान्न वा पञ्चमे
किञ्चाहं चरतां गुरुस्तदपि ते स्तोत्रे प्रवर्ते कथम् ॥ १२ ॥

12. आद्यं—पञ्चसु महाभूतेषु प्रथमं पृथिवी । त्वत्पादजातमित्यत्राप्यन्वेतुं योग्यम् । पद्भ्यां भूमिरिति श्रुतेः । नाहमादिशेष इत्युक्तं भवति । द्वितीयं भूतं जलम् । इह गङ्गारूपम् । न च शिरसा वहामि । न सर्वज्ञः शिवोऽस्मीति । तुर्याद् भूतात् वायोर्जननमवाप्य त्वदीक्षणभुवः तृतीयस्य भूतस्य तेजसः 'चक्षोः सूर्यो अजायत' इत्याम्नातस्य सूर्यस्य अन्ते नावसं अन्तेवासी शिष्यः नाभवम् । नाहं नवव्याकरणविद्धनुमानिति । न वा पञ्चमे भूते गगने चरतां देवनां गुरुः बृहस्पतिरस्मि । तदपि कथं स्तोत्रे प्रवर्ते ।

---

1. अङ्गे । 2. किम् ।

ओङ्कारस्य रहस्यमित्यज इति ब्रह्मेति सर्वात्मना-
मात्मेति प्रकृतेः परः पुरुष इत्याद्यः स्वयम्भूरिति ।
वेदान्तैरवबोधिताय भगवन् विश्वैकजीवातवे
बोधानन्दमयाय सिन्धुदुहितुर्नाथाय तुभ्यं नमः ॥ १३ ॥

यच्चक्षुर्जगतां तदेव निगमास्त्वच्चक्षुराचक्षते
लक्ष्मीनाथ तथापि दृश्यमितराद्दृश्यः स्वयं पश्यसि ।
अप्येतच्छतमन्युपावकजनिस्थानं सदा नः पुन-
र्वक्त्रं देव तव प्रसादशिशिरं हर्षं दृशोर्वर्षति ॥ १४ ॥

तत्तादृक्करुणारसैरविरलैस्त्वन्मानसं शीतलं
तापानां त्रितयं हरेदिति हरे धैर्यं ममोदञ्चति ।
तज्जन्मा विवृणोति शीतकिरणस्तच्छैत्यमत्युज्ज्वलं
लिङ्गं कार्यगुणं हि कारणगुणे शंसन्ति निस्संशयम् ॥ १५ ॥

15. कार्यगुणं कारणगुणविषये निस्संशयं लिङ्गं शंसन्ति वदन्ति अभिज्ञाः । 'कार्यगुणा हि कारणगुणम्' इत्यपि पाठः । तत्र लिङ्गभूताः कार्यगुणाः कारणगुणं निस्संशयं बोधयन्तीति योजना ।

नित्याय स्वतनुस्थवारिधिवरापत्याय मृत्युञ्जय-
स्तुत्याय क्षपितप्रणम्रजनदौर्गत्याय सत्यात्मने ।
इच्छानिर्मितविश्वजन्यवनसंहाराय निश्श्रेयस-
द्वाराय स्थिरसम्पदे नम इदं नारायणायास्तु ते ॥ १६ ॥

दीनानां सुरधेनवे तनुभृतामन्तस्तमोभानवे
मायातूलकृशानवे कलयते मानक्षतिं दानवे ।
निर्धूताखिलकर्मणे विनमतां नित्येन्दिरानर्मणे
तुभ्यं निर्मलधर्मणे नम इदं कुर्मः परब्रह्मणे ॥ १७ ॥

पादाम्भोजमहं भजामि भवतो वेदाञ्चलैरञ्चितं
प्रख्यातात् किल पन्नगाचलपते यस्य प्रभावादसौ ।
सिद्धा मूर्ध्नि फणीश्वरस्य पृथिवी शर्वस्य चापो मुने-
रग्निश्चाक्षपदस्त्रिवर्णजनुषां शुश्रूषकास्तिस्तथा ॥ १८ ॥

18. शर्वस्य मूर्ध्नि आपो गङ्गारूपाः । अक्षपादस्य गौतमस्य मुनेः अग्निः तदुपलक्षितं गहिस्त्यम् । पत्नीति यावत् । अग्निः सिद्ध इति योजना ।

मूर्तीनां तिसृणां परा तु कतमेत्यब्जाक्ष संशेरते
भ्रान्तिं यान्ति च देवतान्तरपरैर्ये वाङ्मयैस्तामसैः ।
यः पादाम्बु ददाति यस्तदुपसंगृह्णाति गृह्णाति वा
यश्चैतच्छिरसैव तेषु परमः को वेति पृच्छामि तान् ॥ १९ ॥

पर्यङ्कस्तव पङ्कजाक्ष गिरिजाप्राणेशितुर्भूषणं
चारु त्वच्चरणारविन्दसलिलं चूडापदे मालिका ।
मन्त्रो नित्यजपोचितो ननु भवन्नामैव तद्घोषितः
पारम्ये भवतो मुकुन्द भुवि कः सन्देग्धि मन्देतरः ॥ २० ॥

नालीके जननं स्थितिं च भजतो नारायण ब्रह्मणः
स्थानेऽभूद् रज एव कारणगुणः कार्ये हि सूते गुणम् ।
ईशाने पुनरन्धकारिपदभाज्यर्हे[1] तमस्तत् किल
श्रीवासे त्वयि सारसत्त्वविभवः सङ्घाघटीति स्फुटम् ॥ २१ ॥

नागेन्द्राद्रिविहार सारसवनस्तोमप्रकाशावहा
धीरोदारपदक्रमा मतिमताध्येया सुवर्णाकृतिः ।
पुष्यन्ती निजमौलिना सुमनसो ज्योतिष्मदङ्गोज्ज्वला
त्वय्येषा सुरपूज्य रज्यतितरां त्वय्येव लक्ष्मीरिव ॥ २२ ॥

1. अन्धम् ।

नित्यापाकृतमीर्निरत्ययशुभाधारैर्वृतो बान्धवैः
प्रौढाभस्थिरधीरसन्नभवनस्थायी व्यथाभारहृत् ।
सद्गोष्ठीषु सदा विभानमधिकं प्राप्तः श्रितस्त्वां हरे
तत्तुल्यस्त्वदनाश्रितश्च भगवन्नन्त्ये तु भंगं विदुः ॥ २३ ॥

23. त्वामनाश्रितश्च त्वदाश्रिततुल्यः । सर्वाण्येतानि विशेषणानि तत्राप्यन्वीयन्त इति विशेषस्तु—अन्त्ये त्वदनाश्रिते भङ्गं विनाशं विदुरभिज्ञा इत्यापातार्थः । भं भकारं गं गकारं विदुः गृह्णन्ति । उक्तेषु विशेषणेषु यत्र यत्र भकारः श्रूयते तत्रतत्र गकारं घटयित्वा तस्मिन्नन्वेतव्यानीति परमार्थः । 'नित्यापाकृतगीः निरत्ययशुगाधारैर्वृतो बान्धवैः प्रौढागःस्थिरधीः असन् नगवनस्थायी व्यथाऽगारहृत् सद्गोष्ठीषु सदा विगानमधिकं प्राप्तः' इति ।

श्रेयस्तोयदसम्प्रदायरसिकच्छायः सहायः श्रिय-
श्चिन्तारत्नसपत्नवीक्षितलवश्चेक्रीयतामन्वहम् ।
यो विश्वेन च गात्रवान् हिमरुचाऽप्युष्णांशुना नेत्रवान्
सुग्रीवेण च मित्रवान् कुशलवब्रह्मादिभिः पुत्रवान् ॥ २४ ॥

पूर्वं त्वत्पदपांसुना बलिरिपो पूता जलध्यङ्गना
पुंसः साऽपि सुरापगा वितनुते पूतान् सुरापानपि ।
पत्नी योगिवरस्य सा सुरपगा प्राप्ता विशुद्धिं परां
तेनेत्यत्र न विस्मयः स मम किं पापं न लोपं नयेत् ॥ २५ ॥

मामाराध्य दुरत्ययं स्वयममी मायापयोधिं तर-
न्त्वित्यालोच्य सहेन्द्रियैरिह वपुस्त्वं चेतनेभ्योऽदिशः ।
तेष्वेके तत एव दुष्कृतशतं सञ्चिन्वते श्रीपते
क्लृप्ते तापशमाय विन्दति सरस्यन्धस्तु पातव्यथाम् ॥ २६ ॥

गोविन्देति कृपाकरेति कमलाकान्तेति कृष्णेति वा
काकुत्स्थेति रघूद्वहेति जलदश्यामेति रामेति वा ।

वैकुण्ठेत्यतिचण्डकण्टकवनीदावेति देवेति वा
[1]शेषाद्रीश तवैव नाम कथयन् श्रेयो न विन्देत कः ॥ २७ ॥

कल्याणैकनिकेतनं तदनघं कालाम्बुदश्यामलं
चित्ते नृत्यतु शेषभूधरशिरोरत्नं चिरत्नं महः ।
यस्योरस्यनिशं सुता जलनिधेर्यस्यास्ति तन्मेखला
पार्श्वे यस्य पदे न्न तत्प्रियतमा यत् तत्र शेते स्वयम् ॥ २८ ॥

दूरादेव निरस्य दुष्टनृपतिद्वाराग्रनित्यस्थितिं
तारावल्लभदुर्लभप्रभमुखं घाराधरश्यामलम् ।
पारावारसुतासखं सुमनसामाराधयामः प्रभुं
घोरापारसमस्तदुष्कृतपरीहाराय नारायणम् ॥ २९ ॥

कीर्तिं नश्वरवर्तिनीं क्षितितले पुष्णातु कृष्णाम्बुदः
कश्चित् तापहरो गृहीतकमलः कल्लोलिनीवल्लभात् ।
धिन्वन् जीवनदानतो जगदिदं तन्वन्नदीनां श्रियं
प्राप्तः साधुकदम्बजृम्भणकरश्री(रःश्री)वेङ्कटक्ष्माधरम् ॥ ३० ॥

आस्तामष्टनवैर्दिनैरपयती प्रास्तापवर्गस्पृहा
[2]वृष्णोन्तःपुरकेळिताण्डवविधौ तृष्णा कदुष्णाञ्चिता ।
दीक्षामाश्रितरक्षणे कृतवतो मोक्षाय लक्ष्मीपतेः
साक्षदेव पदारविन्दविषयां प्रेक्षामपेक्षामहे ॥ ३१ ॥

कल्याणानि चिरं तरङ्गयतु नः कारुण्यकल्लोलिनी-
कान्तस्स्वान्तचरस्सतां सफलयन् काकोदरेन्द्राचलम् ।

1. 'भक्त्या चेतसि चिन्तयन् प्रतिदिनम्। 2. कृष्णान्तः....विधातृष्णानदीरा-चिता(?)

आमोदादमृतं ददाति विबुधव्राताय जातादरो
गाम्भीर्यैकनिधिर्घनैरभिगतो यो जीवनप्रेप्सुभिः ॥ ३२ ॥

पुण्यारण्यमहीरुहैरविरले पुष्पासवैश्शीतले
नानादिग्जनसेव्यमान[1]शिखरे नागाधिपक्ष्माधरे ।
आविर्भूतमुपासितं मुनिजनैरप्राकृतं दैवतं
पद्माकान्तभुजान्तरं शुभपरीपाकाद्विलोकामहे ॥ ३३ ॥

अङ्घ्रिं जिघ्रति वेङ्कटाचलपतेरारुह्य चोरुद्वयी-
मध्यास्ते रशनामथाटति कटीमासेवते नन्दकम् ।
वक्षःस्थां श्रयते श्रियं विहरते शङ्खे रथाङ्गे च धी-
रालीढे मुखचन्द्रमण्डलसुधां कोटीरमाटीकते ॥ ३४ ॥

ध्यातं योगकलाविलासरसिकैश्शीतं दयास्रोतसा
ख्यातं मौळिषु कृत्रिमेतरगिरां क्रीतं श्रिया विभ्रमैः ।
वेतण्डेन्द्रविपद्विमोचनचणं वातन्धयक्ष्माधरे
जातं धाम निरामयं प्रशमयत्वा[2] तङ्कजातं मम ॥ ३५ ॥

हेमाटोपविडम्बिगात्रसुषमां वामालकां कामपि
प्रेमावेशवशेन वक्षसि वहन्वैमानिकेन्द्राञ्चितः ।
क्षेमाणि स्वयमातनोतु जगतां कामाभिरामाकृति-
र्भूमा कोऽपि भुजङ्गभूधरशिरस्सीमातमालोपमः ॥ ३६ ॥

मातर्नातनवं तवाभिगमनं पश्चात्त्वदर्चाक्षमं
द्रव्यं नार्जयमाचरं न च ततः प्राज्यां त्वदिज्यामपि ।

1. घनशोभमान- । 2. 'निराकरोतु जगतामा-' । 'निरामयं परिहरत्वा...

स्वाध्यायं न च हर्षहेतुमजपं नाध्यायमङ्घ्री च ते
तन्मे जन्म विपश्चितोऽपि विफलं शौरे तिरश्चामिव ॥ ३७ ॥

भोगीशानमहीधरेन्द्रमकुटीपाटीरवाटीचर-
द्भिल्लोत्फुल्लसरोजपत्रनयनानैकपात्रायितः ।
नाभीपद्मनिवासिधातृवदनप्रोद्यज्जरद्भारती-
गानाकर्णनहृष्टकर्णयुगळः पायादपूर्वः प्रभुः ॥ ३८ ॥

38. जरद्भारती वेदः ।

नाभेरेव बभूव यस्य गगनं नेत्रादसौ तन्मणिः
चित्तात्तत्परिपन्थि धाम शिशिरं तच्छेखरः फालतः ।
प्राणात्तत्करकङ्कणाशनमदोमित्रं च वक्त्रादयं
शेषाद्रावलोकितो हरिरुरोभूषायितान्तःपुरः ॥ ३९ ॥

39. नाभेरिति । 'नाभ्या आसीदन्तरिक्षम्,' इति श्रुतिः । तन्मणिः गगनमणिः सूर्यः । चित्तात् मनसः तत्परिपन्थि शिशिरं धाम चन्द्रः । तच्छेखरः चन्द्रशेखरः शिवः । प्राणात् चन्द्रशेखरकरकङ्कणस्य सर्पस्य अशनं वायुः । 'प्राणाद्वायुरजायत'। अदोमित्रं अमुष्य वायोर्मित्रं अग्निः वक्त्रात् ।

शौरे वाहनयाञ्चकर्थ शकुनिं मुक्त्वा गजाश्वादिकान्
सर्पे संविशसे कथं मणिमये तल्पेऽप्यनल्पे सति ।
विस्तीर्णालयहीनवत सुबहुषु स्थानेषु सत्स्वप्यहो
पुत्रं नाभिबिले न्यधाः कथमिमां पत्नीं च वक्षस्थले ॥ ४० ॥

40. विस्तीर्णैः आलयैः हीना रहिता ये जनाः तद्वत् ।

अविरतमधुपानक्षुभ्यदक्षिभ्रुवाणा-
मवनिभृदधमानामास्यमात्मंभरीणाम् ।
परुषतममपास्य प्रत्यहं नित्यहर्ष-
प्रदमिदमवलोके पद्मनाभाङ्घ्रिपद्मम् ॥ ४१ ॥

सकलकुशलदायी सर्वदेवातिशायी
प्रबलदुरितलावी भक्तचित्तानुसेवी ।
भवगहनविदारी पारिजातापहारी
फणिपतिगिरिवासी पातु पद्माविलासी ॥ ४२ ॥

उरुतरदुरितौघध्वंसदक्षैः कटाक्षैः
उपचितकमलानामुत्पलश्यामलानाम् ।
फणिगिरिनिलयानां भक्तदत्ताभयानां
दृढमतिरहमद्य स्तोममभ्येमि भासाम् ॥ ४३ ॥

प्रबलदनुजपाळीप्राणसंहारकेळी-
पटिमघटितकीर्तिर्भास्वदानन्दमूर्तिः ।
फणिगिरिगृहमेधी भक्तबाधानिरोधी
भवतु हृदि ममायं प्रास्तुवन्नागमा यम् ॥ ४४ ॥

कमलविमलशोभाविभ्रमादभ्रमान-
क्षपणनिपुणवक्त्रः कौणपानाममित्रः ।
उरसि सरसिजाक्षीमुद्वहन्निद्धदाढ्यं-
करणचरणरेणुः कोऽपि पायादपायात् ॥ ४५ ॥

विविधनिगमसारे विश्वरक्षैकधीरे
वृषशिखरिविहारे वक्षसाऽऽश्लिष्टदारे ।
भगवति यदुवीरे भक्तबुद्धेरदूरे
भवतु चिरमुदारे भावना निर्विकारे ॥ ४६ ॥

अनिशमुरुभिरत्रामुत्र च क्लेशमूलैः
किमुदरभृतिकार्यैराप्रयाणादवार्यैः ।

सुखमनघमवाप्तुं सोऽहमम्भोदभासं
फणिपतिगिरिवासं भावये श्रीनिवासम् ॥ ४७ ॥

प्रतिकटकमटित्वा पार्थिवाग्रे नटित्वा
पटुचटुशतमुक्त्वा पातकान्येव कृत्वा ।
किमिह फलमवाप्तं केवलं कैटभारेः
स्मर चरणसरोजे सन्तराम्यन्तरात्मन् ॥ ४८ ॥

48. स्मरणस्य फलमाह सन्तरामीति । हे अन्तरात्मन् मनः, तथा सति भवाम्बुधिं सन्तरेयमिति ।

वशयति हृदयं मे वर्षति श्रीश हर्षं
जनयति परिशुद्धिं जायते मङ्गलाय ।
दमयति परितापं देव निर्हन्ति पापं
दरमपि विधुनीते दर्शनं तावकीनम् ॥ ४९ ॥

कवलितघनवर्गः कान्तिभिः पेशलाभिः
कमलवननिवासाकान्तबाह्वान्तरालः ।
पुरुष इह रथाङ्गी पूर्णिमाचन्द्रबिम्ब-
प्रतिभटवदनश्रीः प्रातराभातु चित्ते ॥ ५० ॥

सुरतरुरिवोदारो दारोपशोभिभुजान्तरः
मधुरकरुणालोको लोकोपरक्षणदीक्षितः ।
अखिलसुमनःकोटीकोटीरचुम्बिपदाम्बुजः
फणिधरणिभृन्मल्लो मल्लोचनाभरणायते ॥ ५१ ॥

तमुपनिषदां सारं सारङ्गलाञ्छनलोचनं
प्रकटितकृपासारं सारम्भमाश्रितपालने ।

ल्यमिह रुषा वारं[1] वारं नयन्तममुं द्विषां
वृषगिरिपतिं वारं वारं शुभाय विचिन्तये ॥ ५२ ॥

मुनिभिरनिशं ध्येया गेया सुरप्रमदाजनैः
वलभिदुपलच्छायादायाददीप्तिलसत्तनुः ।
उरसि विहरज्जाया कायाधवाभयदायिनी
विहितदुरितापाया पायाद्वृषाचलदेवता ॥ ५३ ॥

53. कयाधोः हिरण्यकशिपुपत्न्याः अयं कायाधवः प्रह्लादः ।

दुरितभरिते दुर्देहेऽस्मिन् दुरामयदूषिते
मम नवनवस्तर्षोत्कर्षो भवत्यनिवारितः ।
अमुमपनयन्नम्भोजश्रीकदम्बविडम्बके
तव हृतनमत्खेदे पादे रुचिं रचयेशितः ॥ ५४ ॥

अभिगतिमुखैरस्यामि श्रीनिवास न वासरान्
प्रशमितभवोद्वेगैर्योगैर्नयामि न यामिनीः ।
न च विरचये नाथ त्वय्यत्तमांसि नमांसि ते
तदपि भवता हा! मे मुक्तिस्पृहाऽपि न हापिता ॥ ५५ ॥

दुरत्ययरुजातुरे दुरितधूसरे नश्वरे
हरे बत कलेबरे मतिहरे कृतघ्नोदरे ।
स्पृहामिह विहाय ते स्मरति मानसं मे यथा
तथा कुरु सुधाब्धिजासख दयामविघ्नोदयाम् ॥ ५६ ॥

तमःप्रकररुद्धये तदनु सत्त्वसंवृद्धये
विशुद्धमतिसिद्धये विमलनिर्वृतेर्लब्धये ।

---

1. रुषैवाऽरं ।

भवन्तु मयि सन्ततं भगवतो वृषाद्रिप्रभोः
प्रगेतनपयोरुहप्रतिभटाः कटाक्षच्छटाः ॥ ५७ ॥

प्रपन्नानां नानादुरितपरितापव्यतिकरं
निरुन्धाना धानाप्रदमुनिधनेशीकृतिचणा ।
प्रविभ्राणाऽभ्राणामपि मदहरां दीप्तिमनघाम्
भृताशेषा शेषाचलशिखरभूषा विजयते ॥ ५८ ॥

मुदे वो देवोऽयं भवतु भुजगेन्द्राचलतटी-
कृतावासो वासोरुचिनिचयधूताचिररुचिः ।
गजादीनां दीनां शमयितुमवस्थां करुणया
निजग्राह ग्राहप्रभृतिरिपुवर्गं सपदि यः ॥ ५९ ॥

अभीष्टं वो दुग्धामखिलमिह गोपालतिलकः
पयोदश्यामाङ्गः फणिधरणिभृत्काननचरः ।
अघा सं बद्धानामहह जरतीनामपि गवां
परीपोषं कुर्वन् रसममितमुत्पादयति यः ॥ ६० ॥

60. अघासं तृणरहितं बद्धानाम् । जरतीनां गवां प्रहीणवयसां धेनूनाम् । अघैः दोषैः असम्बद्धानां सम्बन्धरहितानां चिरन्तनीनां वाचां वेदानां च ।

नमस्तस्मै भस्मीकृतनरकबाणादिविबुध-
प्रतिद्वन्द्विश्रेणीविपतरुवनीकाय महते ।
हुतानां हव्यानां नियतमुपभोक्त्रेऽधिसवनं
प्रशस्ताराध्याय प्रचुररुचये नित्यशुचये ॥ ६१ ॥

61. नित्यशुचये । शुचिरित्यग्निरपि विवक्षितः । स नित्यः न प्रसिद्धाग्निवदनित्यः ।

विहारि जगदुद्भवस्थितिविलोपनैर्यातनां
धुनातु मिथुनं मिथस्तदवियोगि यत्रैककम् ।
वदन्ति वसुधाधरं पुनरचञ्चलाभं बुधाः
परं नवसुधाधरं स्फुरति चञ्चलाभं तथा ॥ ६२ ॥

शुचये रचये प्रणाममस्मै
प्रभवे सुप्रभवेषपेशलाय ।
हरये निरयेक्षणं क्षणं यं
विनता नो जनता कदाप्युपैति ॥ ६३ ॥

कलिकल्मषहारिनामधेयं
कलये तापसमानसावधेयम् ।
मदनस्पृहणीयरूपधेयं
तदनन्ताचलमौलिभागधेयम् ॥ ६४ ॥

तव सागरभूस्तु धर्मपत्नी
दिवसानामधिपो निवासवेदिः ।
शिवधातृमुखास्सुतास्त्वदन्यै-
रवधार्यो महिमा कथं त्वदीयः ॥ ६५ ॥

मधुरं विधुरम्यवक्त्रबिम्बं
महितं धाम हितं मखाशनेभ्यः ।
तदहं मदहन्तृ दानवानां
विदधे भीत्युदधेः प्लवं गुणाढ्यम् ॥ ६६ ॥

नमतां ममतावलेपहन्त्रे
वरदाय स्फुरदायतेक्षणाय ।

करवै मुरवैरिणे प्रणामा-

नुरगोर्वीधरगो य एष भाति ॥ ६७ ॥

करुणावरुणालयं मुरारे

कमलाक्षं कमलाक्षमासमेतम् ।

भजते निजतेजसा जितार्कं

विगतांहा जगतां धुरन्धरं त्वाम् ॥ ६८ ॥

अनन्त तवाभिधानं

क्षणं गृणन्तः प्रविशन्ति नाकम् ।

रमासख त्वद्विमुखाश्च मध्ये

रसज्ञतं हन्त तमेव यान्ति ॥ ६९ ॥

69. मध्ये रसज्ञतं रेफेण युक्तम् तमेव नाकमेव । नारकमित्यर्थः ।

प्रसाधयेद् यां तपसा चिरेण

स्मरान्तक[1] श्लाघ्यतरां गतिं ताम् ।

वृषाचलारण्यनिषादकाना

प्रसादलेशेन न साधयेत्किम् ॥ ७० ॥

ददासि दासप्रकराय राय-

स्तथाऽपि नाथ त्वमकम्पसम्पत् ।

श्रियो वियोगस्य कथा कथं स्या-

दहीनपृथ्वीभृदुपाश्रयस्य ॥ ७१ ॥

71. अहीनपृथ्वीभृत् अखण्डभूमण्डलाधिपतिः सार्वभौम उपाश्रयो यस्य; अहीनां सर्पाणां इनः श्रेष्ठः शेषः अहीनपृथ्वीभृत् शेषाद्रिः उपाश्रयो यस्य च ।

1. मुरान्तक ।

प्राप्तोदयो हि प्रथमाद्रिशृङ्गे
दोषावसाने हरिरेष दृश्यः ।
संशोषयन्मानसवृत्तिपङ्कं
प्रसन्नपङ्केरुहशोभनाभः ॥ ७२ ॥

72. प्रथमाद्रिः उदयपर्वतः पर्वतेषु प्रथमगणनीयो वेङ्कटाचलश्च । रात्र्यवसाने दोषाणामवसाने च हरिः सूर्यः श्रीनिवासश्च । प्रसन्नैः विकसितैः पङ्केरुहैः शोभनाः श्लाघ्याः भाभाः किरणा यस्य । प्रसन्ना पङ्केरुहशोभा यस्मिन् तादृशो नाभिर्यस्य च ।

सा काऽपि राकाशशिदास्यदास्य-
मुद्रा समुद्रात्मजया जयाढ्या ।
शेषाद्रिभूषा जलदाविशेषा
पायादपायाद्वसतिः कृपायाः ॥ ७३ ॥

अन्यादृशी तार्क्ष्यरथा सुधाब्धि-
कन्यापदन्यासविशेषधन्या ।
मूर्तिर्मदार्तिं महनीयकीर्ति-
र्मुष्णातु कृष्णा विनतेष्वनुष्णा ॥ ७४ ॥

भवान् पुराणः पुरुषः प्रसिद्धो
वयोऽधिकं तावकवाहमाहुः ।
कापि त्वरा ते करिराजगर्जा-
काले कथङ्कारमभून्मुरारे ॥ ७५ ॥

नरे नरेऽहं धनचापलेन
नवं नवं व्यातनवं स्तवं यत् ।
ततस्ततं दोषमशेषमुच्चै-
स्तव स्तवः श्रीकमन च्छिनत्तु ॥ ७६ ॥

न मे मनो योषिदुरोजकुम्भे
न स्वीयडिम्भे न च शातकुम्भे ।
परं तु रन्तुः कमलालयायाः
पदारविन्दे रुचिमेव विन्दे[1] ॥ ७७ ॥

अभूरिवर्षोन्मुखमेघसुन्दरै-
रनाश्रितश्रीवृषशैलकन्दरैः ।
अनिन्दिरामन्दिरसङ्गजान्तरै-
रलं बतान्धै[2] रिह देवतान्तरैः ॥ ७८ ॥

त्वदङ्घ्रिपद्मैकधना धनान्तरं
न कामयन्ते न च साधनान्तरम् ।
अनन्तशैलेश भवन्तमेव यत्
फणन्त्युपायं च फलं च पण्डिताः ॥ ७९ ॥

नलिननयन नागशैलवासिन्
मलिनहृदामपि कल्मषापहन्तः[3] ।
जननमरणरोगदुःखशान्त्यै
चरणयुगं शरणं वृणे त्वदीयम् ॥ ८० ॥

गोवर्धनोऽपि शिरसा विधृतः किमन्य-
द्येन त्वयाधिजठरं सकलोऽपि लोकः ।
तस्मिन्निह त्वयि वृषाद्रिपतेऽहमात्म-
रक्षाभरं कृशतमो निदधामि दक्षे ॥ ८१ ॥

81. किमन्यत् लोकान्तर्गततदेकदेशगोवर्धनादिकीर्तनं कुतः । सकलोऽपि लोकोऽधि-जठरं विधृतो येन तस्मिन् ।

---

1. विन्देत् । 2. बलान्धैः । 3. ...पहारिन् ।

किं भो मनः कितवलम्पटशम्भलीनां
सम्भोगकेलिकिलिकिञ्चितसम्भ्रमेण ।
अम्भोजदम्भहरनेत्रयुगो यशोदा-
डिम्भो रसेन भवता परिरम्भणीयः ॥ ८२ ॥

मोट्टायितं त्रिदशपट्टणकुट्टिनीनां
दृष्टं विनष्टमिदमष्टनवैर्दिनैस्तत् ।
हृट्टीकतां स्थितिमदुष्टिनि शुक्समष्टि-
कुट्टाकदृष्टिनि धृतश्रिणि वस्तुनीदम् ॥ ८३ ॥

83. इदं प्रमाणसिद्धं बहुशोऽभिलषितम् विनष्टं दृष्टम् । 'क्षीणे पुण्ये' इत्यादिप्रमाणैः। तत् तस्मात् । अदुष्टं अदोषः तद्वति । 'वस्तुरत्ने' इति पाठान्तरम् ।

दम्भोलिपाणिपुटभेदनशम्भलीनां
वक्षोजकुम्भपरिरम्भसुखोपलम्भम् ।
मा नाम चीकमत[1] मानसमस्मदीयं
वैकुण्ठचिन्तनरसैर्वयमुत्सुकाः स्मः ॥ ८४ ॥

न मणीन् रमणीश्च सोऽहमीहे
न हयेभ्यः स्पृहये न वा गजेभ्यः ।
वरदस्शरदश्शतं दृशौ मे
भुजगाद्रौ शरणार्थिनो विनोतु ॥ ८५ ॥

कारागेहे संसृतिरूपे भ्रमतो मे
का रागे हे कृष्ण विवृद्धे मतिवार्ता ।

---

1. चिन्तयतु ।

नागोदाराहार्यपते मां स्वयमव्या
नागो दारालङ्कृतमूर्ते मम वीक्ष्यम् । ८६ ॥

वन्दारुषु मन्दारममन्दार्तिहरं ते
वन्दामह इन्दावपि निन्दावहमास्यम् ।
मार॥ गारादिसमाराधितमूर्ते
नारायण घोरादपचारादिह पायाः ॥ ८७ ॥

प्रधानाय सम्पन्निधानाय भक्त-
व्यथानाशदत्तावधानाय तुभ्यम् ।
समस्ताधिनाथ स्वमस्ताभिक्लृप्तं
नमस्तादिदं निस्तमस्ताविधायिन् ॥ ८८ ॥

नागराजाचले सागराग्र्यात्मजा-
कान्तबाहान्तरो दान्तबाधाहरः ।
वारिजाक्षश्श्रयत्पारिजातो जग-
द्राजते रक्षितुं राजतेजोमुखः ॥ ८९ ॥

मरुतां भगवन् मरुतां विरतिं
लषतां मिषतां द्विषतां ततयः ।
भवता मनुजीभवता मृदुतां
जहता महता निहता इह ताः ॥ ९० ॥

90. मरुतां देवानां मरुतां विरतिं प्राणोपरमम् । मरणं विनाशमित्यर्थः । गुरुताविरति-मिति पाठान्तरम् ।

किंचित्सञ्चिन्तये गोपीकिलिकिञ्चितवञ्चितम् ।
अञ्चितं ज्योतिरमरैरञ्जनाद्रावुदञ्चितम् ॥ ९१ ॥

सर्वदानन्दनिलयं सार्थयन्नवनीतहृत् ।
कृष्णस्त्वं वेङ्कटाधीश किं तु शैलेन धार्यसे ॥ ९२ ॥

92. कृष्णपक्षे नन्दनिलयम् । अन्यत्र आनन्दनिलयम् । सार्थयन् स्ववासेन सफलीकुर्वन् । नवनीतं हरतीत्येकत्र । नवनीतवत् अनुग्रहपेशलं हृत् हृदयं यस्येत्यन्यत्र । 'कृष्णस्त्वधारयच्छैलं त्वं तु' इति पाठान्तरम् ।

वृषाचलपते कृत्स्नविषादहरणक्षमम् ।
प्रपद्ये भवतः पादपयोरुहमहं कृशः ॥ ९३ ॥

मानयामो हरे न त्वामानयामो न ते मुदम् ।
पनायामोऽहह क्षुद्रान् धनायामोहतो हताः ॥ ९४ ॥

प्रपद्ये निरवद्यं तत्फणिभूधरभूषणम् ।
परब्रह्म हरब्रह्मदुर्लभं वल्लभं श्रियः ॥ ९५ ॥

अञ्जनमहीधरचरं जनमनीषा-
रञ्जनमधोक्षज निरञ्जनमिह त्वाम् ।
लोचनयुगीकृतविरोचनसुधांशुं
केचन भजन्ति भवमोचनमभिज्ञाः ॥ ७६ ॥

सञ्चरति योगिहृदि किञ्च रविबिम्बे
यो लसति नीलघनजालसममूर्तिः ।
निष्कृतिविहीनबहुदुष्कृतिसमुत्थं
सङ्कटमपास्यतु स वेङ्कटगिरीशः ॥ ९७ ॥

इन्दुकरबृन्दपरिकन्दलदमन्दा-
नन्दकरमन्दहससुन्दरमुखश्रि ।

निस्तुलमुपस्थितमुरस्स्थितवरस्त-
न्यस्तु मम शेषगिरिमस्तगतवस्तु ॥ ९८ ॥

प्रशमितपिशिताशं प्रास्तसंसारपाशं
कृतनतगदनाशं कीर्तिभिस्स्मेरिताशम् ।
नवजलदनिकाशं नागशैलप्रकाशं
परिहृतविषयाशं भावयामो रमेशम् ॥ ९९ ॥

कल्याणाभ्यामशेषाभ्युदयविभवसंपीडनक्रीडनाभ्यां
नाभ्यामभ्युद्गतस्य द्वियुगमुखशिशोः श्रूयमाणस्तवाभ्याम् ।
बोधामोदार्णवाभ्यां भुजगपरिबृढक्ष्माधरालङ्कृतिभ्यां
दिव्याभ्यां दंपतिभ्यां भवतु नम इदं देवतासेविताभ्याम् ॥*

---

इत्यात्रेयश्रीवेङ्कटाध्वरिकृतिषु
श्रवणानन्दे
श्रीनिवासस्तवे प्रथमशतकम्

## अथ द्वितीयशतकम्

---

श्रियः प्रियतमं सेवे शेषाचलशिरोमणिम् ।
महितं सुमनोबृन्दैर्मन्दारमिव मादृशाम् ॥ १ ॥

1. सुमनोबृन्दैः पुष्पसमूहैः हेतुभिः, देवसमूहैः कर्तृभिश्च ।

कमनीयैर्निजालोकैः कमलानन्दकारिभिः ।
तमसामपनेतारं तमेव हरिमाश्रये ॥ २ ॥

2. हरिं श्रीनिवासं सूर्यं च ।

परिष्कृताञ्जनधरं परं श्रुत्यन्तगोचरम् ।

लोचनं स्तौमि लोकानां किमप्यज्ञानमोचनम् ॥ ३ ॥

3. परिष्कृतमञ्जनं धरति; परिष्कृतोऽञ्जनाचलो येनेति च। कर्णान्तगोचरं वेदान्तगोचरं च। लोचनं तद्वदादरणीयं सर्वार्थप्रकाशकं च।

प्रतीपशरभारावलोपकं गजपालकम् ।

दधामि हरिमाश्चर्यं गुहाशयमिहाश्र(श?)ये ॥ ४ ॥

4. प्रतीपा ये शरभाः तेषामारावस्य लोपकम्। प्रतीपानां शत्रूणां रावणप्रभृतीनां यः शरभारः बाणसमूहः तस्यावलोपकं च।

अदृश्यं योगिवर्यैरप्यब्जदीप्तिकरं हरिम् ।

उपतिष्ठेऽधिकारुण्यमुद्यन्तमिव भास्करम् ॥ ५ ॥

देवतामादिमां वन्दे धृतां भुजगभूभृता ।

समुद्रमाश्रितामुर्वीं पृथुचापप्रसाधिताम् ॥ ६ ॥

6. भुजगभूभृता शेषाचलेन, सर्पराजेन आदिशेषेण च। समुद्रमाश्रितां शयनाय मेखलात्वेन च। पृथुना चापेन शार्ङ्गेण अलङ्कृतां, पृथोश्चक्रवर्तिनः चापेन समीकृतां च। उर्वीं महतीं भूमिं च।

आनन्दनिलयं वन्दे श्लाघ्यं दुग्धार्णवादपि ।

श्रीधरं यत्र जागर्ति परं ज्योतिर्निरञ्जनम् ॥ ७ ॥

7. जागर्ति। न तु निद्राति। तेन दुग्धार्णवादपि श्लाघ्यत्वम्।

प्रपन्नाभयदोसीति सत्यापय वचो मयि ।

नाळीकशब्द उचितः श्रीनिवासस्य ते यतः ॥ ८ ॥

8. नालीकशब्दः तवोचितः असत्यवचनं तव नोचितमित्यर्थः। तेन त्वदुक्तं 'सकृदेव प्रपन्नाय' इत्यादिकं वचः सत्यापय। कथं नालीकशब्द उचित इत्यत्राह श्रीनिवासस्येति। श्रियः लक्ष्म्याः निवासः वासस्थानं हि नालीकं पद्मम्। त्वं च श्रीनिवासः। अतो नालीकशब्दस्ते उचितः नालीकपदवाच्यत्वं युक्तमिति।

प्रपञ्चास्यमुपास्य त्वां नृपञ्चास्यति मानवः ।

करोषि तस्य यत्स्वामिन् करोषितमभीप्सितम् ॥ ९ ॥

9. प्रपञ्चः लोकः आस्ये यस्य तम् । तस्य आस्यं मुखमिति वा । सर्वकारणमिति पर्यवसितम् ।

वृषाचलेशस्य तुषारदीधिति-
त्विषा मुखेनार्तविषादहारिणः ।
मुदां निदानं द्युसदावलिस्तुतं
सदा पदाम्भोजमुदारमाश्रये ॥ १० ॥

सकृत्प्रपन्नाय कृशाय दैवतै-
रनाप्यमप्यर्पयसि स्थिरं पदम् ।
दयालुता माधव दुर्बलेषु हि
प्रभूत्तमानां परमं विभूषणम् ॥ ११ ॥

अजस्रमप्यब्धिसुतां वहन्नुर-
स्यजामधिष्ठाय सृजन् प्रजा हरे ।
भवत्यहो मन्मथजन्मभूर्भवान्
तथापि कन्दर्पजिताऽभिमन्यसे ॥ १२ ॥

त्व(कि)मिन्दुना तेन कलङ्कितेन यं
प्रबिभ्रतो नापगतान्धकारिता ।
तवैव वीक्षे मुखचन्द्रमद्भुतं
तमो मुरारे हरति स्मृतोऽपि यः ॥ १३ ॥

13. अन्धकारोऽस्यास्तीति अन्धकारी । तस्य भावः अन्धकारिता । अन्धकरिपुत्वं च ।

पतङ्ग उद्यन्नुपमानतां भव-
त्पदो नु(दोर्न)देव प्रतिवक्तु (पत्तु)मर्हति ।

असंशयं दुष्यति यस्य दर्शने
जनो ययोस्त्वभ्युदयं प्रपद्यते ॥ १४ ॥

फणाभृदद्रीश गुणालिभिः क्षमा-
घृणाविरोधिक्षपणादिभिश्श्रु(श्रि)तम् ।
प्रणामतस्त्वां निपुणाश्रयं त(-णः श्रयन् स)दा
नृणां पतीनेव तृणाव(य) मन्यते ॥ १५ ॥

मनस्तुरङ्गं विषयच्छटावटा-
न्तरे गभीरेव द(पत)यालुमाशु मे ।
वितु(क्र)ष्य दक्षं विरचय्य शिक्षया
हरे तदु(मु)च्चैरधिरोढुमर्हसि ॥ १६ ॥

स्थिरमङ्गलदायकं श्रितानां परमं धाम वृषाद्रिधाम वन्दे ।
स्मरमन्युमदैर्गदैरयुक्ता न रमन्ते हि यतोऽपरत्र युक्ताः ॥ १७ ॥

बलवैरिशिलावलेपलोपक्षमभू(भा)मण्डलभव्यदिव्यदेहम् ।
प्रणमस्त्रिदशा(शं) दृशोः पुरस्तात् परमं वस्तु तदस्तु निष्कलं मे ॥ १८ ॥

तरुणार्ककरावमर्शहृष्यन्नलिनाहंकृतिहुंकृतिप्रवीणम् ।
भवमोचन लोचनद्वयं ते भगवन्मामकमानसे चकास्तु ॥ १९ ॥

भुवनाभ्युदयावनान्तलील स्तवनादेव सतीहितार्थदातः ।
तव दास्यपदे मयीह शौरे भवदावानलपातिता न युक्ता ॥ २० ॥

20. स्तवनादेव सति भवत्स्तुतिकरणादेव सद्भूते । तव दास्यपदे त्वत्किङ्करत्वाश्रये मयि । यद्वा 'सत्पुरुषे स्तवनादेव ईहितार्थदातः' इति योजना ।

वृषशैलवनस्थलीविहारी मधुहारी सुमनश्शिरस्सु नित्यम् ।
निहिताङ्घ्रिरलंकृतागमान्तो मम चेतःकमले तु लालगीतु ॥ २१ ॥

21. भृङ्गसमासोक्तिरियं रूपकसङ्कीर्णा । मधुरसुरः तन्नाशको भगवान्; मधु क्षौद्रं तद्ग्राही च । सुमनश्शिरस्सु देवानां मूर्धसु पुष्पाणामूर्ध्वदेशेषु च । अलङ्कृतः आगमानां वेदानां अन्ताः उपनिषदो येन; अगमानां वृक्षाणामन्ता उपरिभागा येन च ।

धुतरो नमतां प्रसीद शार्ङ्गिन् इतरोपायविधावहं न शक्तः ।
तरणौ तरणे त्व[कृ]पां सृजन्तौ चरणौ ते शरणं वृणे शरण्यम्(ण्य) ॥ २२ ॥

22. तृतीयपादोऽस्फुटार्थः । कृपामिति पठित्वा एवं योजयितुं शक्यम्—तरणे संसारतरणविषये तद्धेतुभूतामित्यर्थः कृपां अस्मासु भगवतो दयां सृजन्तौ उत्पादयन्तौ अत एव तरणौ तारकौ' इति ।

इदमेव पदं सुरस्रवन्तीं जनयित्वा शिवयांबभूव शम्भुम् ।
इति माधव दर्शयन् करस्ते सततं लोचनगोचरो मम स्तात् ॥ २३ ॥

जगदण्डसहस्रभारखेदो जठरस्यातिकृशस्य जातु मा भूत् ।
इति तद्बलकल्पनाय कट्यां कलितं श्रीधर चिन्तये करं ते ॥ २४ ॥

नतिरस्तु तटिद्घनद्युतिभ्यां श्रितशेषाचलशृङ्गसङ्गतिभ्याम् ।
परिपालितभक्तसन्ततिभ्यां प्रथमाभ्यामनुरूपदम्पतिभ्याम् ॥ २५ ॥

हरिनीलनिभं हरेरुरस्तत्कलये श्रीः किल यत्र वर्तमाना ।
उषिता ध्रुवमुत्पलेऽपि नीले कमला पद्म इवेति सौति बुद्धिम् ॥ २६ ॥

गारुत्मतद्युतिविडम्बिनि कैटभारे
गाढे विराजति तवोरसि कौस्तुभोऽयम् ।
दीव्यत्तमालगहनाहितमेचकिम्नि
प्राच्यावनीधरतटे भगवानिवार्कः ॥ २७ ॥

सर्वज्ञमस्तकगृहीतकलस्य तस्य
भ्रातुर्विधातुमनसः परमं प्रक(ह)र्षम् ।

लक्ष्म्याः किमिङ्गितमवेत्य वृषाचलेन्दो
वक्त्रेऽर्धचन्द्रतिलकं वहसि प्रसन्नः ॥ २८ ॥

गोवर्धनं धृतवता गुणपूर्ण मूर्ध्ना
मन्थानमप्यचलमूढवता महान्तम् ।
अम्भोरुहाक्ष वहसे किमपक्षपातात
तं चारु काञ्चनमयं च [गिरिं सु] मेरुम् ॥ २९ ॥

प्रह्लादवारणविभीषणभानुसूनु-
पाञ्चालराजतनयाप्रमुखावनेन ।
तावद्बभूव तव नैव वृषाचलेन्दो
यावद्यशोऽतिकृशमाद्दशरक्षणेन ॥ ३० ॥

ग्राहग्रहेण विरटन् करटीव नैते
लोकान्तरागमविलम्बसहिष्णवो मे ।
इत्यस्मदाद्यलसदासरिरक्षिषातो
जागर्ति(र्षि) नाथ वृषभूभृति सावधाने(नः) ॥ ३१ ॥

यन्मेखलापरिलसन्मणिमञ्जुदीप्ति-
पीताम्बरस्सु(रं सु)मनसः कथयन्ति या(यं) च ।
यद्भोगिभूभृदिति यश्च हरे प्रसिद्धं
वासस्तवावहतु तच्च स च श्रियं नः ॥ ३२ ॥

32. हे हरे तव तद् वासः वस्त्रं च स वासः निवासः वासस्थानभूतः पर्वतश्च नः श्रियं करोतु । यत् वस्त्रं (कर्म) सुमनसः मेखलायां काञ्च्यां उदरबन्धने विलसद्भिर्मणिभिः मञ्जुः दीप्तिः यस्य तत् तथाभूतं पीताम्बरं कथयन्ति । यं च वासस्थानभूतं पर्वतं मेखलासु अधित्यकासु परिलसतां मणीनां मञ्जुभिर्दीप्तिभिः पीतं व्याप्तं अम्बरं गगनं यस्य तम् तथाभूतं कथयन्ति । यद् वस्त्रं भोगिभूभृत् सर्पराजोऽनन्त इति प्रसिद्धम् । 'निवासशय्यासनपादुकांशुकोपधान ..' इति 'சென்றால் குடையாம்... மணிவிளக்காம் பூம்பட்டாம்...' इति च । यश्च वासस्थानभूतः पर्वतः भोगिभूभृत् शेषाद्रिः इति प्रसिद्धः ।

अत्युन्नतं तिलकभूषितमायताक्ष-

मुद्भासिमेखलमुदारसहस्रपादम् ।

शेषाचलेशितरनन्तपदाभिधेयं

त्वां त्वद्गिरिं च सममेव विचिन्तयामः ॥ ३३ ॥

33. गिरिपक्षे तिलकपदेन अक्षपदेन च वृक्षाणामभिधानम् ।

अल्पेतरश्रमविकासकरैरसारै-

र्घोरैरलं तव[बत] लुलायकुलानुसारैः ।

काङ्क्षाधिकार्पणकृतत्रिदिवद्रुनिन्दे

वन्दे मुकुन्द भवतश्चरणारविन्दे ॥ ३४ ॥

34. लुलायेति । महिषतुल्यैः कुत्सितप्रभुभिः ।

अक्षाणि मे विषयपङ्कमलीमसानि

प्रक्षिप्य(-क्षाल्य) नाथ गुरुणा करुणारसेन ।

पादाम्बुजे ननु निजे अमृतप्रदो(दे) ष-

डेतानि तल्पदय(सङ्गमय) षट्पदकूजितानि ॥ ३५ ॥

मन्देतरस्फुरणमङ्गलकालमेघ-

सन्देहदायिसुषुमैकनिकायकायम् ।

वन्दे तमेव वरदं शरदम्बुजाक्षं

यं देवमाहुररविन्दगृहासहायम् ॥ ३६ ॥

कमलनयन दीव्यत्कौस्तुभोदारदीपं

भवनमवतु नस्तद्वाहुमध्याभिधानम् ।

प्रथितसदनुभावैस्सात्विकैर्भाव्यमानं

यदुतिलक समिन्धे यत्र शृङ्गारवत्वम् ॥ ३७ ॥

अनुचितमहमीदृङ्मुक्ततां यत्समीहे
मशकशिशुरिवोच्चैर्भक्त(मत्त)मातङ्गरूपम् ।
क्षममिदमथवा मे त्वां प्रपन्नस्य तूर्णं
तृणमपि वृषशैलाधीश दिव्यास्त्रयन्तम् ॥ ३८ ॥

विषद(ज)विततिरास्तामुत्पलं धिक् सरोगं
कृतमतिकठिनैस्तैर्गोत्रभिद्ग्रावभिश्च ।
नियतममृतदं ते निर्मितातङ्कभङ्गं
वपुरतिसुकुमारं वासुदेव स्तुतो(वेऽ)हम् ॥ ३९

प्रकृतिमहदहङ्कृत्यादिकं तत्त्वजातं
पुरुषमपि शरीरं तावकं सङ्गिरन्ते ।
मधुमथन परं
त्वमसि तदखिलश्रुत्यन्ततात्पर्यभूमिः ॥ ४० ॥

निखिलविहितहातॄन् नीतकालान्निषिद्धैः
निरुपधिकरुणाब्धिस्त्रातुमस्मानकस्मात् ।
विभुरपहतपाप्मा विश्वभूतान्तरात्मा-
प्यधिवससि वृषागाधित्यकां सत्यकामः ॥ ४१ ॥

पुनरपि जननीनां चेन्न कुक्षौ विविक्षा
निरवधिनि सुखे चेदस्ति साक्षादपेक्षा ।
चरणनलिनयुग्मे तावके देव के वा
शरणवरणमेते श्रीपते नाचरन्ति ॥ ४२ ॥

वरद मदपचाराः किञ्चिदालोचिताश्चे-
न्नलिननयन नालं नारकास्त्वत्मकॢप्ताः ।

वितरणकरुणाद्यास्त्वद्गुणाश्शीलिताश्चे-
दमृतमपि सुधान्धुं (सुरान्धः) स्वल्पमित्यप्यवैमि ॥ ४३ ॥

हृदि मम कलुषेऽस्मिन् पादपद्मं त्वदीयं
चरतु कथमिदं ते नाथ हन्तेति चिन्ताम् ।
दुरुपलसुतनूकृत्यद्भुतानःप्रहार-
प्रभृति चरितमस्य श्रीपते निर्धुनीते ॥ ४४ ॥

44. दुरुपलस्य मार्गस्थितस्य कस्यचित् पाषाणस्य सुतनूकृतिः स्त्रीरत्नत्वकरणम् । अद्भुतस्य अनसः शकटस्य असुरस्य प्रहारः । एतत्प्रभृति ।

अशरणं भगवन्नभिरक्ष मामयमहं भवतः करुणापदम् ।
प्रचुररोगगणेन च पाप्मनां ननु यतश्चयतः प्रसृतोऽस्म्यहम् ॥ ४५ ॥

45. पाप्मनां चयतः समूहेन च यतः यस्मात् कारणात् अहं प्रसृतः व्याप्तः ततः करुणापदम् ।

अतितरामपराधपरंपरां रचयतो मनुजानभिरक्षितुम् ।
कमलया सहखेलमभूषयन् हि(ह्वि)ततमं ततमञ्जनभूधरम् ॥ ४६ ॥

त्रिभुवनैकवदान्यमनन्यधीः किमपि नाथ भवन्तमिहार्थये ।
तव पदाम्बुजभक्तिमनुत्तमां कलय मे लयमेति यथा(या) तमः ॥ ४७ ॥

कृतबुधावमतीन् कुमहीपतीनिह विहाय मदीयगिरां चयः ।
मधुरिपुं भजतां मधुरस्फुरन्नवरसो वरसोमसुहृन्मुखम् ॥ ४८ ॥

विफलया विषयान्तरचिन्तया किमनयाऽपितु कामपि देवताम् ।
भज मनस्सुमनःप्रकरैः सदा नमसितामसिताम्बुधरोपमाम् ॥ ४९ ॥

49. नमसितां नमस्कृताम् ।

तव रमासख तुङ्गतमा क्षमा तमपि येन ररक्षिथ वायसम् ।
त्वदितरो निहतिं बत तत्र को न कुरुते कुरुतेऽपि कृतागसि ॥ ५० ॥

अपि कृतागसि तेऽञ्जनयत्क्षमां मयि रमा क्षणमप्यनया भवान् ।
मुररिपो वरिवर्ति कन(क.र)स्फुरद्वनजया न जयावहया विना ॥ ५१ ॥

मधुरिपो भवदीयभुजान्तरं मनसि मे लगताद् धृतकौस्तुभम् ।
स्फुरति यत्र हि मादृशगुप्तये सरसिजोरसिजोपमिताचला ॥ ५२ ॥

52. कमला । वक्षोजतुलितपर्वता ।

फणिपतिक्षितिभृत्तटभूषणे बलिरिपो हृदयं रिपुभीषणे ।
भवति रज्यति मूर्तिरिवोल्लसन्मरतके रतकेलिजुषः श्रियः ॥ ५३ ॥

फणिगिरौ हि स एव भवान्(वन्?) भवान्मितधियामवनार्थमवातरत् ।
अविरतं मुनयः कमलोल्लसत्पद हरे दहरे यमुपासते ॥ ५४ ॥

तावकं किमपि देव कञ्जभूवामदेववलशासनादिभिः ।
दैवतैरविरतं निषेवितं पादपङ्कजयुगं भजामहे ॥ ५५ ॥

अञ्चतां दुरितपुञ्जभञ्जनादञ्जनावनिधरावतंसकात् ।
अन्यमत्र नहि चित्तमान्ये मानये न च विरोधिहानये ॥ ५६ ॥

दासमाविधि(थ) कयामु(धु)नन्दनं दन्तिनं दशमुखानुजं घ(श्रि)तम् ।
श्रीनिवास चरितानि ते परं कानि वा न विक्रु[नु]तानि पण्डितैः ॥ ५७ ॥

राजमानविभवां महीमरुद्राजमानसविहाररहा(वा)सिकाम् ।
मानयामि फणिशैलदेवतामानयामि च तदङ्घ्रिमाशयम् ॥ ५८ ॥

58. महीमरुतां भूमिदेवानां ब्राह्मणानां राजानः श्रेष्ठाः महर्षयः तेषां मानसमेव विहारवासः क्रीडानिवासस्थानं यस्याः ताम् ।

देवकीतनय तावकी तनुरिन्दिराविहृतिमन्दिरायिता ।
आतनोति मम नूतनोत्पलश्यामला परमकोमला मुदम् ॥ ५९ ॥

प्रातराशयमहीशभूमिभृन्नेतराश(श्र)य रमापते मम ।
वीतरागविनुतात् त्वदुच्चकैर्नेतरानिह भजामि निर्जरान् ॥ ६० ॥

60. प्रातः काले मम आशयं मानसम् आश्रय ।

नीति(च)राजिमनुसृत्य नित्यमप्याचरामि विहितं न माधव ।
खेचराभिनुत नो मतिर्भवद्गोचरापि कृपयैव पाहि माम् ॥ ६१ ॥

मेघदर्पहरदीप्तिवैखरी शेखरीकृतपदाम्बुजा सुरैः ।
भाविता मुनिभिरादिदेवता सं(सा)वतादुःविता पदाऽवता ॥ ६२ ॥

दुर्वचप्रथिमगर्वचर्वितप्राज्ञमुद्भिरकृतरलं नृपैः ।
अञ्जनाद्रिचर कञ्जनाभ ते चिन्तये वपुररण्य(घस्य) शान्तये ॥ ६३ ॥

अप्रबुद्धमकृतत्वदञ्चनं कञ्जलोचन कृतात्मवञ्चनम् ।
भावितापरिचितप्रपञ्चनं पाहि चक्रधर मामकिञ्चनम् ॥ ६४ ॥

वरुणस्य भक्तिमरुणस्य शूलिनो वलशासनस्य वनजासनस्य वा ।
तनुतां च नो(नया-)त्व विनुतां सुरैस्समं स्मर गाढभक्तिरुरगाद्रिदेवताम् ॥ ६५ ॥

65. वरुणादिविषयां भक्तिं तनुतां अल्पत्वं नय । अन्यविषयां भक्तिं मा कार्षीरिति भावः । सुरैः ब्रह्मादिभिः समं अविशेषेण उत्कृष्टापकृष्टविभागमन्तरेण विनुतां उरगाद्रिदेवतां दृढभक्तिः स्मर ।

कमलाभिरामविमलायतेक्षणां
कमनीयमूर्तिममनीषिदुर्गमाम् ।
परमामुपस्थितरमामिमां मनो
भज गाढमेव भुजगाद्रिदेवताम् ॥ ६६ ॥

स्मरणं पदत्वभरणं मुकुन्द ते
भजनं पदाब्जभजनं च कीर्तनम् ।

स्तवनं गुणानुभवनं शुभालय-
व्रजनं च हन्ति वृजिनं शरीरिणाम् ॥ ६७ ॥

निजवैभवेन नहि केवलं स्वयं
तव सारसत्वमुपयाति लोचनम् ।
निजगोचरेऽपि पुरुषे परं रमा-
सख सारसत्वमुपपादयत्यदः ॥ ६८ ॥

68. सारसत्वं पद्मत्वम् । सारसत्वं पद्मत्वम् रजस्तमोभ्यामनभिभाव्यं सत्त्वगुणं च ।

रमया सदैव रममाण उच्चकै-
र्नरमानितस्त्वमिति नाथ साम्प्रतम् ।
नलिनायताक्ष परमेतदद्भुतं
नमदिष्टकार्यपि मदिष्टकार्यसि ॥ ६९ ॥

69. न इतः प्राप्तः अनितः । रमया अनितः रमानितः । न रमानितः नरमानितः । रमया सह सदैव रममाणस्य रमया अवियुक्तत्वं युक्तम् । मदिष्टकारिणः नमदिष्टकारित्वं यत् तदाश्चर्यम् । नरैर्मानितः नमतामिष्टकारीति वास्तवार्थः ।

दुरितानि साधु चरितानि वा जन-
स्तनुते मुकुन्द ननु ते प्रचोदनात् ।
उचिते स्तवं(वे) विरचितो(ते)पि मे [वचः-]
परिपोषणे मधुरिपो तव स्पृहा ॥ ७० ॥

70. सत्यं ममैव प्रचोदनात् । ततः किमित्यत्राह उचित इति । एतत्स्तवविरचनमपि त्वदिच्छाधीनमेव । मयि तथाऽनुग्रहः कृत इति भावः ।

उरगेशभूमिधरगेहमच्युतं
शरणं गतस्य तरणं भवाम्बुधेः ।

सुकरं ननु श्रमकरं यदाश्रयात्

कपयोपि नैव नपयोधिलङ्घिनः ॥ ७१ ॥

71. अन्यस्य श्रमकरमपि अच्युतं शरणं गतस्य सुकरम् ।

दलितोग्रचाप तुलितोभ्र(ग्र)गूढपा-

द्विषया त्वन(द?)न्यविषयाशया कृतम् ।

तव नागशैलभवनासदाशये

चिरमस्तु वीतविरमस्तु सन्निधिः ॥ ७२ ॥

72. दलितः उग्रस्य शिवस्य चापः येन तस्य सम्बुद्धिः । तुलितं उग्रं गूढपाद्विषं यया तया । अनन्या तदेकप्रवणा या शब्दादिविषयसम्बन्धिनी आशा तया । नागशैलभवनेति सम्बोधनम् ।

हृदयं प्रविश्य हृतसर्वकल्मषो

विदुषां विधातुमपवर्गमुत्सवम् ।

तनुते तदीयतनुषु प्रहर्षतः

पुरुषोत्तमं सु(मस्स)पुलकाङ्कुरार्पणम् ॥ ७३ ॥

मदमोहलोभमुखवैरिधूतये

परितापकारिदुरितापनीतये ।

किमपि सरामि कमला(ला)ब्धिकन्यका-

किलिकिञ्चितैकरसिकं परं महः ॥ ७४ ॥

अविच्छेदामोदा कलशजलराशेर्दुहितरि

स्फुरद्रागा नागाधिपशिखरिणीशादिमहिता ।

असौ दासत्रासक्षपणनिपुणा दुष्टदमने

कृतासक्तिव्य(र्व्य)क्तिर्निगमगणगीता विजयते ॥ ७५ ॥

विदित्वा तत्त्वार्थानपि विशदमाम्नायशिरसां
पुराणानि श्रुत्वाप्यसकृदपि बुद्ध्वा स्मृतिगिरः ।
समाजे स्थित्वापि श्रुतिनयविदां हन्त विदुषां (विषयान्)
न हातुं शक्तोहं नरकहर किं मे न दयसे ॥ ७६ ॥

धनायाभिः क्षुद्रं नृपमपि विना यादवनुतिं
व(प)नायानीतीच्छां जनयसि महायासजननीम् ।
अहन्तामाहत्म्यादसुरबलहन्तारमतुलं
न हन्तारे चेतो नयसि खलु चिन्ताविषयताम् ॥ ७७ ॥

77. अरे चेतः, न नयसि । हन्त ।

अशेषान् शेषाद्रेरधिप मम दोषान्निरसितुं
महत्प्रायश्चित्तं मधुमथन नैवास्त्यनुगुणम् ।
प्रपश्यन्नापीठान्मणिमकुटपर्यन्तमतुलं
पवित्रं गात्रं ते परमपुरुषाभूवमनघः ॥ ७८ ॥

स्पृहा दीनत्राणस्थिरबिरुदरक्षासु यदि ते
यशः प्राप्तुं व्याप्तं यदि च रुचिराशासु दशसु ।
तदाशेषैर्दोषैः शरणितमसंभावितगुणं
विपद्भ्यस्त्रायेथा वृषगिरिपते खिन्नमिह माम् ॥ ७९ ॥

79. रुचिः आशासु ।

नरं वा देवं वा कमपि नलिनाक्ष श्रु(श्रि)तवतां
प्रसिद्ध्यन्ते(न्तो) दृष्टाः परमभिमतार्थाः कतिपये ।
प्रपन्नानां त्वां नः परममधिपं ब्रूहि जगता-
महो कष्टं सिद्ध्यत्यभिलषितमद्यापि न कथम् ॥ ८० ॥

धनादित्सोपज्ञव्यसनजनितप्राणिविपदां

मही‌भृत्पाशानां मदनमदनद्धोग्रमनसाम् ।

मुखं दूरे हित्वा मुरमथन मे लोचनयुगं

वदान्यं वक्त्रं ते वरद शरदः पश्यतु शतम् ॥ ८१ ॥

81. महीभृत्पाशाः कुनृपतयः । मदनमदाभ्यां नद्धं आध्मातं मनो येषाम् ।

नियन्ता वि(न्तर्वि)श्वेषां नियतमनुकूलस्तव भव-

त्नपन्थानं मुञ्चन्नतिदृढमतिस्त्रास्यस इति ।

वृणानो गोप्ता स्याः स्वयमिति विमुक्तेतरगतिः

प्रपद्ये भीतोहं परमपुरुष त्वामभयदम् ॥ ८२ ॥

न दा(या)तुं न स्ता(स्ना)तुं न च रचयितुं ते स्तुतिगिरो

न दा(गा)तुं न ध्यातुं न कलयितुमाराधनमपि ।

न यष्टुं न स्प्रष्टुं किमपि तव तुष्ट्यै पटुरहं

शरण्यौ ते लक्ष्मीरमण शरणं यामि चरणौ ॥ ८३ ॥

अभक्त्या भक्त्या वा [सु]शुचिरशुचिर्वा मधुरिपो

सकृद्वा भूयो वा सकलफलदं त्वां स्मरति यः ।

निरातङ्कं तुङ्गं निखिलमपि दत्सेऽभिलषितं

न केषामाश्चर्यं जनयति तवौदार्यमतुलम् ॥ ८४ ॥

इति

श्रीपञ्चमतभञ्जनविख्याततातयज्वभागिनेयाप्तोर्यामादियज्वात्रेयवंशमौक्तिकाप्पयाचार्य

तनूभवश्लेषयमकचक्रवर्तिरघुनाथाचार्यतनयस्य श्रीनिवासकृपाविदितनयस्य

श्रीसीताम्बागर्भभवस्य काञ्चीनगरवास्तव्यस्य वेङ्कटाचार्ययज्वनः

कृतिषु श्रवणानन्दे प्रथमं शतकं सम्पूर्णम् ॥

श्रवणानन्दपद्येषु काठिन्यं यत्र लक्षितम् ।

श्रीशैलतातयाचार्यस्तत्रैवं विवृतिं व्यधात् ॥

श्रीरस्तु ।

# श्रीलक्ष्मीगद्यम् ।

श्रीवेङ्कटेशमहिषी श्रितकल्पवल्ली
पद्मावती विजयतामिह पद्महस्ता ।
श्रीवेङ्कटाख्यधरणीभृदुपत्यकायां
या श्रीशुकस्य नगरे कमलाकरेभूत् ॥ १ ॥

भगवति जयजय पद्मावति हे ॥ १ ॥ भागवतनिकरबहुतरभयकरबहुलोद्यमयमसद्मायतिहे ॥ २ ॥ भविजनभयनाशिभाग्यपयोराशिवेलातिगलोलविपुलतरोल्लोलवीचिलीलवहे ॥ ३ ॥ पद्मजभवयुवतिप्रमुखामरयुवतिपरिचारकयुवतिविततिसरतिसततविरचितपरिचरणचरणाम्भोरुहे ॥ ४ ॥ अकुण्ठवैकुण्ठमहाविभूतिनायकि ॥ ५ ॥ अखिलाण्डकोटिब्रह्माण्डनायकि ॥ ६ ॥ श्रीवेङ्कटनायकि ॥ ७ ॥ श्रीमति पद्मावति ॥ ८ ॥ जय विजयीभव ॥ ९ ॥ (१)

क्षीराम्भोराशिसारैः प्रभवति रुचिरैर्यत्स्वरूपे प्रदीपे
शेषाण्येषामृजीषाण्यजनिषत सुधाकल्पदेवाङ्गनाद्याः ।
यस्यास्सिंहासनस्य प्रविलसति सदा तोरणं वैजयन्ती
सेयं श्रीवेङ्कटाद्रिप्रभुवरमहिषी भातु पद्मावती श्रीः ॥ २ ॥

जयजयजय जगदीश्वरकमलापतिकरुणारसवरुणालयवेले ॥ १ ॥ चरणाम्बुजशरणागतकरुणारसवरुणालयमुरबाधनकरबोधनसफलीकृतशरणागतजनतागमवेले ॥ २ ॥ किञ्चिदुदञ्चितसुस्मितभञ्जितचन्द्रकलामदसूचितसम्पदविमलविलोचनजितकमलाननसकृदवलोकनसज्जनदुर्ज्जनभेदविलोपनलीलालोले ॥ ३ ॥ शोभनशीले ॥ ४ ॥ शुभगुणमाले ॥ ५ ॥ सुन्दरभाले ॥ ६ ॥ कुटिलनिरन्तरकुन्तलमाले ॥ ७ ॥ मणि-

वरविरचितमञ्जुलमाले ॥ ८ ॥ पद्मसुरभिगन्धमार्दवमकरन्दफलिताकृतिबन्धपद्मिनी-बाले ॥ ९ ॥ अकुण्ठवैकुण्ठमहाविभूतिनायकि ॥ १० ॥ अखिलाण्डकोटिब्रह्माण्ड-नायकि ॥ ११ ॥ श्रीवेङ्कटनायकि ॥ १२ ॥ श्रीमति पद्मावति ॥ १३ ॥ जय विजयीभव ॥ १४ ॥　(२)

श्रीशैलानन्तसूरेस्सधवमुपवने चोरलीलां चरन्ती
　चाम्पेये तेन बद्धा स्वपतिमवरयत्तस्य कन्या सती या ।
यस्याःश्रीशैलपूर्णश्श्वशुरिति च हरेस्तातभावं प्रपन्नः
　सेयं श्रीवेङ्कटाद्रिप्रभुवरमहिषी भातु पद्मावती श्रीः ॥ ३ ॥

खर्वीभवदतिगर्वीकृतगुरुमेर्वीशगिरिमुखोर्वीधरकुलदर्वीकरदयितोर्वीधरशिखरो-र्वीफणिपतिगुर्वीश्वरकृतरामानुजमुनिनामाङ्कितबहुभूमाश्रयसुरधामालयवरनन्दनवनसुन्द-रतरानन्दमन्दिरानन्तगुरुवनानन्तकेलियुतनिभृततरविहृतिरतलीलाचोरराजकुमारनि-जपतिस्वैरसहविहारसमयनिभृतोषितफणिपतिगुरुभक्तिपाशवशंवदनिगृहीतारामचम्पक-निबद्धे ॥ १ ॥ भक्तजनावनबद्धश्रद्धे ॥ २ ॥ भजनविमुखभविजनभगवदुपसदन-समयनिरीक्षणसन्ततसन्नद्धे ॥ ३ ॥ भागधेयगुरुभव्यशेषगुरुबाहुमूलधृतबालिकाभूते ॥ ४ ॥ श्रीवेङ्कटनाथवरपरिगृहीते ॥ ५ ॥ श्रीवेङ्कटनाथतातभूतश्रीशैलपूर्णगुरु-गृहस्नुषाभूते ॥ ६ ॥ अकुण्ठवैकुण्ठमहाविभूतिनायकि ॥ ७ ॥ अखिलाण्डकोटि-ब्रह्माण्डनायकि ॥ ८ ॥ श्रीवेङ्कटनायकि ॥ ९ ॥ श्रीमति पद्मावति ॥ १० ॥ जय विजयीभव ॥ ११ ॥　(३)

श्रीशैले केलिकाले मुनिसमुपगमे या भयात्प्राक्प्रयाता
　तस्यैवोपत्यकायां तदनु शुकपुरे पद्मकासारमध्ये ।
प्रादुर्भूताऽरविन्दे विकचदलचये पत्युरुग्रैस्तपोभिः
　सेयं श्रीवेङ्कटाद्रिप्रभुवरमहिषी भातु पद्मावती श्रीः ॥ ४ ॥

भद्रे ॥ १ ॥ भक्तजनावननिर्निद्रे ॥ २ ॥ भगवद्दक्षिणवक्षोलक्षणलाक्षाल-

क्षितमृदुपदमुद्रे ॥ ३ ॥ भञ्जितभव्यनव्यदरदलितदलमृदुलकोकनदमदविलसदधरो-र्ध्वविन्याससव्यापसव्यकरविराजदनितरशरणभक्तगणनिजचरणशरणीकरणाभयवितरणनि-पुणनिरूपणनिर्निद्रमुद्रे ॥ ४ ॥ उल्लसदूर्ध्वेतरापरकरशिखरयुगलशेखरनिजमञ्जि-ममदभञ्जनकुशलवदनविधुमण्डलविलोकनविदीर्णहृदयताविभ्रमधरदरविदलितदलकोमल-कमलमुकुलयुगलनिरर्गलविनिर्गलत्कान्तिसुमुद्रे ॥ ५ ॥ श्रीवेङ्कटशिखरसहमहिषीनिकर-कान्तलीलावसरसङ्गतमुनिनिकरसमुदितबहुलतरभयलसदपसारकेलिबहुमान्ये ॥ ६ ॥ श्रीशैलाधीशरचितदिनाधीशबिम्बरमाधीशविषयतपोजन्ये ॥ ७ ॥ श्रीशैलासन्नशुकपुरी-सम्पन्नपद्मसरउत्पन्नपद्मिनीकन्ये ॥ ८ ॥ पद्मसरोवर्यरचितमहाश्चर्यघोरतपश्चर्यश्री-कमुनिधुर्यकामितवदान्ये ॥ ९ ॥ मानवकर्मजालदुर्मलमर्मनिर्मूलनलब्धवर्णनिजस-लिलजवर्णनिर्जितदुर्वर्णवज्रस्फटिकसवर्णसलिलसम्पूर्णसुवर्णमुखरीसैकतसञ्जातसन्ततमक-रन्दबिन्दुसन्दोहनिष्यन्दसन्दानितामन्दानन्दमिलिन्दवृन्दमधुरतरझङ्काररवरुचिरसन्तत-सम्फुल्लमल्लीमालतीप्रमुखव्रततिविततिकुन्दकुरबकमरुबकदमनकादिगुल्मकुसुममहिमघुम-घुमितसर्वदिङ्मुखसर्वतोमुखमहनीयामन्दमाकन्दाविरलनारिकेलनिरवधिकक्रमुकप्रमुख-तरुनिकरवीथिरमणीयविपुलतटोद्यानविहारिणि ॥ १० ॥ मञ्जुलतरमणिहारिणि ॥ ११ ॥ महनीयतरमणिजिततरणिमकुटमनोहारिणि ॥ १२ ॥ मन्थरतरसुन्दर-गतिमत्तमरालयुवतिसुगतिमदापहारिणि ॥ १३ ॥ कलकण्ठयुवाकुण्ठकण्ठनाद-कलव्याहारिणि ॥ १४ ॥ अकुण्ठवैकुण्ठमहाविभूतिनायकि ॥ १५ ॥ अखिलाण्ड-कोटिब्रह्माण्डनायकि ॥ १६ ॥ श्रीवेङ्कटनायकि ॥ १७ ॥ श्रीमति पद्मावति ॥ १८ ॥ जय विजयीभव ॥ १९ ॥ (४)

यां लावण्यनदीं वदन्ति कवयः श्रीमाधवाम्भोनिधिं
गच्छन्तीं स्ववशंगतांश्च तरसा जन्तून्नयन्तीमपि ।
यस्यामाननेत्रहस्तचरणाद्यङ्गानि भूषारुची
रम्भोजान्यमलोज्ज्वलं च सलिलं सा भातुपद्मावती ॥ ५ ॥

अम्भोरुहवासिनि ॥ १ ॥ अम्भोरुहासनप्रमुखाखिलभूतानुशासिनि ॥ २ ॥ अनवरतात्मनाथवक्षस्सिंहासनाध्यासिनि ॥ ३ ॥ अङ्घ्रियुगावतारपथसन्ततसञ्चाहमान-

घोरतराभङ्गुरसंसारघर्मसन्तप्तमनुजसन्तापनाशिनि ॥ ४ ॥ बहुलकुन्तलवदनमण्डल-पाणिपल्लवरुचिरलोचनसुभगकन्धराबाहुवल्लिकाजघननितम्बमण्डलमयविततशैवालसम्फुल्लकमलकुवलयकम्बुकमलिनीनालोत्तुङ्गविपुलपुलिनशोभिनि ॥ ५ ॥ माधवमहार्णवगाहिनि ॥ ६ ॥ महितलावण्यमहावाहिनि ॥ ७ ॥ मुखचन्द्रसमुद्यतभालतलविराजमानकिञ्चिदुदञ्चितसूक्ष्माग्रकस्तूरीतिलकशूलसमुद्धतभीतिविशीर्णसमुज्झितसम्मुखभागपरिसरयुगलसरभसविस्रमरतिमिरनिकरसन्देहसन्दायिससीमन्तकुन्तलकान्ते ॥ ८ ॥ स्फटिकमणिमयकन्दर्पदर्पणसन्देहसन्दोहिसकलजनसम्मोहिफलफलविमललावण्यललितसततमुदितमुदितसुखमण्डले ॥ ९ ॥ महितम्रदिममहिममन्दहासासहिष्णुतदुदयसमुदितक्लमोदीर्णारुणवर्णविभ्रमदविडम्बितपरिणतबिम्बविद्रुमविलसदोष्ठयुगले ॥ १० ॥ परिहसितदरहसितकोकनदकुन्दरदमन्थरतरोद्गत्वरविसृत्वरकान्तिवीचिकमनीयामन्दमन्दहाससदनवदने ॥ ११ ॥ समुज्ज्वलतरमणितर्जिततरणिताटङ्कनिराटङ्ककन्दलितकान्तिपूरकरम्बितकर्णशष्कुलीवलये ॥ १२ ॥ बहिरुपगतस्फुरणाविगतान्तरङ्गणभूषणगणवदनकोशसदनस्फटिकमणिमयभित्तिशङ्काङ्कुरणचणप्रतिफलितकर्णपूरकर्णावतंसताटङ्ककुण्डलमण्डननिगनिगायमानविमलकपोलमण्डले ॥ १३ ॥ निजभ्रुकुटीभटीभूतत्र्यक्षाष्टाक्षद्वादशाक्षसहस्राक्षप्रभृतिसर्वसुपर्वशोभनभ्रूमण्डले ॥ १४ ॥ निटलफलकमृगमदतिलकच्छलविलोककलोकविलोचनदोषविरचितविदलनवदनविधुमण्डलविगलितनासिकाप्रणालिकानिगूढनिःसृतनासाग्रस्थूलमुक्ताफलच्छलाभिव्यक्तवदनबिलनिलीनकण्ठनालिकान्तःप्रवृत्तग्रीवामध्योच्चभागकृतविभागग्रीवागर्तविनिस्सृतपृथुलविलसदुरोजशैलयुगलनिर्झरझरीभूतगम्भीरनाभिह्रदावगाढविलीनदीर्घतरपृथुलसुधाधाराप्रवाहयुगलविभ्रमाधारविस्पष्टवीक्ष्यमाणविशुद्धस्थूलमुक्ताफलमालाविद्योतितदिगन्तरे ॥ १५ ॥ सकलाभरणकलाविलासकृतजङ्गमचिरस्थायिसौदामनीशङ्काङ्कुरे ॥ १६ ॥ कनकरशनाकिङ्किणीकलनादिनि ॥ १७ ॥ निजजनतागुणनिजपतिनिकटनिवेदिनि ॥ १८ ॥ निखिलजनामोदिनि ॥ १९ ॥ निजपतिसम्मोदिनि ॥ २० ॥ मन्थरतरमेहि ॥ २१ ॥ मन्दमिममवेहि ॥ २२ ॥ मयि मन आधेहि ॥ २३ ॥ मम शुभमवधेहि ॥ २४ ॥ मङ्गलमयि भाहि ॥ २५ ॥ अकुण्ठवैकुण्ठमहाविभूति-

नायकि ॥ २६ ॥ अखिलाण्डकोटिब्रह्माण्डनायकि ॥ २७ ॥ श्रीवेङ्कटनायकि ॥ २८ ॥ श्रीमति पद्मावति ॥ २९ ॥ जय विजयीभव ॥ ३० ॥ (५)

जीयाच्छ्रीवेङ्कटाद्रिप्रभुवरमहिषी नाम पद्मावती श्री-
जीयाच्चास्याः कटाक्षामृतरसरसिको वेङ्कटाद्रेरधीशः ।
जीयाच्छ्रीवैष्णवाली हतकुमतकथा वीक्षणैरेतदीयै-
र्जीयाच्च श्रीशुकर्षेः पुरमनवरतं सर्वसम्पत्समृद्धम् ॥ ६ ॥

श्रीरङ्गसूरिणेदं श्रीशैलानन्तसूरिवंश्येन ।
भक्त्या रचितं गद्यं लक्ष्मीः पद्मावती समादत्ताम् ॥ ७ ॥

॥ श्रीलक्ष्मीगद्यं सम्पूर्णम् ॥



श्रीरस्तु ।

## श्रीनिवासगद्यम् ।



श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिर्नस्तरङ्गयतु मङ्गलम् ॥ १ ॥

श्रीमदखिलमहीमंडलमण्डनधरणिधरमंडलाखण्डलस्य निखिलसुरासुरवन्दित-वराहक्षेत्रविभूषणस्य शेषाचलगरुडाचलवृषभाचलनारायणाचलाञ्जनाचलादिशिखरिमालाकुलस्य नाथमुखबोधनिधिवीथिगुणसाभरणसत्त्वनिधितत्त्वनिधिभक्तिगुणपूर्णश्रीशैलपूर्णगुणवशंवदपरमपुरुषकृपापूरविभ्रमदतुङ्गशृङ्गगलद्गगनगङ्गासमालिङ्गितस्य सीमातिगगुणरामानुजमुनिनामाङ्कितबहुभूमाश्रयसुरधामालयवनरामायतवनसीमापरिवृतविशङ्कटतटनिरन्तरविजृम्भितभक्तिरसनिर्झरानन्तार्याहार्यप्रस्रवणधारापूरविभ्रमदसलिलभरभरितमहाव-

टकमण्डितस्य कलिकर्दममलमर्दनकलितोद्यमविलसद्यमनियमादिममुनिगणनिषेव्यमाण-प्रत्यक्षीभवन्निजसलिलसमज्जननमज्जननिखिलपापनाशनपापनाशनतीर्थाध्यासितस्य मुरारिसेवकजराधिपीडितनिरार्तिजीवननिराशभूसुरवरातिसुन्दरसुराङ्गनारतिकराङ्गसौष्ठवकुमारताकृतिकुमारतारकसमापनोदयदमानपातकमहापदामयविहापनोदितसकलभुवनविदितकुमारधाराभिधानतीर्थाधिष्ठितस्य धरणितलगतसकलहतकलिलशुभसलिलगतबहुलविविधमलहतिचतुररुचिरतरविलोकनमात्रविदलितविविधमहापातकस्वामिपुष्करिणीसमेतस्य बहुसङ्कटनरकावटपतदुत्कटकलिकङ्कटकलुषोद्भटजनपातकविनिपातकरुचिनाटककरहाटककलशाहृतकमलारतशुभमज्जनजलसज्जनभरितनिजदुरितहतिनिरतजनसततनिर्गलपेपीयमानसलिलसम्भृतविशङ्कटकटाहतीर्थभूषितस्य एवमादिमभूरिमञ्जिमसर्वपातकगर्वहापकसिन्धुडम्बरहारिशम्बरविविधविपुलपुण्यतीर्थनिवहनिवासस्य श्रीवेङ्कटाचलस्य शिखरशेखरमहाकल्पशाखी खर्वीभवदतिगर्वीकृतगुरुमेर्वीशगिरिमुखोर्वीधरकुलदर्वीकरदयितोर्वीधरशिखरोर्वीसततसदूर्वीकृतिचणनवघनगर्वचर्वणनिपुणतनुकिरणमसृणितगिरिशिखरशेखरतरुनिकरतिमिरः । वाणीपतिशर्वाणीदयितेन्द्राणीश्वरमुखनाणीयोरसवेणीनिभशुभवाणीनुतमहिमाणीयस्तरकोणीभवदखिलभुवनभवनोदरः । वैमानिकगुरुभूमाधिकगुणरामानुजकृतधामाकरकरधामारिदरललामाच्छकनकदामायितनिजरामालयनवकिसलयमयतोरणमालायितवनमालाधरः । कालाम्बुदमालानिभनीलालकजालावृतबालाब्जसलीलामलफालाङ्कसमूलामृतधाराद्वयावधीरणधीरललिततरविशदतरघनघनसारमयोर्ध्वपुण्ड्ररेखाद्वयरुचिरः । सुविकस्वरदलभास्वरकमलोदरगतमेदुरनवकेसरततिभासुरपरिपिञ्जरकनकाम्बरकलितादरललितोदरतदालम्बजम्भरिपुमणिस्तम्भगम्भीरिमदम्भस्तम्भनसमुज्जृम्भमाणपीवरोरुयुगलतदालम्बपृथुलकदलीमुकुलमदहरणजंघालजङ्घायुगलः । नव्यदलभव्यकलपीतमलशोणिमलसन्मृदुलसत्किसलयाश्रुजलकारिबलशोणतलपदकमलनिजाश्रयबलबन्दीकृतशरदिन्दुमण्डलीविभ्रमदादभ्रशुभ्रपुनर्भवाधिष्ठिताङ्गुलीगाढनिपीडितपद्मासनः । जानुतलावधिलम्बिविडम्बितवारणशुण्डादण्डविजृम्भितनीलमणिमयकल्पकशाखाविभ्रमदायिमृणाललतायतसमुज्ज्वलतरकनकवलयवेल्लितैकतरबाहुदण्डयुगलः । युगपदुदितकोटिखरकरहिमकरमण्डलजाज्वल्यमानसुदर्शनपाञ्चजन्यसमुत्तुङ्गितशृङ्गापरबाहुयुगलः । अभिनवशाणसमुत्तेजितमहामहानीलखंडमदखंडननिपुणनवीनपरितप्तकार्त-

स्वरकवचितमहनीयपृथुलसालग्रामपरम्परागुम्फितनाभिमण्डलपर्यन्तलम्बमानप्रालम्बदीप्तिसमालम्बितविशालवक्षःस्थलः। गङ्गाझरतुङ्गाकृतिभङ्गावलिभङ्गावहसौधावलिबाधावहधारानिभहारावलिदूराहतगेहांतरमोहावहमहिममसृणितमहातिमिरः। पिङ्गाकृतिभृङ्गारुनिभाङ्गारदलाङ्गामलनिष्कासितदुष्कार्यघनिष्कावलिदीपप्रभनीपच्छवितापप्रदकनकमालिकापिशङ्गितसर्वाङ्गः। नवदल्तिदलवलितमृदुललितकमलततिमदविहतिचतुरतरपृथुलतरसरसतरकनकसर[म?]यरुचिरकण्ठिकाकमनीयकण्ठः। वाताशनाधिपतिशयनकमनपरिचरणरतिसमेताखिलफणधरततिमतिकरकनकमयनागाभरणपरिवीताखिलाङ्गावगमितशयनभूताहिराजजातातिशयः। रविकोटीपरिपाटीधरकोटीरवराटीकितवाटोरसधाटीधरमणिगणकिरणविसरणसततविधुततिमिरमोहगर्भगेहः। अपरिमितविविधभुवनभरिताखण्डब्रह्माण्डमण्डलपिचण्डिलः। आर्यधुर्यानन्तार्यपवित्रखनित्रपातपात्रीकृतनिजचुबुकगतव्रणकिणविभूषणवहनसूचितश्रितजनवत्सलतातिशयः। मड्डुडिण्डिमडमरुझर्झरकाहलीपटहावलीमृदुमर्दलालिमृदङ्गदुन्दुभिढक्किकामुखहृद्यवाद्यकमधुरमङ्गलनादमेदुरविस्मरसरसगानरसरुचिरसन्ततसन्तन्यमाननित्योत्सवपक्षोत्सवमासोत्सवसंवत्सरोत्सवादिविविधोत्सवकृतानन्दः। श्रीमदानन्दनिलयविमानवासः। सततपद्मालयापदपद्मरेणुसञ्चितवक्षस्स्थलपटवासः। श्रीश्रीनिवासस्सुप्रसन्नो विजयताम् ॥

श्रीरङ्गसूरिणेदं श्रीशैलानन्तसूरिवंश्येन।
भक्त्या रचितं हृद्यं गद्यं गृह्णातु वेङ्कटेशानः ॥

**श्रीश्रीनिवासगद्यं सम्पूर्णम् ॥**



श्रीः

# श्रीनाममौक्तिकमाला

श्रीयामुनकृता ।

---

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

---

श्रीनाममौक्तिकैर्माला यामुनार्येण निर्मिता ।
ऋषिसूक्तिसमुद्भूतैर्निर्दोषैः स्मृतिसागरे ॥ १ ॥

आराधनाय हरये जगदानन्ददायिने ।
श्रीनाथनायकपतिनारायणगुणान्विता ॥ २ ॥

सर्वकल्याणजननी जगन्मङ्गलवैभवा ।
मनीषिभिर्महाभागैर्वैष्णवैर्ध्रियतामियम् ॥ ३ ॥

---

१. श्रीमन्नारायणाद्रीश श्रीमन्नञ्जनशैलप ।
श्रीमद्वृषभशैलेन्द्र श्रीमत्सिंहनगाधिप ॥ ५* ॥

२. श्रीशेषगोलाभरण श्रीनिवासेति कीर्तये ।
अच्युतानन्त गोविन्द मुकुन्द गरुडध्वज ॥ ७ ॥

३. जगदानन्दजनक जगज्जन्मादिकारण ।
नारायण जगन्नाथ शरणागतवत्सल ॥ ५ ॥

*इमाः संख्याःश्लोकस्थनामपरिच्छेदिकाः ।

४. सत्यसङ्कल्प सर्वज्ञ सत्यकाम सनातन ।
निस्समाभ्यधिक स्वस्थ स्वे महिम्नि प्रतिष्ठित ॥ ७ ॥

५. त्रिविक्रम त्रिलोकेश शङ्खचक्रगदाधर ।
रमानाथ रसानाथ नीलानाथ निरञ्जन ॥ ७ ॥

६. नित्यनिर्दोष निस्सीममहाविभव शाश्वत ।
त्रिगुणातीत षाड्गुण्यपरिपूर्ण परात्पर ॥ ६ ॥

७. पुरुषोत्तम मानाथ पुण्यश्रवणकीर्तन ।
निर्विकार निरातङ्क नित्यानन्द निरामय ॥ ७ ॥

८. यज्ञेश यज्ञपुरुष पुण्डरीकाक्ष माधव ।
वासुदेव विभो विष्वक्सेन वैकुण्ठ वामन ॥ ९ ॥

९. नीलवर्णार्णवशय श्रीवल्लभ जगत्पते ।
त्र्यन्तगीतासंवेद्य सन्मङ्गळगुणाकर ॥ ६ ॥

१०. रमारमण राजीवदळचारुविलोचन ।
नित्ययौवनसौन्दर्यशील दिव्यगुणार्णव ॥ ४ ॥

११. वेदवेद्य विशालाक्ष विश्वम्भर धरापते ।
दाशार्ह देवदेवेश दामोदर दयानिधे ॥ ८ ॥

१२. धरणीधारकाधारनिलयाधोक्षजाव्यय ।
योगिध्येय जगद्वन्द्य जगत्स्वामिन् जनार्दन ॥ ८ ॥

१३. नरसिंह हयग्रीव हरे प्रह्लादवत्सल ।
लोकाधार पराधार आत्माधार धराधर ॥ ८ ॥

१४. रथाङ्गपाणे सर्वेश सर्वलोकसमाश्रय ।
भूतभव्यभवन्नाथ वेङ्कटाचलनायक ॥ ५ ॥

१५. कृष्ण विष्णो विशालाक्ष वैजयन्तीविराजित ।
क्षीरार्णवशयानन्त शरण्याश्रितवत्सल ॥ ८ ॥

१६. सर्वात्मन् सर्वलोकेश सर्व सर्वात्मनायक ।
करुणाकर कालज्ञ सर्वलोकनियामक ॥ ७ ॥

१७. मुञ्जीकेश हृषीकेश केशिमर्दन केशव ।
नरकान्तक काकुत्स्थ कालात्मन् कालपाचक ॥ ८ ॥

१८. करीन्द्रवरदानन्द श्रीधर श्रीनिकेतन ।
निरवद्य परब्रह्मन् सर्वलोकपदाश्रय ॥ ७ ॥

१९. नाथसेव्यपदाम्भोज वकुळाभरणाश्रय ।
रा[म] माराभिरामाङ्ग राम कृष्णेति कीर्तये ॥ ६ ॥

---

श्रीमद्वेङ्कटनाथमादिपुरुषं पूर्णं परं शाश्वतं
श्रीनाथं शरणागतार्तिहरणं नारायणं संश्रये ।
कृष्णं विष्णुमनन्तमच्युतमजं गोविन्दमिन्दीवर-
श्यामं नन्दकशङ्खचक्ररुचिरं ध्यायन् भजे कीर्तये ॥

येनैतत्पठ्यते नाम्नामष्टाविंशोत्तरं शतम् ।
अनिष्टपक्षक्षपणमिष्टावाप्तिरवाप्यते ॥

ओं नमो यामुनमुनये ।

## इति द्वितीयो भागः

अथ तृतीयो भागः

# श्रीशठकोपगाथा

श्रीरङ्गरामानुजमुनिकृतसंस्कृतविवरणसहिता ।

(१)

(तृतीयशतके तृतीयदशकम् ।)

एवं द्वितीयदशके स्वतनुविहितजगत्कृत्यत्वलक्षणसौभाग्ययोगं प्रतिपाद्य

" स्थानोत्कर्षात्सुदीप्तं श्रमहरवपुषं स्वाङ्गपर्याप्तभूषं
तेजिष्ठं नीचयोगात्प्रणमितभुवनं पावनं सन्नतानाम् ।
प्राप्यर्हस्थानमंहःप्रशमनविषयं बन्धविच्छेदिपादं
भेजे शीघ्राभियानक्षमशुभवसतिं लंभितार्चाभिमुख्यम् ॥

इत्युक्तरीत्या स्थानोत्कर्षादिभिः स्वेच्छासेव्याकृतित्वं तृतीयदशके प्रतिपादयति । अथ द्वितीयदशके भगवदनुभवप्रतिबन्धकं प्रकृतिसंबन्धं मत्वा तन्निवृत्तावपेक्षितायां प्रकृतिसंबन्धस्य स्वानुभवप्रतिबन्धकत्वाभावाविष्करणाय तदा श्रीवेङ्कटाचले साक्षात्कृतस्य भगवतः सर्वाधिकशेषित्वं, गुणविग्रहादिवैलक्षण्यं, नित्यसूरिसेव्यत्वं, सौशील्यातिशयं, भोग्यत्वं, सुकराश्रयणत्वं, तदाश्रयश्रीवेङ्कटाचलस्यैव परमसाम्यप्रदत्वं, अस्यैव सर्वप्रतिबन्धकनिवर्तकानुभवविषयत्वं, तद्देशसंबन्धप्रयुक्तं भगवतोऽनिष्टनिवर्तकत्वं, श्रीवेङ्कटाचलस्यैव परमप्राप्यत्वं इत्येतत्सर्वं उक्त्वा तादृशभगवद्विषयकैङ्कर्यमेव स्वरूपानुरूपपुरुषार्थ इति तृतीयदशके प्रतिपादयतीति संगतिरित्याहुः ।

*ஒழிவில் காலமெல் லாமுட னாய்மன்னி*
*வழுவி லாவடி மைசெய்ய வேண்டும்நாம்*
*தெழிகு ரலரு வித்திரு வேங்கடத்து*
*எழில்கொள் சோதியெந் தைதந்தை தந்தைக்கே.* ॥ 1 ॥

अवधिशून्यं कालं सर्वं सहचरित एव सन् स्थित्वा अन्यूनं कैङ्कर्यं, सर्वकैङ्कर्यमिति यावत्, अस्माकं कर्तव्यमित्यर्थः । गंभीरध्वनियुक्तनिर्झरयुक्ते श्रीवेङ्कटाचले

सौन्दर्ययुक्तज्योतिर्मयस्य, एतदुक्तं—"स्थानोत्कर्षात्सुदीप्त"मिति, अस्मत्स्वामिनः नाथनाथस्य सर्वस्वामिन इति यावत् । "வழுவிலா வடிமை செய்ய வேண்டும் நாம்" इति पूर्वेणान्वयः ॥ ॥ १ ॥

तस्य गुणविग्रहादिवैलक्षण्यमाह—

*எந்தை தந்தைதந் தைதந்தை தந்தைக்கும்*
*முந்தை வானவர் வானவர் கோனொடும்*
*சிந்து பூமகி ழுந்திரு வேங்கடத்து*
*அந்த மில்புகழ் காரெழி லண்ணலே.* ॥ 2 ॥

मदुत्पादकपरंपराया आद्युत्पादकः, नित्यसूरिनायकेन विष्वक्सेनेन सह नित्यसूरिभिः विकीर्णानां पुष्पाणां संस्पर्शेन विकासापादके श्रीवेङ्कटाचले वर्तमानः, निरवधिक-कीर्तिः, श्यामसुन्दरः, सर्वाधिकः, विग्रहगुणेन सौन्दर्येण च सर्वाधिक इत्यर्थः । यद्वा मेघः मेघसमानकान्तिरित्यर्थः । एतदेवोक्तं "श्रमहरवपुषम्" इति । अस्यां गाथायां (அண்ணல்) शब्दितं सर्वाधिकत्वं वा (முந்தை) शब्दितं सर्वकारणत्वं वा विधेयम् । यद्वा (சிந்துபூமகிழும்) इत्यत्र नित्यसूरिसमर्पितैः पुष्पैः हृष्यतीति योऽर्थः स एवात्र विधेयः । ॥ २ ॥

अनन्तरं तस्य नित्यसूरिसेव्यतामाह—

*அண்ணல் மாயன ணிகொள்செந் தாமரைக்*
*கண்ணன் செங்கனி வாய்க்கரு மாணிக்கம்*
*தெண்ணி றச்சுனை நீர்திரு வேங்கடத்து*
*எண்ணில் தொல்புகழ் வானவ ரீசனே.* ॥ 3 ॥

स्वामी आश्चर्यचेष्टितः आभरणालङ्कारयुक्तः, एतदेवोक्तम्—"स्वांगपर्याप्तभूष"मिति, रक्तांभोजनयनः रक्तबिंबफलसदृशाधरः नीलरत्नवदुज्ज्वलः स्वच्छसमीचीनवर्णयुक्त-पर्वतह्रदजलयुक्तश्रीवेङ्कटाचलवासी असंख्येयानादिकीर्तिशाली नित्यसूरिनायकः (அண்ணல்) इति पूर्वेणान्वयः । स एव सर्वाधिकः सर्वस्वामीत्यर्थः ॥ ३ ॥

अनन्तरं मदंगीकरणसौशील्यवतः तस्य नित्यसूरिसेव्यत्वेन स्तुतिः नाति-शयाधायिकेत्याह—

ஈசன் வானவர்க் கென்பனென் றாலது
தேசமோ திருவேங்கடத் தானுக்கு?
நீசனேன் நிறைவொன் றுமிலேனென்கண்
பாசம் வைத்த பரஞ்சுடர்ச் சோதிக்கே. ॥ 4 ॥

नित्यसूरीणां स्वामी इति वदानि । एवमुक्तौ तत् नित्यसूरिसेव्यत्वं श्रीवेङ्कटेशस्य तेजो वा । अतिशयो वेति यावत् । को वा अतिशयस्तेन लभ्यत इति भावः । नीचभूते गुणपूर्तिलेशशून्ये मयि स्नेहं कृतवतः तत्प्रयुक्तातिशयदीप्तिमतः एतदेवोक्तम्—"तेजिष्ठं नीचयोगादि"ति । ज्योतिर्मयविग्रहयुक्तस्येत्यर्थः । (அது தேசமோ) इति पूर्वेणान्वयः ॥ ॥ ४ ॥

अनन्तरं शीलवत्तामात्रमपि सौशील्यविशिष्टनिरतिशय भोग्यतायुक्तस्य नातिशयाधायकमित्याह—

சோதி யாகியெல் லாவுல குந்தொழும்
ஆதி மூர்த்தியென் றாலள வாகுமோ?
வேதி யர்முழு வேதத் தமுதத்தை
தீதில் சீர்த்திரு வேங்கடத் தானையே. ॥ 5 ॥

वैदिकानां सर्वेषु वेदेषु 'आनन्दो ब्रह्म' 'रसो वै स' इति प्रतिपादितनिरतिशयभोग्यभावं आश्रिततारतम्यविमर्शरूपदोषरहितकल्याणगुणाश्रयं श्रीवेंकटेश्वरं [प्रति] उज्ज्वलविग्रहविशिष्टस्सन् उत्कर्षापकर्षविभागमन्तरेण सर्वलोकसेव्यः, एतदेवोक्तम्—"प्रणमितभुवन"मिति, समस्तकारणभूतः इत्युक्त्या अतिशयो भवति किम् । परत्वयुक्तं समाश्रयणीयत्वं सौलभ्ययुक्तभोग्यतायास्समं न भवतीति भावः ॥ ॥ ५ ॥

अनन्तरं आश्रयणसौकर्यमाह-

வேங்க டங்கள்மெய்ம் மேல்வினை முற்றவும்
தாங்கள் தங்கட்கு நல்லன வேசெய்வார்
வேங்க டத்துறை வார்க்கு நமவென்ன
லாங்க டமைஅது சுமந் தார்கட்கே. ॥ 6 ॥

'वेङ्कटाचलवासिने नमः' इत्येवंरूपं स्वरूपप्राप्तं कायिकं मानसं वा व्यापारं, "कस्मैचिदंजलिभरं वहते वितीर्य" इत्युक्तरीत्या तं व्यापारं अनुष्ठितवतां अनुभव-

विनाश्यतया ऋणरूपाणि पूर्वार्जितपापानि समाश्रयणानन्तरभावीनि उत्तराघानि च समस्तानि दग्धानि भवन्ति सत्यमित्यर्थः। एतदेवोक्तम्—"पावनं सन्नतानां" इति। ये भगवद्विषये नमस्कारमनुतिष्ठन्ति ते स्वयं स्वेषां आत्महितमनुतिष्ठन्तीत्यर्थः। भगवन्नमस्कार एव हिततम इति भावः ॥ ॥ ६ ॥

तदाश्रयः श्रीवेङ्कटाचल एव परमसाम्यं प्रयच्छतीत्याह—

*சுமந்து மாமலர் நீர்சுடர் தூபங்கொண்டு*
*அமர்ந்து வானவர் வானவர் கோனொடும்*
*நமன்றெழும் திருவேங்கடம் நங்கட்கு*
*சமன்கொள் வீடுதரும் தடங் குன்றமே.* ॥ 7 ॥

सम्यक्तया देवाः देवाधिपैः ब्रह्मरुद्रेन्द्रादिभिस्सह सम्यञ्चि पुष्पाणि अर्घ्यजलं दीपं धूपं च (सम्यक्तया) शिरसा धृत्वा तत्समर्पणपूर्वकं प्रणम्य यत्र समृद्धार्था भवन्ति स श्रीवेङ्कटनामा महान् पर्वतः अस्माकं ब्रह्मसाम्यावहं मोक्षं प्रयच्छतीत्यर्थः। एतदेवोक्तम् "प्राप्यर्हस्थान"मिति। स्वप्राप्तियोग्यस्थानमित्यर्थः ॥ ॥ ७ ॥

भगवत्प्राप्तिप्रतिबन्धकनिवर्तकसेवाविषयत्वं श्रीवेङ्कटाचलस्याह—

*குன்ற மேந்திக் குளிர்மழை காத்தவன்*
*அன்று ஞாலம் அளந்தபி ரான்பரன்*
*சென்று சேர்திரு வேங்கட மாமலை*
*ஒன்று மேதொழ நம்வினை ஓயுமே.* ॥ 8 ॥

गोवर्धनपर्वतमुद्धृत्य शीतवर्षभयात् रक्षितवतः, पूर्वकाले लोकान् क्रान्तवतः, उपकारकस्य सर्वस्मात्परस्य, आगत्य समाश्रयणीयाधारभूते श्रीवेङ्कटमहाचले एकस्मिन्नेव सेविते अस्माकं सर्वाणि पापानि नश्यन्तीत्यर्थः। एतदेवोक्तम्—"अंहःप्रशमनविषय"मिति। पापनिवर्तकदेशस्थितमित्यर्थः। ॥ ८ ॥

अनन्तरं भगवतो विरोधिनिवर्तकत्वमपि तद्देशसंबन्धायत्तमित्याह—

*ஓயும் மூப்புப் பிறப்பிறப் புப்பிணி*
*வீயு மாறுசெய் வான்திரு வேங்கடத்து*
*ஆயன் நாண்மல ராமடித் தாமரை*
*வாயுள் ளும்மனத் துள்ளும்வைப் பார்கட்கே.* ॥ 9 ॥

ङ्कटाचलवासी कृष्णः सद्योविकसितचरणाम्भोजं वाचि च मनसि च निवेशयतां बलहानिकरजरा च जन्म च मरणं च व्याधिश्च येन प्रकारेण नश्यन्ति तं प्रकारं कर्तेत्यर्थः। एतदेवोक्तम्—"बन्धविच्छेदिपाद"मिति ॥ ॥ ९ ॥

अनन्तरं श्रीवेंकटाचलमेव परमप्राप्यतया भजध्वमिति स्वजनान् प्रत्युपदिशति—

*வைத்த நாள்வரை எல்லைகு றுகிச்சென்று*
*எய்த்தி ளைப்பதன் முன்னமந் அடைமினோ*
*பைத்த பாம்பணை யான்திரு வேங்கடம்*
*மொய்த்த சோலைமொய்ப் பூந்தடம் தாழ்வரே.* ॥ 10 ॥

विस्तृतफणिशयनस्य स्वामिनः वासभूतस्य श्रीवेङ्कटाचलस्य निबिडोद्यानयुक्तं सुन्दरतामरससरोयुक्तं कटकप्रदेशं क्लृप्ते कालावधौ सन्निहिते तत्कृतशैथिल्यं प्राप्य बलहानेः प्रागेव, मरणकालसंनिधानप्रयुक्तशैथिल्यबलहानेः प्रागेव, आगत्य समाश्रयतेत्यर्थः। एतदेवोक्तं—शीघ्राभियानक्षमशुभवसति"मिति। अशिथिलकरणत्वावस्थायामेव अधिगन्तव्यदेशमित्यर्थः॥ ॥ १० ॥

दशकस्य फलमाह—

*தாள்ப ரப்பிமண் தாவிய ஈசனை*
*நீள்பொ ழில்குரு கூர்ச்சட கோபன்சொல்*
*கேழி லாயிரத் திப்பத்தும் வல்லவர்*
*வாழ்வார் வாழ்வெய்தி ஞாலம்பு கழவே.* ॥ 11 ॥

चरणाम्भोजं प्रसार्य भूमिं आक्रान्तवतं स्वामिनमुद्दिश्य दीर्घोद्यानयुक्तकुरुकानिर्वाहकशठकोपप्रणीते सदृशरहितगाथासहस्रे मध्ये एतद्दशकं अभ्यसितुं समर्थाः सुखेन तिष्ठन्ति, कैङ्कर्यसाम्राज्यं प्राप्य, यथा लोकः श्लाघते तथेत्यर्थः॥ ॥ ११ ॥

(२)

(षष्ठशतके दशमदशकम्)

—•◦❀◦•—

உலக முண்ட பெருவாயா வுலப்பில் கீர்த்தி யம்மானே
நிலவுஞ் சுடர்சூ ழொளிமூர்த்தி நெடியா யடியே னாருயிரே
திலத முலகுக் காய்நின்ற திருவேங் கடத்தெம் பெருமானே
குலதொ லடியே னுனபாதங் கூடு மாறு கூறாயே. ॥ 1 ॥

एवं नवमदशके वियोगानर्हत्वं भगवतः प्रतिपाद्य—

" आपत्संरक्षणादर्युपकरणतया मेघसाम्यादिभूम्ना
स्वानां विश्वासदानात् सुरगणभजनाद्दिव्यदेशोपसत्त्या ।
प्राप्याप्राप्यत्वयोगात् स्वजनविजनयोस्सत्प्रयत्नान्यभावा-
दूचे नाथं शरण्यं श्रुतिशतविदितं वेङ्कटेशं शठारिः ॥ "

इत्युक्तरीत्या प्रपदनसुलभत्वेन शरण्यत्वमुपपादयति । पूर्वदशके परमपुरुषार्थलिप्सया आक्रुश्य फलसिद्ध्यै तच्चरणावेव शरणमिति निश्चित्य तस्याखिलजगद्रक्षकत्वं विरोधि-निवर्तकपरिकरयोगं उत्तुङ्गानुभाव्यत्वं जगद्विरोधिनाशकश्रीमत्त्वं लीलामात्रसाध्याश्रितर-क्षणक्रमं अतिशयितप्रभावाराध्यत्वं सर्वसाधारणसारस्यातिशयं ब्रह्मरुद्रादिसादराश्रयणी-यत्वं अतिशयितभोग्यावयवशोभां आश्रयणीयत्वाकारञ्चानुसन्धाय एवंभूतशरण्य-श्रीवेङ्कटेशविषये समग्रां शरणागतिं करोतीति सङ्गतिरित्याहुः ।

लोकग्रासिविपुलवदन; एतदेवोक्तम् " आपत्संरक्षणादि "ति । अवधिरहित-कीर्तियुक्तस्वामिन्, अभिवृद्धतेजोरूपप्रभाव्याप्ततेजोमयविग्रहयुक्त, सर्वोत्कृष्ट, दास-भूतस्य मम परिपूर्णप्राणभूत, लोकस्य तिलकवदलङ्कारतया स्थिते श्रीवेङ्कटाचले वसन् अस्मत्स्वामिन्, वंशपरम्परया अनादिदासोऽहम् । [तस्य मम]त्वच्चरणप्राप्ति-प्रकारं प्राप्त्युपायमिति यावत् वदेत्यर्थः ॥ १ ॥

கூறாய் நீறாய் நிலனாகிக் கொடுவல் லசுரர் குலமெல்லாஞ்
சீறா வெரியுந் திருநேமி வலவா தெய்வக் கோமானே
சேறார் சுனைத்தா மரைச்செந்தீ மலருந் திருவேங் கடத்தானே
யாறா வன்பி லடியேனுன் னடிசேர் வண்ண மருளாயே. || 2 ||

क्रूरबलवदसुरकुलं सर्वं खण्डतया भस्मतया मृद्रूपतया च यथा भवति तथा कृत्वा कोपात्प्रज्वलच्छ्रीसुदर्शनधरदक्षिणहस्त, एतदेवोक्तम् "अर्युपकरणतये" ति। नित्यसूरिनायक, पङ्कपूर्णेषु सरस्सु रक्ताग्निज्वालावत् विकस्वराम्भोजयुक्ते श्रीवेङ्कटाचले कृतनिवास, अपरिच्छेद्यप्रेमशालिनो दासस्य त्वच्चरणप्राप्तिप्रकारमनुगृहाणेत्यर्थः || २ ||

வண்ண மருள்கொ ளணிமேக வண்ணா மாய வம்மானே
எண்ணம் புகுந்து தித்திக்கு மமுதே யிமையோ ரதிபதியே
தெண்ண லருவி மணிபொன்முத் தலைக்குந் திருவேங்
[கடத்தானே
யண்ண லேயுன் னடிசேர வடியோர்க் காவா வென்னாயே. || 3 ||

मोहोत्पादकदिव्यविग्रह, दर्शनीयमेघस्वभाव, यद्वा दर्शनीयस्य मेघस्य वर्णः भगवद्विग्रहवर्णदर्शनेन साभिलाषो भवतीत्यर्थः। एतदेवोक्तम् "मेघसाम्यादिभूम्ने" ति। वर्णसादृश्यलिप्सुदृश्यमेघवर्णक इति पर्यवसितोऽर्थः। आश्चर्यगुणचेष्टित स्वामिन्, योगिनां हृदयं प्रविश्य मधुरामृतवदास्वाद्यमान, नित्यसूरिनायक, माणिक्यस्वर्णमुक्ताफलानि तरङ्गैश्चालयद्भिःस्वच्छैस्समीचीनैर्निर्झरैर्युक्ते श्रीवेङ्कटाचले कृतनिवास, स्वामिन्, त्वच्चरणप्राप्त्यै दासानामस्माकं हा हा इत्युक्तिपूर्वकं कृपां कुर्वित्यर्थः || ३ ||

ஆவா வென்னா துலகத்தை யலைக்கு மசுரர் வாணாண்மேற்
றீவாய் வாளி மழைபொழிந்த சிலையா திருமா மகள்கேள்வா
தேவா சுரர்கள் முனிக்கணங்கள் விரும்பும் திருவேங்
[கடத்தானே
பூவார் கழல்க ளருவினையேன் பொருந்து மாறு புணராயே. || 4 ||

हाहन्तेति दयामकृत्वा लोकस्य बाधकानां असुराणां प्राणविषये अभिमुख-

बाणवर्षवर्षिचापधर, श्रीमहादेवीवल्लभ, देवासुरमुनिगणाद्रियमाणश्रीवेङ्कटाचलवासिन्, पुष्पन्यास्तचरणयोः पापिष्ठस्य मम प्राप्त्युपायं कल्पयेत्यर्थः ।

*புணரா நின்ற மரமேழுன் றெய்த வொருவில் வலவாவோ*
*புணரேய் நின்ற மரமிரண்டி னடுவே போன முதல்வாவோ*
*திணரார் மேக மெனக்களிறு சேருந் திருவேங் கடத்தானே*
*திணரார் சார்ங்கத் துனபாதஞ் சேர்வ தடியே னெந்நாளே.॥ 5 ॥*

परस्परसंश्लिष्टतया स्थितानां सप्तसालवृक्षाणां, तस्मिन् रामवतारकाले, विद्धवन् एकधानुष्क, ओ इत्याश्चर्ये, एतदेवोक्तम् "स्वानां विश्वासदाना"दिति । परस्परसहिततया स्थितयोः द्वयोरर्जुनवृक्षयोः मध्ये गतवन्, जगत्कारणभूत, ओ इति पूर्ववत् । दार्ढ्यपूर्णमेघसदृशैर्गजैराश्रिते श्रीवेङ्कटाचले कृतवास, दार्ढ्यपूर्णशार्ङ्ग-धन्वनस्तव चरणयोः दासभूतस्य मम प्राप्तिः कदा वेत्यर्थः ॥ ५ ॥

*என்றென்றோ ணாம் மண்ணளந்த விணைத்தா மரைகள் [காண்பதற்கென்*
*றென்றா ளும்நின் றிமையோர்க ளேத்தி யிறைஞ்சி யினமினமாய்*
*மெய்ந்நா மனத்தால் வழிபாடு செய்யுந் திருவேங் கடத்தானே*
*மெய்ந்நா னெய்தி யென்னாளுன் னடிக்க ளடியேன் [மேவுவதே. ॥ 6 ॥*

अस्माकम् भूमिं मितवतः पुण्डरीकसदृशचरणयुगलस्य साक्षात्कारस्य सिद्धिः कदवा इत्याशया सर्वकालं स्थित्वा ब्रह्मरुद्रादिदेवाः स्तुत्वा प्रह्वीभूय संघीभूय कायवाङ्मनोभिः यत्र कैंकर्यं कुर्वन्ति तादृशे श्रीवेङ्कटाचले कृतनिवास, एतदेवोक्तम् सुरगणभजना"दिति । अहं असद्भावं प्राप्य(ममासद्भावप्राप्तिपूर्वकम्) त्वच्चरणयोः दासभूतस्य मम समाश्रयणं कदावेत्यर्थः । ॥ ६ ॥

*அடியேன் மேவி யமர்கின்ற வமுதே யிமையோ ரதிபதியே*
*கொடியா வடுபுள் ளுடையானே கோலக் கனிவாய் பெருமானே*
*செடியார் வினைகள் தீர்மருந்தே திருவேங் கடத்தெம் [பெருமானே*
*நொடியார் பொழுது முனபாதங் காண நோலா [தாற்றேனே. ॥ 7 ॥*

दासभूतेन मया आदरेणानुभूयमानामृतरूप, नित्यसूरिनायक, विरोधिबाधकं पक्षिणं गरुत्मन्तमिति यावत् ध्वजत्वेन परिगृहीतवन्, सुन्दरस्निग्धाधर स्वामिन्, वनवद्व्याप्तानां पापानां निवर्तकौषधभूत, श्रीवेङ्कटनिलय अस्मत्स्वामिन्, एतदेवोक्तम् —"दिव्यदेशोपसत्त्ये"ति। अङ्गुलिच्छोटिकापर्याप्तकालमपि त्वच्चरणारविन्दं द्रष्टुं उपायानुष्ठानं विना अवस्थातुं नोत्सह इत्यर्थः ॥ ॥ ७ ॥

நோலா தாற்றே னுனபாதங் காண வென்று நுண்ணுணர்வில்
நீலார் கண்டத் தம்மானும் நிறைநான் முகனு மிந்திரனுஞ்
சேலேய் கண்ணார் பலர்சூழ விரும்புந் திருவேங் கடத்தானே
மாலாய் மயக்கி யடியேன்பால் வந்தாய் போலே வாராயே.॥ 8 ॥

'त्वच्चरणारविन्ददर्शनाय उपायानुष्ठानमन्तरेण नस्थातुमुत्सहे' इत्येवमुक्तवद्भिः सूक्ष्मार्थज्ञानवासस्थानभूतैः नीलरूपव्याप्तकण्ठेन स्वामिना ज्ञानादिपूर्णेन चतुर्मुखेन इन्द्रेण मत्स्यसदृशनयनाभिः देवस्त्रीभिः परितः स्थिताभिः बहुभिः आद्रियमाणे श्रीवेङ्कटाचले कृतनिवास, स्वाभिरूप्येण व्यामोहजनककृष्णो भूत्वा मोहयित्वा तत्कालजनानां चक्षुर्विषयतया यथा आगतोऽसि तथा मद्विषयेऽपि आगच्छे-त्यर्थः ॥ ॥ ८ ॥

வந்தாய் போலே வாராதாய் வாரா தாய்போல் வருவானே
செந்தா மரைக்கட் செங்கனிவாய் நாற்றோ ளமுதே யெனதுயிரே
சிந்தா மணிகள் பகரல்லைப் பகல்செய் திருவேங் கடத்தானே
அந்தோ வடியே னுனபாத மகல கில்லே னிறையுமே. ॥ 9 ॥

केषांचिदाविर्भूत इव नाविर्भवसि। केषांचित्परिपक्वसुकृतानां अनाविर्भूत इवाविर्भूतः, एतदेवोक्तं—"प्राप्याप्राप्यत्वयोगात्स्वजनविजनयो"रिति, रक्तांभोजनयन, रक्तफलसदृशाधर, चतुर्भुजामृतरूप, मत्प्राणभूत, चिन्तितार्थप्रदमाणिक्यानां कान्तिभिः रात्रीः अहानि कुर्वाणे श्रीवेङ्कटाचले संनिहित हन्त दासभूतोऽहं त्वत्पादं क्षणमपि हातुं न शक्नोमीत्यर्थः ॥ ॥ ९ ॥

*அகல கில்லே னிறையுமென் றலர்மேல் மங்கை யுறைமார்பா*
*நிகரிற் புகழா யுலகமூன் றுடையா யென்னை யாள்வானே*
*நிகரி லமரர் முனிக்கணங்கள் விரும்புந் திருவேங் கடத்தானே*
*புகலொன் றில்லா வடியேனுன் னடிக்கீ ழமர்ந்து*
[புகுந்தேனே. ॥ 10 ॥

क्षणमपि हातुं न शक्नोमीति मन्यमानायाः पद्मालयदेव्याः निवासस्थानभूत-वक्षःस्थल सदृशरहितकल्याणगुण, त्रिलोकीनाथ, मम ईशान, सदृशरहितदेवमुनि-गणसेव्यमानश्रीवेङ्कटाचलवासिन्, शरणान्तरशून्यो दासभूतोऽहं त्वच्चरणमूले रेखावदन्तर्गतस्सन् आश्रितोऽस्मीत्यर्थः। एतदेवोक्तम् "सत्प्रपत्तव्यभावा" दिति ॥ ॥ १० ॥

*அடிக்கீ ழமர்ந்து புகுந்தடியீர் வாழ்மி னென்றென் றருள்*
[கொடுக்கும்
*படிக்கே ழில்லாப் பெருமானைப் பழனக் குருகூர்ச் சடகோபன்*
*முடிப்பான் சொன்ன வாயிரத்துத் திருவேங் கடத்துக் கிவை*
[பத்தும்
*பிடித்தார் பிடித்தார் வீற்றிருந்து பெரிய வானுள்*
[நிலாவுவரே. ॥ 11 ॥

चरणमूलं सम्यगाश्रित्य दासजनाः जीवत इत्येवं दयां कुर्वन्तं स्वप्रकार-समानरहितं सर्वाधिकमुद्दिश्य समीचीनकेदारयुक्तकुरुकाधीशशठकोपेन स्वकार्यसमाप्त्यर्थं प्रणीते अस्मिन् गाथासहस्रे श्रीवेङ्कटाचलविषयमेतद्दशकं उपायत्वेन आश्रितवतो जनानपि आश्रिता ये जनाः तेऽपि महति परमपदे सर्वातिशायिता(?)मासिकां प्राप्य नित्यानुभवं कुर्वन्तः सुप्रतिष्ठा भवन्तीत्यर्थः ॥ ॥ ११ ॥



ऋषिं जुषामहे कृष्णतृष्णातत्त्वमिवोदितम् ।
सहस्रशाखां योऽद्राक्षीद् द्राविडीं ब्रह्मसंहिताम् ॥

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः

श्रीमते शठकोपाय नमः

श्री श्रीनिवासपरब्रह्मणे नमः





PRINTED AT TIRUMALAI-TIRUPATI DEVASTHANAMS PRESS, TIRUPATI AND PUBLISHED BY THE DIRECTOR, SRI VENKATESVARA ORIENTAL INSTITUTE.